'सरस्वतीसेवा' योजना - ५६

# अनाथोऽसि !

अनु॰ - गु. गणपय्यहोळ्ळः

कन्नडमूलम् - डा॰ एस्. एल्. भैरप्पः



'सरस्वतीसेवा'योजना - ५६

# अनाथोऽसि !

कन्नडमूलम् -
**डा॰ एस्. एल्. भैरप्पः**

संस्कृतानुवादः -
**गु. गणपय्यहोळ्ळः**

**संस्कृतभारती**
देहली

प्रकाशनम् -
**संस्कृतभारती**
मातामन्दिरगली, झण्डेवाला
नवदेहली - ११० ०५५



प्रथमं मुद्रणम् - २०१२ - १५००

मूल्यं - रू. ११०/-

मुखपुटकला - **सुधाकरदर्बे**

मुद्रणम् -
**वागर्थ**
एन्. आर्. कालोनी, बेङ्गलूरु - १९

**ISBN 978- 93-81160-51-0**

**ANAATHOSI** - A translation of famous Kannada novel 'TABBALIYU NEENAADE MAGANE' written by **Shri S. L. Bhyrappa,** translated by **GUNDMI GANAPAYYA HOLLA** *Publisher* - **SAMSKRITA BHARATI,** Mata Mandir Gali, Jhandewalan, New Delhi - 110 055 Tel. & Fax - 011 - 2351 7689.

Pages - VI + 298 Price - Rs. 110.00 First print - Jan - 2012
Printed at - Vagartha, N. R. Colony, B'lore - 560 019

# गुरुभ्यः समर्पिता कृतिरियम्

- प्रायोजकः

---

गौः सर्वदेवतास्वरूपिणी इति पूजयन् काळिङ्गज्ञः, सा क्षीरमांसदायकं प्राणिमात्रम् इति परिभावयन् अमेरिकातः प्रत्यागतः पौत्रः इत्यनयोः मौल्यसंवेदनयोः मध्ये प्रवर्तमानः सङ्घर्षः एव एतस्य कथापुस्तकस्य वस्तु ।

प्रायः सर्वेषु अपि भारतीयभाषाक्षेत्रेषु श्रूयमाणस्य गोगीतस्य पृष्ठभूमिकया आरभ्यमाणः अयं कथाग्रन्थः भारतीयसंस्कृतेः मूलभूतानि मौल्यानि पृष्ठभूमौ दर्शयति ।

एतां कृतिम् आधृत्य कन्नडहिन्दीभाषाभ्यां निर्मिताभ्यां चलचित्राभ्यां राष्ट्रियान्ताराष्ट्रिय-मान्यता प्राप्ता अस्ति । एतस्य कथाग्रन्थस्य हिन्द्यनुवादेनापि अपारम् अभिनन्दनं प्राप्तम् अस्ति । एताम् उत्कृष्टां साहित्यकृतिं केचन परिभावयन्ति । प्रगतिविरोधिनीं, प्रतिगामि-मौल्यप्रतिपादिकाम् अत्यन्तं निकृष्टां कृतिं मन्यमानाः द्विषन्तोऽपि केचन सन्ति । प्रीतिद्वेषौ उभावपि प्रचोदयन्नयं गुणः कथाग्रन्थस्यास्य शक्तेः प्रतीकं भवति ।

---

# प्रास्ताविकम्

एतस्मिन् कथापुस्तके प्रस्तुतस्य ग्रामस्य भौगोलिकक्षेत्रं किं स्यादिति प्रश्नः वाचकानां मनसि सहजतया उद्भवेत् । किमपि निर्दिष्टं क्षेत्रं न भवेदिति धिया मया तस्य ताल्लूकु-जनपदादीनां नाम नोक्तम् । अत्र उपस्थापिता काळेनपल्ली तत्तद्वाचकानां पल्ली एव भवितुम् अर्हेत् । तस्याः पार्श्वे स्थितम् अरुणाद्रिगिरिं वाचकाः स्वग्रामस्य पार्श्वे अपि कल्पयितुम् अर्हेयुः ।

ग्रामस्य मौखिकभाषा देशस्थे कस्मिंश्चिदपि ग्रामे श्रूयमाणा भवितुम् अर्हेत् । 'धरणिमण्डलमध्यभागे विश्रुते कर्णाटदेशे' इत्यत्र 'कर्णाटम्' इत्येतत् परिवर्त्य 'भारतम्' इति पठ्येत चेत् हिन्दुस्थानस्य यः कोऽपि ग्रामः एतस्याः कथायाः क्षेत्रं भवितुम् अर्हेत् । प्रसङ्गानुगुणम् एकस्य ग्रामस्य द्वयोः ग्रामयोः वा नामपरिवर्तनं कल्पनाशक्तिमतां वाचकानां कृते न महत् क्लिष्टं कर्म ।

अत्र प्रस्तुता तायव्वा जन्मनः मूका । कथाम् एतां पठितवता बेङ्गलूरुस्थेन श्री डि.वि. अनन्तनारायणेन 'जन्मतः मूका जन्मना बधिरा अपि भवेत् ननु ?' इति पृष्टम् आसीत् । अनन्तरं मम सूचनानुसारेण तेनैव बेङ्गलूरुगतं कण्ठकर्णनासिकातज्ज्ञं डा॰ हिरण्णय्यं विचार्य, तेनैव लिखितम् अभिप्रायपत्रं मह्यं प्रेषितम् । 'तायव्वासदृशी जन्मनः मूकायाः अबधिरत्वम् असम्भवं तु न । किन्तु विरलम् । तादृशानां बुद्धिविकासस्तु ईषन्मन्दगतिः' इति तेन तज्ज्ञेन लिखितम् । एतादृशीं महिलाम् एकाम् अहं निजजीवने दृष्ट्वा जानामि । एतत् पात्रं न वैद्यशास्त्रविषयिका व्यक्तिः । तां मूकां कर्तुम् उद्युक्तः साहित्यकोद्देशः वाचकैः स्वयम् अवगम्यते । तावन्मात्रेण अलम् ।

**- एस्. एल्. भैरप्पः**

# अनुवादकवचनम्

सरस्वतीसम्मानभाजः डा० एस्.एल्.भैरप्पमहोदयस्य उपन्यासग्रन्थानां वाचकेषु अन्यतमेन मया 'तब्बलियु नीनादे मगने' इत्येषः कथाग्रन्थः अपि पठितः एव । तत्सम्बन्धि चलचित्रमपि दृष्टम् । किन्तु तस्योः संस्कृतानुवादकार्यं मयि आपतितम् इति तु अनर्कितोपनतम् । आत्मीयेन डा० विश्वासमहोदयेन स्वयं भैरप्पमहोदयस्य 'आवरण'स्य अनुवादकेन सता संस्कृतभारतीकार्यकर्त्रा कार्यमिदम् आरोपितं वर्षद्वयात् पूर्वमेव । गते वर्षे विश्वसंस्कृतपुस्तकमेलाशुभावसरे एतस्य लोकार्पणं भवेत् इत्यपि सङ्कल्पितम् आसीत् । विलम्बिताकारणतः तन्न शक्यम् अभवत् । इदानीं तु प्राकाश्यं नीयते इति प्रमोदास्पदम् ।

एतस्मिन् उपन्यासे ग्रामीणभाषापदानां प्रयोगः बहुधा वर्तते । तेषाम् अनुवादे क्लेशे अनुभूतेऽपि विश्वासमहोदयस्य सहकारेण सर्वं निरूढम् । अत्र भाषापाण्डित्यस्य नास्ति अवसरः । सर्वविधानां संस्कृतज्ञानाम् आनुकूल्यं यथा स्यात् तथा अनुवादः अपेक्षितः । तादृशं साधुत्वम् अत्र साधितं वेत्यत्र वाचकाः प्रमाणम् ।

गोगीतस्य संस्कृतानुवादः विदुषा त्यागलिरामचन्द्रशर्मणा बहोः कालात् पूर्वमेव कृतः आसीत् । अत्र प्रायः सः एव स्वीकृतः । येषां पद्यानां तदीयानुवादः न आसीत् तेषाम् अनुवादः मया यथामति विहितः ।

डा० भैरप्पमहोदयस्य अनुज्ञां सम्पाद्य माम् अनुवादाय प्रेरितवते डा० विश्वासमहोदयाय, संस्कृतभारत्यै, मुखपुटकलाकाराय, मुद्रकाय, अन्येभ्यः सहकारिबन्दुभ्यः च कृतज्ञताः हार्दम् अर्प्यन्ते ।

**खर सं।। पुष्यकृष्णचतुर्थी** **- अनुवादकः**

**१३.१.२०१२**

# भैरप्पवर्यस्य कृतयः अन्यभाषासु

*[भैरप्पवर्यस्य कृतयः कन्नडभाषया रचिताः । ताः बह्वीभिः भाषाभिः अनूदिताः सन्ति । कन्नडकृतेः नाम, यया भाषया अनूदितं तस्याः भाषायाः नाम च अधः सूचितम् अस्ति ।]*

धर्मश्री - संस्कृतं, मराठी
वंशवृक्ष - तेलुगु, मराठी, हिन्दी, उर्दु, आङ्ग्ल
नायि-नेरळु - गुर्जर, हिन्दी
तब्बलियु नीनादे मगने - हिन्दी
गृहभङ्ग - भारतस्य सर्वाभिः१४ भाषाभिः
निराकरण - हिन्दी
दाटु - भारतस्य सर्वाभिः १४ भाषाभिः, आङ्ग्लभाषया च
अन्वेषण - मराठी, हिन्दी
पर्व - तेलुगु, मराठी, बङ्गाली, हिन्दी, आङ्ग्ल, तमिळु
नेले - हिन्दी
साक्षि - हिन्दी, आङ्ग्ल
अञ्चु - मराठी, हिन्दी
तन्तु - मराठी, हिन्दी, आङ्ग्ल
सार्थ - संस्कृतं, हिन्दी, मराठी, आङ्ग्ल
मन्द्र - मराठी, हिन्दी
भित्ति - मराठी, हिन्दी
आवरण - संस्कृतम्, आङ्ग्ल
नानेके बरेयुत्तेने ? - मराठी, आङ्ग्ल
सत्य मत्तु सौन्दर्य - आङ्ग्ल

# प्रथमः अध्यायः

## 1

धरणिमण्डलमध्यभागे
विश्रुते कर्णाटदेशे
अस्ति काळिङ्गाख्यगोपः
तस्य चरितं वर्ण्यते ॥

इति ओचय्यमठेषु उत शासकीयशालासु छात्रैः गीयमानं पद्यं काळेरग्रामस्य काळिङ्गगौडेन गीयमानात् अस्मात् पद्यात् भृशं भिन्नमेव भवति । शालाच्छात्राणाम् एतद्पद्यात् आरभ्यमाणा गोकथा पाठ्यपुस्तकस्य एकः भागः । किन्तु काळिङ्गगौडस्य इयं कथा पूर्वजानां काले सञ्जाता सत्यघटना ।

पुण्यकोटिनाम्नी गौः स्ववत्समनुस्मृत्य सुष्ठु आगच्छति स्म । तदा –

अद्य लब्धं मम च भक्ष्यम्
इति वदन् सः दुष्टव्याघ्रः
मार्गमध्ये तां च धेनुं
निरुध्य तिष्ठति रंहसा ॥

तदा सा गौः व्याघ्रम् अवदत् –

पुण्डरीक ! श्रूयतां मे
प्रार्थनेयं पुत्रको मे
अस्ति गोष्ठे क्षीरपानं
कारयित्वाऽऽगम्यते ॥

इति अवदत् ।

अम्ब निधनं कुतो यासि
मामनाथं किं करिष्यसि
अत्र तिष्ठ मा प्रयाहि
वदति शावो मातरम् ॥
सत्यमेव मदीयपितरौ
सत्यमेकं बान्धवो मे
सत्यवाक्यातिक्रमो मे
न प्रियः परमात्मनः ॥

इति सा गौः स्ववत्सं धर्मम् उपदिश्य ततः प्रस्थाय प्रसमरे गिरिदुर्गमध्ये स्थितस्य अर्बुदनामकस्य व्याघ्रस्य सन्निधिम् आप्य –

खाद व्याघ्र ! मांसखण्डम्
पूर्णजठरं रक्तमुष्णम्
चण्डव्याघ्रास्वादय त्वं
भवतु परितोषस्तव ।

इत्युक्तः व्याघ्रः तस्याः सत्यसन्धतामभिनन्द्य –

मम हि समानोदरी त्वम्
तव च खादनलभ्यं किम्
तव च पादे पतित एव हि
प्राणानहं त्यजामि वै ।

इत्युक्त्वा –

त्रिमूर्तिदेवान् पाणिनाभिवन्द्य
अष्टदिक्षु प्रसार्य दृष्टिम्
उत्प्लुत्य गगनं सद्य एव
असूनमुञ्चयदासमम् ।

पुण्यकोटिरितीयं गौः स्वव्रजं प्रतिनिवृत्य व्याघ्राय मोक्षं वितीर्य शिवः मामारक्ष्य अपालयत् इति वदति । व्रजपतिः कालिङ्गगोपः पुण्यकोटिपदतले नमति । तदा सा –

मम कुलस्य गवां सङ्कुले

तव च वंशे गोपगणे
अग्रिमसङ्क्रान्तिपर्वपूर्वं
रम्यकृष्णं भजत रे ।

इत्यकथयत् । सः –

मदीयवंशस्य वर्ष एकं
सङ्क्रान्तिपर्वतः पूर्वमेव
क्षीरपायसमासमर्प्यम्
इति च उत्सवमाचरत् ।

## 2

काळेनपल्ल्याः कालिङ्गगौडः अस्याः पुण्यकोटिधेनोः वासास्पदस्य व्रजस्य अधिपतेः कालिङ्गगोपस्य वंशजः एव इत्यत्र विपुलः आधारः अस्ति । गोपानां कालिङ्गः इति गौडस्य नाम्ना एव एतस्याः पल्ल्याः काळेनपल्ली इति नाम आयातम् । अयम् अंशः मण्डलभौगोलिकेतिहासस्य लेखकैः आङ्ग्लराजैः एव संशोध्य निष्कर्षितः । काळेनपल्ल्याः अद्यापि अस्मत्कालिङ्गगौडः एव ग्रामगौडः । तस्य वंशे सदा द्वितीयसन्ततेः ज्येष्ठपुत्रस्य कालिङ्गगौडः इत्येव नाम विधीयते । तस्य गृहवर्तिना वंक्षवृक्षेण इदं स्फुटं भवति । अस्य कालिङ्गगौडस्य पितामहस्यापि नाम एतदेव आसीत् । पितामह–पितामहस्यापि तदेव नाम । अस्य गौडस्य पौत्रस्यापि – अधुना तस्य वयः एकं वर्षम् – कालिङ्गः इत्येव नाम निहितम् । एषः वत्सः गौडः भवेत् अग्रे प्रवृद्धः व्रजाधिपत्य–वहनानन्तरम् ।

अस्मद्गौडः पूर्वजस्य कालिङ्गगोपस्य वंशजः एव, परञ्च काळेनपल्ल्याम् एव पुण्यकोटिनाम्न्याः गोः कथा समभवत् इत्यत्र अन्योऽपि अस्ति असन्दिग्धः आधारः ।

रूढितोऽस्त्यरुणाद्रिगिरिः
ग्राममध्ये वर्ततेऽयं
रूढितोऽम्बरतोदनाभम्
निशम्य चित्रमभूत्तदा ।

पुण्यकोटिधेनोः कथा यत्र घटिता तस्य अरुणाद्रेः निम्नायाम् उपत्यकायाम् एव काळेनपल्ली विद्यते । साधारणरय अस्य गिरेः नाम कथम् अरुणाद्रिः इति निहितं स्यात् इति शङ्का अस्माकं भवति चेत् इतोऽपि निर्दिष्टता काळेनपल्ल्याः प्रदेशस्य लभ्यते ।

सृष्टिनिकरेऽरुणाद्रिगिरिः
गिरिमभितः सप्त गिरयः
द्वादशायतयोजनैश्च
अस्ति घनतारण्यगा ।

गिरिं परितः द्वादशयोजनविस्तारे विभिन्नाः सप्त गिरयः सन्ति । अरुणाद्रिम् आरुह्य मेघरहिते मध्याह्ने पश्यति चेत् एते सप्त गिरयः सम्यगेव दृश्यन्ते । पुरा गिरिवृत्तम् एतत् सर्वं सान्द्रारण्येन आच्छादितम् आसीत् इत्यत्र अधिकं साक्ष्यं नापेक्ष्यते । अस्मत्काळिङ्गगौडस्य समवयसां बालानां कालेऽपि तत्र भीकरम् अरण्यम् आसीत् । आम्र-नागचम्पक-जम्बू-तागि-चेन्नङ्गि-शमी-पाद्री-बकुल-त्रिन्त्रिणी-बिल्वतरवः सर्वदा व्यजृम्भन्त कानने । अश्वत्थ-वट-किंशुक-नारङ्ग-जाल-मल्लिका- हरिद्रा- श्रीगन्ध-कपित्थ-भूताल-वंश-नीपाः लीलया चित्तं रञ्जयन्ति । काळिङ्गौडेन एव वनस्य समन्तात् एते वृक्षाः आरोपिताः । किन्तु तस्य विंशतिवर्षवयसि एव, नाम त्रिंशद्वर्षेभ्यः प्राक् तत्रत्यानां वृक्षाणां छेदनम् आरब्धम् आसीत् । तेगवृक्षाः बृहन्नगराणां गृहनिर्माणाय गताः । आम्र-जम्बू-शमी-पाद्रयः नगरवासिजनानां काष्ठत्वं गताः, दग्धाश्च । श्रीगन्धवृक्षाः सर्वे सुगन्धितैल-निर्मापकयन्त्रागाराणि गत्वा तैलरूपेण फेनकरूपेण च विदेशं प्राप्ताः । पुरुषवृक्षाः प्रमुखाः एव अस्तित्वहीनाः चेत् नागचम्पक-पुन्नाग-बिल्व-कदम्बादीनि स्त्रीसस्यानि कथम् अवस्थितानि भवेयुः । अश्वत्थवृक्षोऽपि नास्ति, तस्य पत्नी निम्बलतापि न विद्यते । किन्तु वटवृक्षाः केवलम् इतोऽपि अवशिष्टाः ।

आस्माकीनस्य काळिङ्गगौडस्य वयः पञ्चाशत् वर्षाणि । तथापि सः उदयकाले प्रबुद्ध्य, नद्यां स्नात्वा, मदनतिलकं ललाटे संस्थाप्य, चतुरशिखां बध्नाति । दष्टमेखलां दुकूलवसनं धृत्वा, पदकमालां निबध्य, अङ्गुलौ मुद्रोर्मिकां धारयति । पर्वोत्सवदिनेषु केवलं चन्द्रगावियुतकं धृत्वा इन्द्रनीलशाटिकां परिधाय चन्द्रकान्तिछादकं सुष्ठु धरति ।

काळेनपल्ल्याः पुरद्वारस्थं गृहमेव काळिङ्गगौडस्य । गृहात् पृष्ठतः एव गोव्रजमस्ति । तथा भाव्यते चेत् तस्य गृहमेव गोव्रजमिति नात्युक्तिः । गृहस्य वीथ्यायाः द्वारसविधे

तत्कुटुम्बस्य वासः । पश्चात् उद्यानभागे सर्वस्मिन् गवां वासः । पाकाय केवलं तस्य गृहिणी, पुत्रः, स्नुषा, एकवर्षीयः पौत्रश्च इति एते सर्वे वीथीद्वारसमीपे एव वसन्ति । अन्यदा व्रजे एव तिष्ठन्ति । परःशतं गवां व्रजस्य समञ्जनं किं सुकरम् ?

व्रजस्य पृष्ठतः अधुनापि अम्रवृक्षः वर्तते । वृक्षतले वेणुं वादयन् गोपगौडः, उपानतान् वत्सान् स्वसमीपम् आह्वयति । तस्य व्रजे त्रयः विभागाः सन्ति । एकः हलस्य शकटानां च वाहकानां वृषभानाम् । अन्यः वत्सानाम् , अपरश्च केवलं धेनूनाम् ।

काळिङ्गगौडः एकैकस्याः अपि धेनोः नाम जानाति । एकैका अपि गौः स्वनाम जानाति । गौडेन नाम्ना आहूयते चेत् अनुपदमेव तन्नाम्नी गौः शिरः उन्नीय तदभिमुखं पश्यति । सः समीपागमनाय हस्तं प्रसारयति चेत् गौः तत्समीपं गत्वा, तस्य करं मुखं च आघ्राय, वस्त्रेण अनाच्छादितम् अङ्गभागं स्वरसनया दृततरं लेढि । चारणाय गोचरं यदि गच्छति तदा सः कतिवारं धेनूः नाम गृहीत्वा आह्वयति इति कः गणयितुं शक्नुयात् । 'हे पार्वति ! क्षेत्रं मा गच्छ, भोः लक्ष्मि ! आगच्छ, आगच्छ, गङ्गे ! आगच्छ गौरि ! किमर्थं तथा नृत्यसि ? गर्वः प्राप्तः त्वया किं नु ?' – इति आक्रोशति । 'गङ्गा, गौरी, तुङ्गभद्रा, पार्वती, सरस्वती, धर्मदेवी, रङ्गनायिका, सीता, कामधेनुः – इति सर्वदैवतानां नामानि तत्र निहितानि । एकैकस्याः अपि गोः नाम दशवारमपि नाम्ना आह्वयतः तस्य रसनया कतिवरं देवतानाम उच्चारितं स्यात् । प्रत्यहम् एतावत् पुण्यं सञ्चिन्वतः स्वस्य नरकवासः न भविष्यति एव इति विश्वासोऽपि तस्य हृदये अस्ति ।

सत्यवाक्यात् च्युतिम् अनाचरन्त्याः चण्डव्याघ्रस्य मुखं प्रवेष्टुं व्रजात् प्रस्थाय गुहां गत्वा ततः प्रतिनिवृत्य शिवकृपया सजीवं प्रत्यागतायाः पुण्यकोटिधेनोः सन्ततिः अद्यापि काळिङ्गगौडस्य व्रजे विद्यते । उन्नतत्वसमवेतम् अङ्गसौष्ठवं, भृशं धवलः वर्णः, उन्नतम् अपि तुम्फनेन कस्यापि अपायः यथा न स्यात् तादृशम् ईषन्नमितं शृङ्गद्वयं, सञ्चारेण भूतले स्फुटतया आकृतिम् उल्लेखयन्तौ खुरौ, सुन्दर्याः सुमङ्गलायाः ऋजुवेणी इव शोभमानं लाङ्गूलम् । तस्याः अङ्गरचनायाः ईषद्द्वारः इव भासमानम्, पार्श्वतः दर्शनेन पादद्वयस्य मध्येऽपि दृश्यमानं पीनतावत् ऊधः । विशालः उरोबन्धः, आयतस्य कण्ठस्य अधः मृदुतया लम्बमाना सास्ना । पुटकोटिसन्ततिः सदा एवमेव जायते । अग्रे आगमनेन न तुम्फति, पश्चादागमनेन न प्रहरति पादेन, यः कोऽपि वत्सः आगत्य स्वस्तन्यं पिबति चेदपि । वत्सस्य अबन्धनं तद्धेनुसन्ततेः स्वभावः आसीत् । तस्य पुरुषसन्तानमपि तादृशमेव । कर्मणि सदा अग्रे तिष्ठति । यं कमपि न तुम्फति,

घातकत्वं विहाय सदा स्मितमुखेन चर्वयति ।

काळिङ्गः कुपितः कदाचित् अन्यधेनूः उपालभते । 'तव बुद्धिः सम्यक् न विद्यते वा ? तव ताडनम् अनिवार्यमेव' इत्यादिः तर्जनोक्तिः निरर्गलम् आगच्छति चेदपि पुण्यकोटिसन्तानस्य तु कदापि तर्जनमिति न भवति । तद्वंशस्य गौः खलु सत्यवाक्यम् अनुल्लङ्घ्य, चण्डव्याघ्रस्य मुखे प्रवेष्टुं गता । अधुनापि सङ्क्रान्तिपर्वणि क्षीरपरमान्नोत्सवः क्रियते चेत् सः प्रथमतः पुण्यकोटिसन्तानं पूजयति ।

## 3

काळिङ्गगौडः जात्या गोपः । तदुक्तरीत्या सः एकः एव गोपजातीयः इति न विद्यते । प्रत्येकं पुरुषः गोपगौडः । प्रत्येकं महिला गोपी । गां या पालयति सैव गोपी । यः गां पालयति सः एव गोपः । महर्षिप्रमुखैः अपि गोपालनं'विहितम् आसीत् । ऋषिपत्न्यश्च गां पूजयन्ति स्म । ते न गोपाः किं नु ? गङ्गडिकारः, दासगौडः, नोणबः, बणजिगः, हारुवः इति अन्तर्वर्गाः शतशः स्युः । परन्तु एते सर्वे गोपकुलान्तर्गताः वर्गाः एव । गोपीचन्दनधारिणः भवन्तु उत भस्मधारिणः । एतेषु कोऽत्र गोः अपूजकः स्यात् ?

काळिङ्गगौडः न अनक्षरज्ञः । मुखेन गोकथायाः पद्यानि गीत्वा अर्थं प्रतिपादयति । जैमिनीयभारतेऽपि कांश्चन सन्धीन् निरूपयितुं शक्नोति । गदुगभारतं न शिक्षणेन अधीतं तथापि अन्यः कोऽपि वदति चेत् अर्थं ग्रहीतुं शक्नोत्येव । काळेनपल्लीतः मीलद्वयदूरस्थे अग्रहारे ब्राह्मणज्यौतिषिकाः विद्यन्ते । ते एव समन्तात् स्थितानां ग्रामाणां पुरोहिताः । काळिङ्गगौडात् पञ्चवर्षैः कनीयान् नरसिंहजोयिसः न केवलं संस्कृताध्यायी, अपि तु वेदपुराणानाम् अध्येता इति दूरग्रामस्थजनाः अपि वदन्ति स्म । नरसिंहजोयिसः यदा काळेनपल्लीम् आगच्छति अथवा काळिङ्गगौडः एव अग्रहारं गच्छति तदा जोयिसमेव पृच्छति स्म – 'नरसप्प ! भवता बहु पठितम् अस्ति । भवानेव वदतु, ऋषिमुनयः सर्वे न गोपाः किमु ?'

'सत्यं, सत्यम्' इति वदन् जोयिसः तद्वाक्यम् अङ्गीकरोति । मन्त्रमपि एकं पठति – 'माता रुद्राणां दुहिता वसूनां स्वसाऽदित्यानाममृतस्य नाभिः.... । रुद्रस्य माता, वसूनां पुत्री, अमृतस्य निधिः, त्रयस्त्रिंशद्देवताः सर्वाः तस्यामेव प्रतिष्ठताः इति यस्य कस्यापि देवस्य पूजनेऽपि गोपूजा कृता इव भवति । देवपूजकाः सर्वे गोपाः एव ।'

काळिङ्गगौडः नैतदवधि क्षीराशया गां पाति। क्षीराशया यः कोऽपि मातरं पालयति किम् ? एतद्विषये तस्यैव वादसरणिः अस्ति – मातुः वयं लब्धजन्मानः, जननानन्तरं तस्याः स्तन्ये दुग्धे अस्माकं प्रीतिः वर्धते। किन्तु क्षीराशया एव मातरम् आनेतुं शक्यते वा ? तथा आनेतुं माता इत्येषा लभ्यते किम् ? गौः अपि तथा। गोमाता भूमाता, जन्मदा माता – एताः तिस्रः कः अनेतुं शक्नुयात् ? गौः मनुष्येभ्यः क्षीरं दातुं विद्यते– इति उक्तं चेत् सः नाङ्गीकरोति। अस्मज्जन्मदा माता गोवत्सस्य किमर्थं क्षीरं न दद्यात् ? तथैव गोः क्षीरं वत्साय विवर्धते। किन्तु मानवमातुः अपेक्षया गोमातुः पुण्यम् अधिकं भाति। तस्य स्तनाः इतोऽपि बृहद्गात्राः। तेन वत्साय दत्त्वा शेषं मनुष्याय दातुमपि पर्याप्तं क्षीरं तस्याः स्तनेषु उत्पद्यते। तन्नाम तद्वत्सेन पानानन्तरम् अवशिष्टं क्षीरम् अस्मदीयं भवेत्' – इति तस्य वादः। सः व्रजे यां कामपि गां दोग्धि पयः चेत् वत्सम् आकृष्य अन्यत्र न बध्नाति स्म। एकस्मिन् पार्श्वे स्तनद्वयेन क्षीरं पिबेत् वत्सः। अन्यत्र स्तनद्वयात् गौडस्य पत्नी अथवा स्नुषा क्षीरं दुह्यात्।

धेनूनां बन्धनाय व्रजे पृथक् विभागः आसीत्। एकैकस्याः अपि धेनोः पृथक् पृथक् स्थाली द्रोणी च अस्ति। किन्तु तासां वत्सान् तेषां वासभूमौ धान्यां समाहरन्ति। अतीव बालान् वत्सान् रात्रिसमये गौडः, तस्य पत्नी, पुत्रः स्नुषा च स्वस्वकम्बलास्तरणे शाययन्ति स्म। वत्साः जातु कम्बलेषु मूत्रम् उत्सारयन्ति चेत् नास्ति खेदः तेषाम्। 'अस्मदपत्यं किं न मूत्रम् उत्सारयति ? तद्वत् गोवत्साः। मनुष्यमूत्रात् वत्समूत्रं वरम्। तत्तु पञ्चगव्येषु एकतमम्' – इति भावयन्ति। वत्सः अस्ति चेत् वत्सेन, नो चेत् गवा प्रत्यहं पृष्ठतः जिह्वा न चाल्यते चेत् गौडस्य निद्रा एव नायाति। मध्येरात्रे पार्श्वलुण्ठनेन ईषत् जागरितश्चेदपि सः स्वपार्श्वे स्थितं वत्सम् उद्वर्त्य तेन सह किञ्चित् सम्भाष्य एव पुनः निद्रितः घोरिकां विदधाति स्म।

प्रातः उत्थाय कलशेन पाणिपादं प्रक्षाल्य पूर्वदेवम् अभिवन्द्य गोदोहनाय वत्सान् गोसमीपं नयति चेत् प्रत्येकं वत्सः विना प्रमादं साक्षात् स्वमातृसमीपमेव गत्वा स्तन्यं पिबति स्म। प्रसूं मातरं विस्मर्तुं मनः अभूद्वा तेषाम् इति उदाहरति काळिङ्गगौडः।

## 4

गौडस्य गृहिणी लक्कम्मा कस्मिंश्चित् दिने प्रातः गोव्रजे क्षीरं दुहन्ती आसीत्।

स्नुषा तायव्वा रुदन्तम् एकवर्षीयं स्वशिशुं स्तन्यं पाययितुं समीपे एव स्थित्वा चोलम् अपसारितवती । मुखे स्तनस्य पूर्णतया प्रवेशनेनापि शिशोः रोदनं न स्थगितम् आसीत् । 'सम्यक् वक्षः पायय लग्गि' – इति श्वश्रूः उक्तवती । तदा किङ्कर्तव्यतामूढा तायव्वा श्वश्रूं तदेकदृष्ट्या अपश्यत् । तायव्वा वक्तुत् असमर्था आसीत्, सा जन्मतः मूका ।

* * *

तस्याः स्नुषात्वेन आनयने 'दत्तभाषा नातिचर्येत' इत्येषः धर्मः हेतुः । काळिङ्ग–गौडस्य भागिनेयी सा यदा त्रिवर्षीया बालिका तदा गौडस्य एकाकी पुत्रः कृष्णः अष्टवर्षीयः बालकः । सोदरसम्बन्धः ततोऽपि योग्यः, इतोऽपि योग्यः । त्रिवर्षीया भागिनेयी स्नुषा अग्रिमदिनेषु स्वपुत्राय आनेष्यते इति कदाचित् सम्भाषणावसरे गौडेन भगिन्यै आवुत्ताय च भाषा दत्ता आसीत् । तदापि सा भाषितुं नारब्धवती आसीत् । तृतीयवर्षवयासि कियन्तः बालकाः वक्तुं न पारयन्तीति गौडः किं न जानाति ? अतः गौडेन तद्विषये तदा आलोचनीयः विषयः कोऽपि नासीत् । परन्तु अग्रे अष्टवर्षेषु गतेष्वपि सा बालिका भाषितुम् अशक्ता आसीत् । देवेभ्यः सेवाप्रार्थना विहिता, साधुसद्भिः मन्त्रप्रयोगोऽपि कारितः । मळेयाळिनां तन्त्रमपि प्रवृत्तम् । तथापि तस्याः जिह्वा वक्तुम् असमर्था आसीत् । तायव्वा जन्मतः मूका इति सर्वैः अवगतम् अभूत् । सा स्वपुत्राय आनेया इति भाषाङ्गीकारः गौडस्य स्मृतिपथे न नासीत् । किन्तु तद्विषये नाधिकम् आलोचितम् आसीत् ।

परन्तु भगिनी द्यावक्का पुत्र्याः विवाहविषयम् अग्रजाय प्रस्तुतवती यदा तदा गौडेन एव 'अम्ब, बाला मूका, सा कथम् आनेया ? भवती एव वदतु' इति उक्तम् ।

'अग्रज, विवाहवचनावसरे सा मूका वा भाषिणी वा इति केन ज्ञातम् आसीत् ? तव वत्सस्य समर्था कन्या, त्वयैव अभ्युपगतम् । अधुना मूका इति उक्तां भाषाम् अतिचरति किं नु ?'

काळिङ्गगौडेन उक्ता भाषा कथम् उल्लङ्घयितुं शक्या ? 'सत्यमेव मदीयपितरौ सत्यमेकं बान्धवो मे सत्यवाक्यातिक्रमो मे न प्रियः परमात्मनः ।' तद्वंशपरा, अधुना मदीये एव व्रजे स्थिता पुण्यकोटिः इत्याख्या गौरेव खलु दत्तभाषाम् अनतिरिच्य चण्डव्याघ्रस्य मुखं प्रवेष्टुं प्रतिगता ? तस्याः एव सन्तानपरम्परा अद्यापि तस्य व्रजे अस्ति । दत्तभाषाम् अतिचरामि चेत् स्वयं तेषां पुरतः गन्तुं कथं शक्नोमि ? काः नाम

गावः ? तासां नेत्रद्वये सूर्याचन्द्रमसौ देवौ एव तिष्ठतः । ताभ्याम् अदृश्यं किं वा स्यात् ?

भगिन्या द्यावक्कया गौडः उभयतः निबद्धः । परं किं कर्तव्यम् ? 'भवतु अम्ब, भवत्याः पुत्री एव आनेष्यते । ज्योतिषिकान् उक्त्वा लग्नः सम्पद्यताम्' – इति भगिनीम् अवदत् गौडः ।

किन्तु गृहिण्याः लक्कम्मायाः एतद्विवाहस्य अभ्युपगमनकर्म गौडस्य एव दायित्वम् आसीत् । दत्तभाषा नातिचरितव्या इति तेन न अज्ञातम् आसीत् । सोदर्यसम्बन्धवचनानि अपि एवंरीत्या अल्पे एव वयसि उच्यन्ते इत्येतत् अपि न अपूर्वम् । अत्र न कोऽपि अपराधः । परन्तु मूकया पत्न्या सदा दाम्पत्यमग्नः सन् कीदृशं सुखम् अनुभूयात् ।

अस्य प्रश्नस्य उत्तरं गौडेन उक्तम् । 'मूका भवतु नाम, तेन किम् ? कियत्सुन्दरी सा ! कर्मापि सुष्ठु विदधाति । भाषितुं न शक्नोति इत्येतन्मात्रम् । गोमाता मूका किं नु ?'

'सा कथं मूका भवितुम् अर्हति ? देवानामपि माता सा ननु ?'

'तथा वदतु, किन्तु भाषितुं शक्नोति वा ?'

'नैव ।'

'नाम भाषितुम् अशक्ताः सर्वे न मूकाः । एषा बालापि तथैव । अस्मद्व्रजे विद्यमानाः गावः भाषन्ते ! मम आकारणं श्रुत्वा समीपम् आगच्छन्ति । मम शरीरं लिहन्ति । नेत्रसंज्ञामात्रेण जानन्ति । ताः अपि भाषितुं जानन्ति एव । तथापि न भाषन्ते । कुतः भाषितव्यम् ? ताः किं नराः सम्भाषितुम् ? देवाः कुतः भाषेरन् ?'

अस्य वचनस्य किम् उत्तरम् इति लक्कम्मया न अवगतम् । गौडय्यः अपृच्छत् 'भवत्याः श्वश्रूः का ?'

'भवन्माता, निधनं प्राप्तवत्याः तस्याः अनेकवर्षाणि अभवन् किल ?'

'सा माता न, अस्मन्माता नाम गोमाता । सा भवत्याः श्वश्रूः इति जानीहि । सा भवतीं किं दुःखयति ? मां पिशुनां किमपि वदति वा ?'

'नहि ।'

'एवमेव गोमातृसदृशी स्नुषा लभ्यते चेत् सापि त्वत्पुत्रे पिशुना न भवेत् । भवत्याः अपि सुखम्, सर्वेषामपि सुखम् । निःशङ्कं विना विरोधम् अभ्युपगच्छतु ।'

लक्कम्मया विवाहः सम्मतः, त्रयोदशवर्षीयाय कृष्णेगौडाय तन्मातृष्वसुः पुत्रीम्

अष्टवर्षीयां मूकां तायव्वां दत्त्वा गोपपद्धत्या रात्रौ विवाहः विहितः । एषा मूका पत्नी माभूदिति कृष्णेगौडेन न उक्तम् । तथा वक्तुम् अर्हं वयः तस्य अधुना नाभूत् । किञ्च विवाहविषयः पूर्णतया मातापित्रोः आसीत् । तत्र बालानां मुखनिवेशनपरिपाटी एव न आसीत् ।

तायव्वा कर्मणि जीवने च कुशला । अभाषणशीला अपि इतरैः भाषितं ज्ञातुं शक्नोति एव । विवाहात् परं षड्वर्षेभ्यः अनन्तरं श्वश्रूगृहम् आगता सा । तदनन्तरं वर्षत्रयम् अभिव्याप्य तदनु आपन्नसत्त्वा प्रथमं पुत्रम् असूत । स्नुषा मूका चेत् किम्, इतोऽप्यधिकं भाग्यं किम् अपेक्ष्यते ? – इति लक्कम्मा अपि सम्मता आसीत् ।

* * *

वामतः दक्षिणपार्श्वं, दक्षिणतः वामपार्श्वं परिवर्त्यापि स्तन्यं पायितं चेदपि शिशोः रोदनं न निरुद्धम् । वदने स्थापितं स्तनं मास्तु इति करेण व्याक्षिपत् । लक्कम्मा एकस्याः गोः क्षीरं प्रदुह्य अन्यस्याः स्तनेषु एरण्डतैलं विलिप्य सोर् इति आक्रष्टुम् आरब्धवती । रुदन् एव आसीत् शिशुः । निमेषं यावत् दोहनं स्थगयित्वा स्नुषाभिमुखं परावर्त्य श्वश्रूः उक्तवती 'किमर्थं क्रीडति ? सम्यक् वक्षः दातुं न शक्यते किं नु ?'

स्नुषया हस्तसंज्ञया निवेदिते तया अवगतम् । एतेषु सप्ताष्टदिनेषु स्तन्यं न्यूनम् अभूत् इति । अद्य प्रातः न किञ्चिदपि दुग्धम् आसीत् वक्षसि । 'वक्षस्येव निबद्धं स्यात् दुग्धम् । त्वमेव अङ्गुल्या नोदयित्वा जानीहि' इति श्वश्रूक्तिः अनुसृतापि दुग्धं नायातम् । एकस्मिन् वर्षे एव दुग्धं स्थगितं वा ? 'भवत्याः मातुरपि तथा अभवत् । वर्षत्रयं यावत् स्तन्यपानं न शक्यं चेत् भवती कीदृशी स्त्रीजातिः स्यात्' इति श्वश्र्वा जल्पिते सति असहाया स्नुषा दृष्टिम् अधः कृतवती । श्वश्र्वा दुग्धा धेनुस्तु बोर् बोर् इति दुग्धं प्रावाहयत् येन पात्रस्य उपरि बुर्बुर् इति फेनः उच्चलितः ।

स्थाल्याः क्षीरपानम् अभ्यस्तमेव शिशुना । किन्तु स्तन्यपानसुखं हातुं न अशक्नोत् । एकतानेन रोदितुम् आरभत । केनापि प्रयत्नेन अनिरुध्य, पितामही एव उन्नीय मुखे गुडनिवेशनम् अकरोत् चेदपि शिशुः न शान्तः । गोदोहनकर्म तत्रैव स्थगितम् । शिशुं श्वश्रूहस्ते स्थितं दृष्ट्वा तायव्वा तत्कर्मणे प्रस्थिता ।

कालिङ्गगौडः उषःकाले एव उत्थाय क्षेत्राभिमुखं गतः आसीत् । आषाढः समाप्तः, श्रावणश्च प्रचलतीति तदा क्षेत्रेषु कर्मकराः पश्चात्तन 'रागि'सस्यानि

आरोपयन्ति स्म । पूर्वदिशि स्वामिनि चतुःपुरषमिताम् उद्गतिं गते गौडः गृहम् आगतः । तदापि शिशुः रुदन् आसीत् । 'कुतः एतावद्रीत्या आक्रोशसि शिशो' इति पृष्टे सति गौडी उक्तवती 'तायव्वायाः वक्षसि स्तन्यं निरुद्धमस्ति, एकस्मिन्नेव वर्षे स्तब्धस्तन्या एषा कीदृग्जातिः वनिता ? एतस्याः मातुरपि तथैवासीत् ।'

लक्कव्वा स्वशिशोः आत्रिवर्षपूर्णं स्तन्यं पायितवतीति गौडेन ज्ञातमेव । किन्तु स्नुषायाः माता नाम स्वीया भगिनी एव । 'सा कीदृग्जातीया वनिता' इत्युक्तं न सोढं गौडेन । एतस्मिन् विषये गौडी उत्तमजातीया वनितेति सत्यम् । किन्तु सर्वाः अपि स्त्रियः समानरीत्या भवेयुः इति तन्न शक्यम् । अतः स्वीया भगिनी, तत्पुत्री च नैवं निन्दनीया इति पत्नीम् अतर्जयत् – 'मुखं संवृत्य तूष्णीं नोपविशसि त्वं किम् ? सर्वाः अपि गावः समानरीत्या दुग्धं ददति वा ?'

गौडी निरुत्तरा जाता । तथापि शिशुं गौडहस्ते दत्त्वा पाकगृहाभिमुखं गता । स्नुषा अन्तः प्रविश्य अवरिकदलं प्रागेवस्य सारार्थं मरीचं पेषयन्ती असीत् । एतस्य शिशोः रोदनोपशमनं महती समस्या अभूत् गौडस्य । अन्तः प्रविश्य गौडी पृष्टा । 'स्तन्यमेव तन्मनसि निगूढम्, स्तन्यं विना न रोदनं शमनम् उपैति' इति स्वेन पूर्वोक्तमेव वाक्यं पुनरुक्तवती । गौडः शिशुसमेतः वत्सानां गोष्ठं गतः । वत्सैः सह क्रीडितुम् उद्योजितोऽपि शिशुः न रोदनात् शान्तः । वृषभानां गोष्ठं गत्वा एकस्य वलीवर्दस्य पृष्ठे आरोपितोऽपि बालः रोदनं न स्थगितवान् । अन्ते एकः उपायः स्फुरितः । जन्ममातृतः गोमाता गरीयसी ननु ? तस्याः स्तनाः जन्ममातुः स्तनापेक्षया बुहद्गात्राः खलु ? तदेव वरम् इति सम्भाव्य धेनूनां गोष्ठं गतः । सर्वाः अपि एतावता कालेन दुग्धाः आसन् । किञ्च शिशुरेव साक्षात् ऊधसि मुखं निदधाति चेत् सर्वाः अपि गावः न तूष्णीं तिष्ठन्ति ।

किन्तु पुण्यकोटिसन्ताने महान् विश्वासः गौडस्य । यस्मिन्नपि समये दोहनेन अपि सा स्वस्मिन् विद्यमानं सर्वं दुग्धं निर्वञ्चनतया ददाति । ऊधसि दुग्धं संगृह्यापि दोहननिवारिणी चोरबुद्धिः तस्याः सन्ताने कस्यामपि नासीत् । परञ्च सा कदापि कमपि न तुदति न वा तुम्फति । अधुना गौडव्रजे पुण्यकोटिसन्तानस्य तिस्रः गावः दुहन्त्यः आसन् । एकस्याः इदम्प्रथमः वत्सः । जन्म प्राप्तवतः तस्य श्रावणे एकं वर्षम् अतीतं भवति । तस्य वृषभवत्सस्य पौत्रेण सममेव वयः । स्वमातुः स्तन्यपानानन्तरम् उत्साहेन गोष्ठात् बहिर्भित्तेः समीपं धावनकूर्दनपरः आसीत् । गौडः तत्र गत्वा तं वत्सम् आनीय तन्मातुः समीपम् अत्यजत् । वत्सः पुनरपि मातुरूधसि मुखं न्यधात् । गौः सकृत् पश्चात्

पादौ प्रसार्य बलम् आदाय मूत्रम् उदचारयत् । नाम दोहः आरब्धः । गौडः पौत्रं वत्सम् आनीय तन्मुखं गोः अन्यपार्श्वस्थिते स्तने अयोजयत् । शिशुः सकृत् तत्स्तन्यपानाय अशङ्कत । गौडः एव स्वस्य हस्तान्तेन शिशोः मुखे विद्यमानं स्तनं मुदुतया नुत्तवान् । स्वादु कदुष्णं दुग्धं यदा मुखे अपतत् तदा शिशोः आशङ्का व्यपगता । स्वयमेव स्तनम् लेहितुम् आरब्धवान् । पुण्यकोटिः तूष्णीं स्थिता । एकमपि पदम् अन्यत्र न न्यस्तवती ।

तस्मिन्नेव अवसरे गौडी आगत्य इदम् अपश्यत् । तया न किमपि आश्चर्यम् अनुभूतम् । शिशूनां गोस्तनात् दुग्धपानं गाप्याः सहजघटना आसीत् । किन्तु पत्युः मनसि उदितः अयम् उपायः स्वमनसि कुतः नोदितः इत्येव तस्याः असमाधानम् । शिशोः दुग्धपानानन्तरं तम् उन्नीय, तस्य मस्तकं गोः अग्रपदे सकृत् संस्पर्श्य गौडेन गौः उक्ता – 'अद्य प्रभृति भवती एव अस्य माता खलु अम्ब ! अयं यदा रोदिति तदा भवती एव स्तन्यं दत्त्वा रक्षेत् ।

यदा सः शिशुम् उन्नीय पृष्ठतः परावृत्तः तदा समीपे एव आगता गृहिणी अक्षिपथे पतिता । तत्क्षणं तेन उक्तम् – 'वत्सः ईषत् रोदिति चेत् समाश्वासयितुं न जानासि । कीदृग्जातीया वनिता त्वम् ? तायव्यायाः स्तन्यं स्थगितं चेत् तेन किम् ? गृहे एतावत्यः गावः सन्ति इति न ज्ञातं वा ?'

गौड्याः अपमानमिव जातम् । नतमुखी ततः गता । तद्दिनात् आरभ्य शिशुः पुण्यकोटेः स्तन्यमेव पिबति स्म । पुण्यकोटिः एकदा वत्सप्रसूतिं लभते चेत् सार्धद्विवर्षपर्यन्तं दोहित्री जातिः । अग्रे सार्धैकवर्षपर्यन्तं शिशुः तत्स्तन्यं सुखेन अपिबत् । बहुत्रदिनेषु ज्येष्ठानाम् आगमनमेव नापेक्षितम् । द्विवर्षीयः किशोरः स्वयमेकाकी एव सर्वधेनूनां मध्ये स्वधेनुम् अन्विष्य तत्र गत्वा तस्याः ऊधसि मुखं निदधाति । गौस्तु न तुदति न वा पादेन प्रहरति । धेनोः उदराद् अधः अवनम्य स्वस्य यावत्तृप्ति दुग्धम् आस्वाद्य कपोले लिप्तेन फेनचिह्नेन साकं सः अन्तः आगच्छति स्म । यावत् गोः दुग्धदानं पूर्णतः समाप्तं तावत् शिशोः स्तन्यपानाशापि तृप्ततां गता आसीत् ।

# द्वितीयः अध्यायः

## 1

अरुणाद्रेः तनुषु उपत्यकासु च रसवन्ति तृणानि वर्धन्ते । पश्चात् वर्षासु उपत्यकायां दर्पेण प्रवृद्धानां भक्तमूलतृणानां पूर्णोदरं चरणेन गावः एकैककलशपूर्णं दुग्धं ददति स्म । आषाढादारभ्य कार्त्तिकम् अतीत्य मार्गशीर्षागमनपर्यन्तं सः प्रान्तः सर्वत्र हरितमयतां प्राप्नोति । प्राग् विद्यमानं सान्द्रम् अरण्यं यद्यपि अद्य न वर्तते तथापि वर्षाकालावसाने कक्के तथा भिक्के वृक्षाः एव पुष्पपूर्णाः फलाभिमुखाः भवन्ति । इतोऽपि नवनवीनतया उत्पन्नः घनतया प्रवृद्धः किंशुकवृक्षः नूतनतया अरुणवर्णानि पुष्पाणि विकासयति स्म ।

पुरा घनताम् आप्तेषु अरण्येषु अरुणाद्रिगुहासु वसन्तः व्याघ्राः अधुना न विद्यन्ते । तरक्षवः चित्रकाः अपि न विद्यन्ते । किन्तु ग्रीष्मशरदृतुषु गिरौ कोऽपि तरक्षुः आगत्य सङ्गच्छते स्म । गिरेः उपत्यकासु चरतां परितोगतानां ग्रामाणां गवाम् वत्सानाम् उपरि अजमेषाणां वा उपरि कदाचित् उत्पतति स्म । द्वित्राः गोपजनाः वर्तन्ते चेत् तत्र न भ्रमति स्म ।

कालिङ्गगौडस्य स्वकीया सार्धशत-एकरेपरिमिता गोचरभूमिः आदितः एव आसीत् । गोचरभूमेः तृणानि तथैव सङ्गोप्य, सः कार्त्तिकपर्यन्तं गिरेः उपत्पकायां गाः चारयति स्म । समन्तात् सर्वे ग्रामीणाः अपि तथैव कुर्वन्ति स्म । अधित्यकां तस्य पुत्रः कृष्णेगौडः एषु दिनेषु गच्छति स्म । पञ्चाशदधिकवर्षवयस्कः कालिङ्गगौडः सानुप्रदेशाणां विषमस्थलेषु आरोहावरोहणानि कर्तुं कष्टम् अनुभवति स्म । परञ्च तदा कृषेः प्रतीक्षाकालः । क्षेत्राणां दायित्वं पित्रा उह्यते इति गवां दायित्वं पुत्रस्य भवति । कृषिकर्मणि नियुक्ताः कर्मकराः, तथापि गवां प्रतिपालनं स्वयं करोति स्म ।

कृष्णेगौडः स्वपिता इव उन्नतः पुरुषः । यजमानस्य पितुः मुखे दीर्घं श्मश्रु अस्ति ।

पुत्रस्य तु तदेकं न विद्यते । अन्यथा वेषभूषणानि सर्वाणि पितुः इव । ललाटे तिलकम्, कण्ठे पदकमाला अङ्गुलीषु मुद्रोर्मिकाः । वेणुं पितुः अपेक्षया पुत्रः सम्यक् वादयति । वेणुमिव मुखवेणुमपि वादयति स्म । जाफलं, लवङ्गम्, एला, चूर्णषण्डेन युतां पर्णक्रमुकयुतां पृथक् सञ्चिकां परावृत्य कटौ स्थापयति । मुखपूर्णं ताम्बूलं जग्ध्वा रक्तोष्ठं सम्मेल्य सः वेणुं वादयति चेत् चरन्त्यः गावः तत्समीपम् आगत्य तिष्ठन्ति । गिरिसानुं गोभिः साकं गच्छति चेत् तत्समये सः करेण दीर्घं वेणुदण्डं गृहीत्वा गच्छति । तस्य लगुडस्य अग्रकोटौ निशितं कृपाणमपि अयोज्य आयुधं कृतवान् आसीत् ।

कस्मिंश्चित् दिने गिरेः पश्चिमसानुं गत्वा सः धेनूः चारयति स्म । अन्यग्रामीणाः अद्यावधि गाः न चारितवन्तः इति बालशष्पाः कटिपर्यन्तं प्रवृद्धाः आसन् । कृष्णेगौडस्य गवां महत् पर्व । कृष्णः एकत्र अश्मनः उपरि शयितः ईषन्निद्रामवाप । अनन्तरं गाः कुल्यासमीपं नीत्वा जलं पाययामास । तदनु ताः कुल्यातटे चारयन् स्वयमपि सञ्चरति स्म । चरन्त्यः चरन्त्यः गावः किंशुकवृक्षोपान्तं गताः । तत्र अन्यग्रामीणानां गावः अपि आसन् । कृष्णोऽपि तत्र आगतः । तत्रत्यैः पञ्चजनैः साकं पुनरपि ताम्बूलं सेवितवान् । तेषां वचनानुरोधेन सकृत् लघुवेणुं वादितवान् । तदानीं सूर्यः वलितः पश्चिमदिशि सम्यक् अवातरत् । इतरे धेनुपालाः स्वस्वधेनूः स्वस्वग्रामं नयन्तः गताः । कृष्णः स्वग्रामाभिमुखम् अचारयत् । ताः अपि मन्दं चरन्त्यः अग्रे अग्रे पादं न्यस्यन्त्यः गताः ।

अग्रे आगत्य निम्नभुवि अवतरन्त्यः प्रवहज्जलम् उत्तीर्य आरोहन्तीः गाः अग्रे विधाय, कृष्णः पृष्ठतः 'हुय् गच्छत, इतोऽप्यलम्' इति वदन् आसीत् । तावता पश्चाद्भागे कस्याश्चन धेनोः भयात् आक्रन्दनध्वनिः श्रुतः । स्वधेनूः गणयामीति सर्वासाम् उपरि यदा नेत्रं प्रसारयितव्यं तत्पूर्वमेव 'अम्बाऽऽ' इत्याक्रन्दनं पुनरपि श्रुतिपथम् आगतम् । या कापि भवतु गौः, यस्य कस्य वा भवतु, कस्याश्चित् उपरि तरक्षुः उत्पतितः स्यात् इत्यालोच्य कृष्णः लगुडम् आदाय शब्दायमानायां दिशि उत्तानभूमिम् आरुह्य पश्यति चेत् समीपे एव एकस्य अश्मनः पार्श्वे तस्यैव गौः काचन पुण्यकोटिः गौः कम्पमाना स्थिता । पुरतः उत्प्लुत्य आगच्छन् तरक्षुः इतः झगिति उत्पत्य तस्योपरि पतति इव अपश्यत् । कृष्णेन तरक्षुः दृष्टः । सः न लघुगात्रः, अपि तु बृहद्गात्रः एव । एकक्षणं तस्य हृदयं कम्पितम् । किन्तु विलम्बः कृतश्चेत् गोमातुः जीवाः अपगच्छन्ति । लगुडमयं कुन्तं रिङ्गयन् यावत् अग्रे असरत् तत्पूर्वमेव तरक्षुः गोः उपरि उत्पत्य हस्तात् तस्याः मुखम् अताडयत् ।

'रे त्वदम्ब' – इति गर्जन् कृष्णः विद्युद्वेगेन प्रासेन तरक्षोः पृष्ठतः अतोदयत् । किन्तु प्रासः विगतलक्ष्यः अभूत् येन तरक्षुः ताडनं न प्राप्नोत् । ताडनं निवारयन् सः तर्जयन् कृष्णस्य उपरि उदपतत् । कृष्णः प्रासेन तस्य वक्षः लक्षीकृत्य अतोदयत् । प्रासः वक्षसि प्रविष्टः । किन्तु तरक्षोः अग्रिमः एकः नखपञ्जरः तस्य मुखस्य उपरि, इतरः नखपञ्जरः वक्षसि प्रविष्टौ । सद्यः एव उरस्तः मुखतश्च रक्तं उच्चलितम्, तथापि कृष्णः न भीतः । प्रासम् आकृष्य पुनरपि तरक्षोः उरसि प्रवेशितवान् । यत्र प्रासः प्रविष्टः तत्र तरक्षोः गात्रेऽपि रक्तस्रावः आरब्धः । अन्यदा तोदयितुं प्रासे आकर्षिते, तरक्षुः तस्योपरि उत्पत्य अन्तिमं ताडनम् अददादेव ।

## 2

मुखात् रक्तम् स्रावयन्तीम् अवसिच्य धावं धावं आगच्छन्तीं गां दृष्ट्वा इतराः अपि गावः भीताः । ताः अपि धावं धावं ग्रामस्य पुरतो विद्यमानस्य गृहस्य गोष्ठं प्रविष्टाः । प्रत्यहं मन्दं पदं विक्षिप्य गात्रं आन्दोल्य आगच्छन्त्यः गावः अद्य एवं दिङ्मूढाः धावित्वा आगताः इत्येतत् दृष्ट्वा कालिङ्गगौडस्य आश्चर्यम् अभूत् । किन्तु मुखे रक्तासेकवर्ती गाम् उपगम्य परीक्षणेन चतुर्नखान् अन्तः प्रसार्य विदारितं स्फुटतया ज्ञायते । तरक्षुभ्रातुरेव इदं कार्यमिति निश्चिनुतः तस्य मनः पुत्रः अधुनापि गृहं नागतः इति अस्मरत् । प्रहृताम् एतां गां सः कथम् एतावद्रीत्या परित्यजेत् ? तत्रैव क्षते रोजादलस्य रसं लेपितुं शक्यमासीत् । तेन दृष्टं चेत् न तथा त्यजति सः । एवं चेत् चरणाय गाः परित्यज्य यत्र कुत्रापि जल्पितुं गतः वा इति विचिन्त्य क्षणकालं तस्य कोपः अभूत् पुत्राय । किन्तु अनुपदमेव भयमपि अभूत् । तरक्षुः तस्य उपरि उदपतत् वा इति सन्देहोऽपि जातः । सः गोष्ठस्य पश्चात् भागे गत्वा अपश्यत् । कृष्णः नागतः । अन्तरागत्य स्नुषां पृष्टवान् । सः नागतः असीत् । गौडस्य हृदये आघातः प्रारब्धः ।

सः तत्क्षणादेव ग्रामस्य अन्तः गतः । क्षेत्रशाद्वलेभ्यः प्रत्यागताः पञ्चदश विंशतिः वा पुरुषाः सम्मिलिताः । तदैव सायं सन्ध्या आवृता आसीत् । ते पूगदलबन्धं, तैलोल्मुकानां सज्जताम् अकुर्वन् । सर्वेऽपि लगुडान्, कुन्तान् कृपाणान् स्वीकृत्य धड्धडिति गिरेः अभिमुखं धाविताः ।

ग्रामस्य पश्चाद्गतां वेदिकारक्षाम् अतिक्रम्य, अनन्तरं त्रिचतुराणां जनानां गणाः

विभिन्नदिक्षु प्रस्थिताः । एकैकोऽपि उच्चैः 'कृष्ण, हे कृष्ण' इति आक्रोशन् अस्ति, किन्तु प्रत्युत्तरं न श्रुतम् । कालिङ्गगौडस्य हृदयं व्याकुलभावेन आक्रान्तम् । तस्य वामभुजः स्पन्दितः । अन्यच्च त्रिवारम् अक्षिस्पन्दः अपि जातः । तथापि 'शीघ्रं शीघ्रम् अन्विष्यत' इति अन्यान् वदन् स्वयमपि एकेन गणेन साकं गतः । ते बृहच्छिलाम् आरुह्य अवरुह्य, लघुलघुकुल्याः अपि उत्तीर्य, तरुलतानां सन्धिषु परीक्षमाणाः अग्रे अग्रे गताः । तदा रात्रेः तमः आवृतम् आसीत् । तण्डुलमूलतृणानि यत्र चरितानि गोभिः तत्रैव अन्वेषणं भवेदिति गौडेनैव तदभिज्ञानम् अनुसृत्य उक्तम् आसीत् । गौडसहिते गणे गिरेः दक्षिणतः गच्छति पश्चात् एकेन गणेन उच्चस्वरेण आक्रन्दितं श्रुतम् । 'कालिङ्गमाव, अत्र आगच्छन्तु, अत्रैव विद्यते आगच्छन्तु' इति रावितं रात्रेः गभीरे नीरवे अस्फुटतया श्रुतम् । 'अत्रास्मि' इति श्रुत्वा गौडस्य मनः समाहितम् । 'क्षतं जातं स्यात्, उत्थातुम् अशक्तः स्यात्, औषधेन पथ्येन च प्रकृतिम् आपन्नो भवेत्' इति मनसि आलोचयन् आक्रन्दनपरस्य गणस्य अभिमुखं स्वगणेन साकं गतः । तदा आक्रन्दनं श्रुतवन्तः गणजनाः तत्र गच्छन्तः सन्तीति तेषां दलगुच्छानां दीपगुच्छानां च चलनेन ज्ञायते ।

समीपं गत्वा उल्मुकप्रकाशेन दर्शनात् कालिङ्गगौडस्य नेत्रे तमसा आवृते । कृष्णः निधनं गतः आसीत् । तस्य मुखात् हृदयात् अवसिक्तं रक्तं घनतां प्राप्य कृष्णवर्णम् अगात् । दक्षिणकपोलः तरक्षुणा दंष्ट्रान् प्रवेश्य खादितः आसीत् । ऊर्वोः द्वयोरपि मांसं तरक्षुमुखगतम् आसीत् । कृष्णस्य देहे परिधृतं वस्त्रम् अखिलं रक्तक्लिन्नं वायुसंयोगेन आम्रवर्णतां प्राप्तम् आसीत् । दक्षिणनेत्रस्य शुक्लकनीनिका भग्ना रक्तस्राविणी आसीत् । गौडः तत्रैव स्खलितः पुत्रस्य शवस्य उपरि पतितः । अन्येषामपि पुरुषचाराणां दुःखम् उन्मुखम् अभवत् । कालिङ्गगौडः ग्रामाधिपगौडः । तस्य एकमात्रपुत्रः कृष्णः । सः इव वेणुवादकः तद्ग्रामे एव नासीत् अन्यः । ग्रीष्मपर्वदिनेषु महिषाणां द्रावणे सः इव अन्यः सदृशः नासीदेव । ग्रामगौडस्य एकलः पुत्रः एवंरीत्या तरक्ष्वाघातस्य बलिः आसीत् । इतःपरं कथं वा गौडस्य सान्त्वनम् ? तेषु द्वौ धावित्वा समीपस्थकुल्यायाः जले पटपट्टीं उन्मज्य, आनीय गौडस्य शिरसि प्रहृतवन्तौ । अल्पेनैव कालेन प्राप्तप्रज्ञोऽपि गौडः 'कुत्र गतोऽसि मम वत्स' इति पुत्रशवम् इतोऽपि गाढम् उपगुह्य, गिरिसानोः सकलं मौनं भेदयन् इव उच्चैः आक्रन्दत् । तत्र स्थितेषु ज्येष्ठः गोष्ठगृहस्य चिण्णय्यः, गौडस्य शिरः स्वाङ्के निधाय सान्त्वयामास । 'कालिङ्गण्ण, रोदनेन न सुखं लभ्यते, सः तरक्षुः अत्रैव कुत्रापि स्यात् । अस्माभिः सः प्रहर्तव्यः । उत्तिष्ठ, शवम् उन्नीय वयं

पञ्चषाः जनाः गृहं गच्छाम । अवशेषेण तरक्षुः अन्विष्य हन्तव्यः।'

'मम पुत्रः एव हतः, तरक्षुहननेन का वा प्राप्तिः ?' इति गौडः रुदन्नेव अवादीत् ।

'गतः गतः एव । तरक्षुः जीवितः एव तिष्ठति चेत् कियत्यः गावः हताः स्युः ? तस्य हननेन पुण्यप्राप्तिः स्यात् । कृष्णघातकं तं तथैव न त्यजेम ।'

काळिङ्गगौडः अधुना क्रोधाविष्टः सञ्जातः । अनुपदमेव उपविष्टः । 'यूयं शवम् अनुपालयन्तः अत्रैव तिष्ठत, अहं गत्वा तत्र कुत्रापि स्थितश्चेदपि तस्य रुधिरं स्रावयित्वा प्रत्यागच्छामि' इति उत्थितः ।

तावता कालेन केनचित् उक्तम् – 'कृष्णस्य कुन्तः कुत्र ? न दृश्यते एव ।'

गोष्ठगृहचिण्णय्यः अनुपदमेव आलोच्य अवदत् – 'कृष्णः विना प्रतिक्रियां न मृतः । कुन्तेन तं तोदितवानेव । शरीरे प्रविष्टकुन्तः एव सः अत्रैव कुत्रचित् पतितः स्यात् । गच्छाम, अन्विष्याम ।'

निवारितेऽपि काळिङ्गगौडः तरक्षुगवेषणाय प्रस्थितं गणं सङ्गतः । शवप्रतिपालनाय चत्वारः जनाः तत्र अवशिष्टाः । चिण्णय्यस्य ऊहा अवितथा आसीत् । ततः शतपाददूरे एकस्य कारीरगुच्छस्य अधः तरक्षुः पतितः आसीत् । तस्य हृदये, उदरे च रन्ध्रद्वयमासीत् । ततः अधुनापि रक्तं स्रवदेव अस्ति । कुन्तस्तु बहिः अनागतः लग्नः एव आसीत् । इतस्ततः चलनेन वेदना जायते इति तरक्षुः चतुरः अपि पादान् एकत्रीकृत्य पार्श्वशायी आसीत् । सम्भूय उल्मुकादिकं गृहीत्वा आगतान् एतावतः जनान् दृष्ट्वा सः न केवलं व्याकुलो जातः, अपि तु जीवापायहेतोः तस्य रोषः अपि उद्भूतः । तत्क्षणम् उत्थाय, उरसि लग्नं कुन्तमपि अविगणय्य समग्रे गिरिसानौ प्रतिध्वनितं यथा तथा गर्जितवान् । 'रे तव जनयित्रीं धिक्' इति कालिङ्गगौडः स्वपार्श्वे स्थितस्य हस्तात् कुन्तम् अपास्य तम् अनुधावितः । तस्मिन्नेव क्षणे तरक्षुरपि तस्य उपरि उदपतत् । 'काळिङ्गण्ण, काळिङ्गण्ण' इत्याक्रोशन्तः इतरे तरक्षोः उपरि स्वस्वकुन्तानां पातनात् पूर्वमेव गौडेन प्रेरितेन कुन्तेन तस्य उरः प्रविष्टम् । नैतावन्मात्रम्, कृष्णस्य कुन्तः अपि निःसृतः, तस्मादपि रन्ध्रात् रक्तस्रावः आरब्धः । तरक्षुः गौडं स्प्रष्टुं न शक्तः । तस्य अग्रतः त्रिपादादूर्ध्वं पतितः सः पुनरपि गर्जन् आसीत् । तावता गौडः स्वकुन्तम् आकृष्य पुनरपि तस्य मुखे घातम् अकरोत् । यद्यपि प्राणाः न गताः तथापि तस्य कथा समाप्तिं गता ।

स्वहस्तेनैव तरक्षोः अवगतिः जातेति गौडस्य दुःखम् ईषदिव न्यूनं जातम् । सः एव अन्यान् 'एतमपि ग्रामाय नयत' इत्यवदत् । तरक्षोः ईषदवशिष्टान् प्राणान् त्रिचतुरताडनेन

बहिः अपास्य, समीपस्थितेन सर्पिणीबन्धेन चतुरोऽपि पादान् अवबन्ध्य तत्र चतुर्लगुडान् प्रवेश्य पुरुषचारौ स्कन्धमारोप्य वहन्तौ कृष्णस्य शवसमीपम् आनीय अवातारयताम् । एतावत्पर्यन्तं रोषेण आवृतं गौडस्य मनः पुत्रशवस्य दर्शनानुपदमेव दुःखेन आविष्टम् अभूत् । गौडः सोरस्ताडं सगद्गदं भृशम् अरुदत् ।

## 3

आरात्रि समस्तायां काळेपल्ल्यां न केनापि निद्रितम् । गौडस्य बन्धुभ्यः वार्तां प्राप्य शवं मृद्गतं कर्तुं जनाः रात्रावेव प्रस्थिताः । गौडः लक्कव्वा, तायव्वा च त्रयः शवं परितः उपविश्य भृशम् अरुदन् । त्रिवर्षवयस्कस्तु किशोरः अर्धमर्धं विषयं जानन् अपि क्षणकालं रुदित्वा, अनन्तरं तथैव मातुः उत्सङ्गम् आगत्य निद्रितः ।

प्रातः स्वामी द्विपुरुषमानं यावदागतः तावदेव ग्रामबान्धवाः अपि आगताः । शवः बहुकालं यावत् स्थापयितुं न शक्यः । यतः तत्र मांसखण्डाः उद्गताः, इतोऽपि विलम्बः चेत् दुर्गन्धः आरभ्येत । वेणूनां बन्धिकायाः उपरि शाययित्वा, नीत्वा चतुःपुरुषभानात् पूर्वमेव कालात् गौडस्य गोचरभूमौ शवं मृद्गतं विधाय आगताः । गृहागमनान्तरं गौडः एकस्मिन् कोणे विना वाचं शयितः । लक्कव्वा, तायव्वा इतरत्र लुठिते । बहुभिः बहुधा उक्ते सत्यपि यः कोऽपि जलकणमात्रमपि न अपिबत् । पार्श्ववर्तिजनाः किशोरं स्वगृहम् अनयन् । ग्रामस्यैव अधिपतिः, जैमिनीपारङ्गतः ज्येष्ठः । यस्य कस्यापि सुखे दुःखे च विवेकवचनोपदेशकः गौडः । सः एव अधुना शयितश्चेत् तदनुगतं सात्वनं वक्तुं को वा पारयेत् ?

चिण्णय्येन समीपम् आगत्य 'देवस्य इच्छा एवमेव आसीत् काळिङ्गण्ण, मा रुदिहि' इति गदिते सति 'कोऽयं सः ममात्मजः देवः ? इच्छा कीदृशी दासीपुत्रस्य ! मम पुत्रः मृतो भवेदिति इच्छां विधातुं तस्य भुक्तम् अधिकं जातं वा ?' – इति आक्रोशत् । देवस्य वचनं न अतीव प्रयोजनकरम् अभूत् । कर्म, पूर्वार्जितम् इत्यादिवचनं न कृत्यनुकूलं जातम् । एतद्विषये काळिङ्गगौडेन सम्भाषितुं ज्ञानं न कस्यापि आसीत् ।

सायं स्वामिनः अस्तङ्गमनाय इतोऽपि घाटिकाद्वयम् आसीत् । तदा अग्रहारस्य नरसिंहजोयिसः आगतः । अन्यग्रामं दानार्थं गतस्य तस्य प्रत्यागमनकाले मध्याह्नः अतीतः आसीत् । आगमनसमनन्तरमेव गृहिण्या काळिङ्गगौडस्य पुत्रः तरक्षुणा हतः

इति वार्ता निवेदिता । जोयिसः स्नानं कृतवान् चेदपि उदराय न किमपि स्वीकर्तुं न अशक्नोत् । तस्य काळिङ्गगौडस्य च गृहयोः सन्ततिपरम्परया आगतः आसीत् परस्परविश्वासः । सः विश्वासः परम्परागतयोः तयोः जीवन् आसीत् । पञ्चपात्रपरिमितं गङ्गोदकं स्वीकृत्य योजनदूरं मार्गं धावन् एव समापयन् गौडगृहगमनावसरेऽपि गौडः सुप्तः एव आसीत् । किन्तु जोयिसागमनम् आलोक्य शयनात् तत्रैव उत्थितः उपविष्टः । केनचित् आसने आनीतेऽपि 'मास्तु तम्मय्य' इत्युक्त्वा भूतले एव उपविष्टः । गौडेन न किमपि उक्तम् । गौडी जोयिससमीपम् आगत्य स्वकीयम् अदृष्टं वदन्ती उच्चैः आक्रन्दत् । स्नुषायाः तायव्वायाः उच्चैः रोदितुं जिह्वा एव नासीत् । किन्तु तस्याः मुखं रुदित्वा रुदित्वा मांसपिण्डमिव अभूत् ।

'का वार्ता ?' इति गोष्ठगृहचिण्णय्यम् अपृच्छत् जोयिसः । चिण्णय्यः ह्यः घटितं सर्वं पुरोदृश्यमिव अवर्णयत् । अन्यच्च प्रातः आरभ्य एतान् समाधातुं स्वेन यः यत्नः क्रियमाणः अस्ति तमपि विवृतवान् । अर्धघटिकां यावत् नतमुखः जोयिसः किमपि आलोचयन् आसीत् । ततः तेन पृष्टम् – 'यस्याः आघातः जातः तस्याः गोः स्थितिः का ?' इति ।

'तत् केन दृष्टं स्वामिन् ?' इत्यवदत् चिण्णय्यः ।

'आगच्छ, वयं पश्याम' इत्युक्त्वा जोयिसः पश्चाद्गोष्ठं गतः । चिण्णय्यः तम् अनुसृतवान् । तद्दिने न कोऽपि गाः चरितुं प्रवर्तितवान्, कर्मकराः तासां द्रोण्यामेव ईषत् शुष्कतृणानि वितीर्य द्रोण्यां कूपजलं पूरितवन्तः । ह्यः तरक्षुणा प्रहृता गौः व्यग्रा इवासीत् । नखानां प्रवेशेन रक्तपूर्णानि क्षतानि उच्छूनतां प्राप्तानि । सा ह्यः आरभ्य एकं तृणखण्डमपि न आघ्रातवती । 'तस्याः वत्सः समीपे आगतश्चेत् बडबडिति पादेन आहन्ति स्म । 'न कस्यापि कदापि पादप्रहारः दत्तः आसीत् तया' इति गृहकर्मकरः अवदत् । जोयिसे समीपं गते तुदतीव सिर् इत्यकरोत् । किन्तु सः यदा दूरे स्थितः तदा चिन्ताव्याकुलं मुखम् अधः अकरोत् ।

'भयम् आवृतमस्ति पश्य, आर्य' इति भाषितं चिण्णय्येन ।

जोयिसः अन्तरागत्य गौडम् अवदत् – 'गौडय्य, पश्चादागत्य गां दृशा पश्यतु । तस्याः मुखे नखः प्रविष्टः । तस्मिन् क्षते विषं किमपि स्यात् । त्वमेव आगत्य पश्य । अन्येन केनापि ज्ञातुम् अशक्यं तत् ।'

'तत् किमपि भवतु, तेन किं मे छिन्नम्, धिगस्तु' काळिङ्गगौडः नेत्रं मृष्टवान् ।

'त्वया एवमुच्यते किं नु गौडय्य ? गवाम् अस्वास्थ्यं भवता इव अन्येन केन ज्ञायते सम्यक् ? पुत्रो गतः एव । इतः गृहे औषधोपचारकारी न स्यादिति गोमातरं भवानेव हन्ति किम् ? तत् पापमपि गृहं मारयेत् किम् ?' इति उक्तवता तेन लक्कव्वा अभिमुखीभूय उक्ता 'गौडम्म, उत्थाय गोष्ठम् आगत्य अवलोकय । यजमानी भवती तु प्रातः आरभ्य गां प्रतिपालयेत् न ?'

तावत् गौड एव उत्थितः । जोयिसः तस्य पृष्ठतः गतः । गौडी अपि आगता । पृष्ठतः यं कमपि न प्रहरेत्, अग्रतः आगतमपि न तोदयेत् तादृशी गौः अधुना गौडं तोदयितुं शिरः अकम्पयत् । किन्तु नासासूत्रं परिगृह्य तस्याः मुखं परीक्षितवान् । स एव जोयिसम् 'विषम् अभवत् पश्यतु, वाटिकां गत्वा मूलिका आनेतव्या' इत्यवदत् ।

'कमपि प्रेषयतु ।'

'न कोऽपि जानाति । मया एव गन्तव्यम् । धावन्नेव गत्वा आनयामि ताम् । भवान् अत्रैव गृहे तिष्ठ' इति वदन् गौडय्यः गोष्ठस्य व्रजस्य पृष्ठतः शीघ्रं शीघ्रम् अगच्छत् । गौडम्मां समाधाय जोयिसः अन्तरागतः ।

काळिङ्गम् एकमेव बहिर्गच्छन्तं पश्यद्भिः द्वित्रैः तस्य पृष्ठतः गतेऽपि सः वाटिकां प्रविश्य मूलिकोत्पाटनावसरे तान् दूरतः एव परिहृतवान् । औषधिमूलिका सर्वेषां पुरतः उत्पाट्य बहिः प्रकाश्यतां न कार्येति नियमः आसीत् । उत्पाट्य स्वमेखलायाः सञ्चिकायाम् आवृत्य गृहमागतः लशुनस्य बीजलवङ्गादि-औषधीः मेलयित्वा स्वयमेव चूर्णीकृत्य गोः मुखस्य क्षतम् अलिम्पत् । सा ह्यस्तः तृणं जलं वा नादत्तवतीति श्रुत्वा स्वयमेव तृणं खादयितुं गते सत्यपि सा मुखं न व्याददात् । अन्तरतः पत्नीमाहूय सोऽवदत् - 'भीता इवाभाति गौः । ईषत् निवासनबन्धः ज्वालनीयः ।'

सा च अन्तः गत्वा स्थूलशलाकायुतां सम्मार्जनीमेकाम् आनीय गोः मुखे चिकरं निवासनं कृतवती । अनन्तरं तस्याः कोटिपार्श्वे प्रज्वाल्य गोः पुरतः प्रतिष्ठापितवती । सम्मार्जनी चटचटिति ज्वलन्ती समग्रं गोष्ठमेव जगजगिति प्रज्वलन्तीव जातेति क्षतवत्या गवा साकम् अन्याः अपि गावः भीताः । 'इतःपरं भयं त्यज्यते' इति गौडेन उक्तम् । तद्दिने प्रातः अपि क्षीरदोहनं नाभूत् । कर्मकराः वत्सान् स्तन्यपानाय चोदितवन्तः । अधुनापि वत्साः योज्याः इत्यवदत् लक्कव्वा ।

अन्तरागतः गौडः ज्योयिसम् अवदत् - 'नरसप्प, त्वमधुना ग्रामं मा गच्छ । आवश्यकं चेत् अत्रैव मुष्टिमितं तण्डुलं पच ।'

'तण्डुलाः कस्मै रोचन्ते ? अत्रैव तिष्ठामि । अहं प्रातः आगामीष्यामीति येन केनापि उक्त्वा प्रेष्यताम्, पर्याप्तम् ।'

तद्गृहं कश्चन कर्मकरः उल्मुकं प्रज्वाल्य गतः ।

## 4

काळिङ्गगौडस्य जलपिपासा जाता । आदिश्य आनाय्य पादोनकलशजलं यावत् गटगटिति पीत्वा श्मश्रु कूर्परेण मार्जयामास । प्रातरारभ्य पूगताम्बूलं न चर्वितमासीत् । स्वकीयां ताम्बूलसञ्चीम् आनाय्य मुखे पूगखण्डद्वयं संस्थाप्य ताम्बूले अङ्गुष्ठेन चूर्णं विलिप्य मुखे निधाय तमाखुदलं चुलुके संस्थाप्य घर्षयित्वा, चूर्णं विधाय मुखं सम्पूर्य जोयिसमवादीत् – 'एतावति अल्पे वयसि एवंरीत्या दुर्मरणं प्राप्तुं किं पापं कृतं स्यात् मम वत्सेन ?'

जोयिसेन उक्तम् – 'गौडय्य एतावता बोधवता भवता एवमुक्तं समीचीनं वा ? भवतः पुत्रस्य सन्मरणं प्राप्तम् । दुर्मरणं नास्माभिः वक्तव्यम् ।'

'तरक्षुणा कृतेन घातेन, दशनेन च मरणं सन्मरणं वा ?'

'वृथा तेन दशनेन मरणं न प्राप्तवान्, गोमातुः संरक्षणाय गतः । शास्त्रे एव उक्तमस्ति–

गवार्थे ब्राह्मणार्थे वा वर्णानां वापि सङ्करे ।
गृह्णीयातां विप्रविशौ शस्त्रं धर्मव्यपेक्षया ॥

गोरक्षणार्थं विप्रो वा वैश्यो वा शस्त्रधारणं कुर्यात् । भवतः पुत्रस्तु जात्या गोपः । गोमातुः रक्षणाय गतः । रक्षणमपि कृतम् । तेन प्रत्युद्गमनं न कृतं चेत् गौः रक्षिता भवेद्वा ? पुरुषवत् तरक्षुं कुन्तेन घातितवान् । भवद्भिः तत्र गत्वा न ताडितेऽपि तरक्षुः मृतः स्यादेव । प्रमादात् सः मृतश्चेदपि तस्य सद्गतिः सुनिश्चिता । भवतः अदृष्टम् इति भावयतु । गौः जीविता ।'

'सा रक्षिता इत्यनेन किं जातम् ? मम पुत्रः जीवितो वा ?' इत्युत्तरं दत्तवान् गौडय्यः, उत्थाय, वेदिकायाः उपरि गत्वा जलनिर्गमे तमाखुरसं निपात्य अन्तः आगतः । पत्नीं स्नुषां च आहूय 'रे अत्र आगम्यताम् । नरसप्पः शास्त्रसम्बन्धे वदति श्रूयताम्' इति उच्चैः अवदत् । लक्कव्वा, तायव्वा चागत्य भित्तिमाधार्य उपविष्टे ।

जोयिसेन उक्तम् – 'सा रक्षितेति किं जातम् ? इति न वक्तव्यम्। यद्गृहे दुःखिता गावः स याति नरके नरः' इत्युक्तम् अस्ति। यस्य गृहे गौः दुःखिता तिष्ठति सः नरकं प्राप्नोति। सा गौः मृता चेत् तस्याः वत्सः दुःखितो भवेत् खलु ? तदा तव वंशस्य प्राक्तनसप्तपरम्पराः आगमिसप्तपरम्पराश्च नरकं गच्छेयुः। तरक्षुं गोरुपरि उत्पतितं दर्शं दर्शं जीवचोर इव भवतः पुत्रः उदासीनः तिष्ठति चेत् नूनं नरकं प्राप्नुयात्। भवतः पुत्रः धैर्येण भवतः पितॄन्, भवन्तमपि च रक्षितवान्।'

अन्तिमं वाक्यं श्रुतवती लक्कव्वा स्वनेत्रे परिमार्ज्य ऋजुतया उपाविशत्। तायव्वा अपि तस्य वचनं सश्रद्धं श्रोतुं प्रारभत। जोयिसेन उक्तम् – 'किं त्वया न ज्ञातम् ? पुरा च्यवनो नाम कश्चन महर्षिः आसीत्। नदीतीरे तपश्चरन् तदैवागतेन प्रवाहेण तथैव जले निमग्नः। तथापि तस्य तपोभङ्गः न जातः। एकदा द्वित्राः दाशाः मत्स्यग्रहणाय आगताः। तैः प्रसारिते जाले अयं मुनिः पतितः। बृहत् मत्स्यः लब्धः इति ज्ञात्वा दाशैः तटाय जाले आकृष्टे तत्र कश्चन मुनिः स्थितः। दाशाः भीताः। किन्तु ऋषिरेव दाशान् अवादीत् – 'मां मत्स्यं मत्वा गृहीतवन्तः। भवतां नापराधः अत्र। मां यस्मै कस्मैचित् विक्रीणन्ताम्।'

परन्तु तादृशम् ऋषिं कः क्रीणीयात् ? वार्ता राज्ञा श्रुता। राजा आगत्य तं नत्वा राजभवनाय आगन्तव्यम् इति प्रार्थयामास। 'अहम् आगमिष्यामि, किन्तु एतेभ्यः दाशेभ्यः मम मूल्यं देयम्' इति ऋषिः अवोचत्। 'भवतां मूल्यं कथं निर्णीयेत' इति राज्ञा पृष्टे 'देशशासकः राजा भवानेव आलोच्य निर्णयतु' इत्यवदत्। वराकेण राज्ञा किं कर्तव्यमित्येव न ज्ञातम्। 'कोषागारमेव ददामि' इत्युक्तम्। 'तावदेव किं मम मूल्यम् ?' इति ऋषिणा पृष्टे किं वक्तव्यम् इति न ज्ञातं राज्ञा। मदीयं राज्यमेव ददामि इत्युक्ते तेन तावत् एव वा मदीयं मूल्यम् इति कथितम्। इतोऽपि किं कुर्यादधिकं राजा ?' इति वदन् जोयिसः लक्कव्वामुखम् अपश्यत्।

'अहं किं जानामि ? भवान् एव वदतु' इति तया उक्ते जोयिसः गौडमुखम् अपश्यत्।

'मया ज्ञातम्' इत्यवदत् सः।

'तर्हि वदतु।'

'गोमातरमेकाम् आनीय ददातु इत्युक्तं खलु मुनिना ?'

'पश्यतु, त्वया उत्तरम् ऊहितम्। मुनिः तदेव अवदत् – 'गौः ब्रह्मण्डसमाना। अहं तु तस्मिन् ब्रह्माण्डे विद्यमानः कश्चन जीवः। मादृशानां कोटिकोटिसङ्ख्याकानाम्

ऋषीणां सङ्गमनेनापि गोः मूल्यं न भवेत्' इति उक्तवान् ।

गौडय्यः पत्नीं स्नुषां च उक्तवान् – 'श्रुतं वा, सम्यक् जानन्तु ।'

जोयिसः अपृच्छत् – 'जनकराजः इति नाम श्रुतं किल ?'

'सीताम्बायाः पिता खलु ?'

'स एव । सः राजर्षिः इति सम्बोधितः । सिंहासने उपविश्य राज्यशासनं कुर्वाणोऽपि ऋषिसमानः आसीत् सः । एकमपि पापकर्म तेन न कृतमासीत् । अत्यन्तं जरावृते सति योगबलेन शरीरमेव विसर्जितं तेन । नाम इदं शरीरं विहाय परलोकं प्रस्थितः । किन्तु तस्य आत्मा नरकद्वारपर्यन्तं नीतः इति श्रूयते । तदा जनकः अपृच्छत् – न मया एकमपि पापकर्म कृतम् । किमर्थम् अत्र आनीतः ? तस्योत्तरम् आसीत् –

एकदा तु चरन्तीं गां वारयामास वै भवान् ।
तेन पापविपाकेन निरयद्वारदर्शनम् ॥

'कोऽर्थः ?' गौडः पृष्टवान् ।

'पुरा त्वया कदाचित् तृणचरणपरा गौः वारिता आसीत् । तत्पापकर्मणा नरक-द्वारदर्शनम् अभूत् इत्युक्तम् । अन्यथा जनकमहाराजः साक्षात् स्वर्गं गन्तुं शक्नुयात् ।'

'श्रुतं खलु ? गोः प्रतिपालने युष्माभिः कदाचित् आलस्यम् उद्यते किल ?' इति गौडय्यः पत्नीं स्नुषां च अवदत् ।

जोयिसेनापि आरात्रि न शयितम् । गोशरीरे त्रयस्त्रिंशत्कोटिसङ्ख्याकाः देवताः वसन्ति, इत्यारभ्य गोपूजामाहात्म्यपर्यन्तं मध्ये मध्ये श्लोकम् उदाहृत्य अर्थविवरणं करोति स्म । उषःकालावसरे तेनोक्तम् – 'गौडाम्ब, भवती जानातु, मा रोदितु । भवत्याः पुत्रः गोरक्षणं कुर्वन् प्राणान् अर्पितवान् । तरक्षोरपि आहुतिं स्वीकृत्यैव, गां जीवितां विधायैव मृतः । भवदग्रिमवंशपरम्परा एषः बालः विद्यते खलु तस्य पुण्यमेव रक्षाकवचम् । इतःपरं न रोदितव्यम् । क्षतवतीं तां गां शुश्रूषताम् । भवत्याः स्नुषामपि समादधातु । यजमानी भवती अग्रे स्थित्वा सर्वमपि कुर्यात् ।'

जोयिसः ह्यः न किमपि खादितवान् । 'गौडय्य, भवन्तः सर्वे शरीरं परिमार्ज्य किमपि ईषत् खादन्तु । महता श्रमेण तस्याः गोः क्षतस्य उपशमनं कारयित्वा तस्याः रक्षणं कर्तव्यम् । रात्रौ सा सम्यक् निद्रिता वा न वा न जाने । गच्छतु, पश्यतु, तस्याः अन्यत् औषधं पथ्यं वा किमावश्यकमिति परिशीलयतु' इत्युक्त्वा स्वग्रामं गतः ।

गौडय्यः उत्थाय गोष्ठं गतः । तम् अनुसृत्य पश्चात् गौडी अपि गता । गोः क्षतस्य उच्छूनता ईषत् न्यूना जाता । किन्तु तया तृणं वा जलं वा न स्पृष्टमासीत् । बहुधा भीता इव देहं सङ्कोच्य तिष्ठन्ती एव आसीत् । मुखम् अङ्गुल्या संवाह्य, परीक्ष्य च एकदा मृदुतया देहं परिमार्ज्य सान्त्ववचनम् अभिधाय अनन्तरं गौडय्यः पत्नीपार्श्वे परिवृत्य 'अहं वाटिकां गत्वा मूलिकाम् आनयामि । एषा उदराय न किमपि स्वीकृतवती । त्वम् एकं वा द्वयं वा द्रोणं तण्डुलं जले निमज्य नरिकेलफलद्वयं सम्मेल्य सम्यक् सम्पेष्य स्थापय । नलिकया पायनीयम्, दिनद्वयात् उपवासेन अस्ति सा । एवं चेत् गृहस्य शुभं न भवति ।'

गौडाम्बा तण्डुलनारिकेलसम्पेषणाय गता । गौडः क्षतायाः गोः वत्सम् अन्यस्याः गोः स्तन्यं पाययित्वा तदनु मूलिकानयनाय उद्यानं गतः ।

## 5

एकादशे दिने गोमयेन समग्रं गृहं सम्मार्ज्य, बान्धवेभ्यः पञ्चगव्यं वितीर्य, गोदानं च कृत्वा कृष्णस्य तिथिः निर्वर्तिता । दशसहस्राधिकानां जनानां कृते भूरिभोजनं व्यवस्थापितम् । भोजनानन्तरं तिथ्यर्थम् आगताः प्रतितिवृत्ताः ।

इदानीं कालिङ्गगौडगृहस्य प्रत्येकं जनस्य कश्चन आतङ्कः सञ्जातः । तरक्षुणा क्षतायाः गोः व्रणं पूर्णतया उपशान्तम् । किन्तु तस्याः जातः मनोघातः न शान्तः । सा तृणं वा जलं न स्वीकरोति । नेत्रयोः प्राक्स्थितं चैतन्यं न प्रकाशते, किन्तु मृतस्य प्राणिनः नेत्रे इव भासेते । उदरम्भरणं विना निधनं गच्छेदिति भयात् गृहस्थिताः प्रातः सायं द्विवारमपि कुडवद्वयं तण्डुलं सिक्तं कृत्वा नारिकेलफलेन साकं सम्यक् निष्पेष्य नलिकातः निवेशयन्ति स्म । बलात् अन्तः गच्छत् तण्डुलपिष्टं, तद्वदेव बलात् पायितं जलं विहाय अन्यः आहारः एव तस्याः नासीत् । गौडय्येन स्वेन ज्ञातं सर्वम् औषधं विहितम् । तस्मादपि अधिकतया औषधविदः समन्तात् दशक्रोशेषु ये केऽपि नासन् । गवि मन्त्रतन्त्राण्यपि कारितानि । समग्रस्य गोष्ठस्य कूष्माण्डबन्धनेनापि उपशमांशः न दृष्टः ।

गौः दिने दिने क्षीणतां गता । अन्ते उत्थाय अवस्थानमपि त्यक्तवती । शयानामेव तां तण्डुलचूर्णं, जलं च पाययन्ति स्म । शयानायाः एव तस्याः मूत्रपुरीषविसर्जनम् ।

किन्तु शायं शायम् उरःस्थलम् उदरपार्श्वं च उद्गतमिति तत्र क्षतं जातम् । गौडय्यः क्षतस्य औषधं जानात्येव । किन्तु गौः तस्यैव क्षतस्य उपरि शेते इति क्षतम् औषधेन न उपशाम्यति स्म ।

गृहिणामिदमेव चिन्तनम्। 'अम्ब, मम पुत्रः त्वदर्थम् अर्पितप्राणः। भवत्यपि जीविता तिष्ठतु । भवती जीविता यदि न भवेत् मम वत्सः विना हेतुं मृतः इव स्यात्' इति गौडाम्बा गां बहुवारम् अवदत्।

'भवत्याः किमभवत् वदतु । विना कारणम् एवमेव शयिता चेत् किम् अस्माभिः ज्ञायते ? यथा मयावगतं तथा औषधं कृतमस्ति । भवत्याः मनसि यदस्ति तत् मुखेन वदतु' इति गौडय्यः तां दशवारं न्यवेदयत्।

तायव्वा वक्तुं न शक्नोति । पतिमरणदुःखम् अन्तरवरुद्ध्य निगूहति स्म । रोदनं विना स्वदुःखं प्रकाशयितुं न जानाति । मातृगृहिणः आहूतवन्तः, तथापि सा तत्र गन्तुं नाभ्युपागच्छत् । तथापि गोः तनुं परिमार्ज्य गलमालिङ्ग्य सान्त्वयति स्म । भाषितुं सापि न शक्नोति, गौरपि न भाषते ।

एवं विंशतिः दिनानि अतीतानि । अन्ते अन्ते गौः तण्डुलपिष्टमपि न पिबति स्म । बलात् नलिकया पायितमपि वमति स्म । गृहिणः सर्वे तस्याः विषये निराशाः जाताः । रात्रिकालेऽपि एकैकः जागरितः तस्याः शुश्रूषाम् अकरोत् । मरणात् पूर्वं न अलुटत्, पाणिपादं शरीरम् अधुना स्वव्यापारं समापयदिव स्वश्वासं बहिः निस्सारयामास, पुनः उच्छ्वासः नाभूदेव । म्रियते इति पूर्वनिश्चितं सर्वेषाम्, तथापि मृतायां जातायां गृहिणः सर्वे उच्चैः अरुदन् । द्वाविंशतिदिनेभ्यः पूर्वं गृहवत्समरणेन जातं दुःखम् अस्मिन् नूतने दुःखे पुरातनम् इव स्यात् । गौडाम्बा तस्याः मृतशरीरम् आलिङ्ग्य 'अन्तेऽपि मृता एव जाता किमु' इति अश्रुधाराम् अवाहयत् ।

गौडगृहे इतःपूर्वं न कापि गौः मृता इति नासीत् । सामान्यतः आधिव्याधिभिः आक्रान्ताः अर्धेवयसि तस्य गोष्ठगावः न म्रियन्ते स्म । समन्तात् यस्याः कस्याः अपि गोः रोगः प्राप्तश्चेत् सः गत्वा औषधं दत्त्वा उपशमनं करोति स्म । स्वकीयानाम्, दृष्टानाम् अन्येषां वा किमुत शत्रूणामपि गावः रोगपीडिताः इति श्रुतिपथम् आगते तत्र गत्वा औषधं न करोमि चेत् मरणानन्तरं कीदृशं नरकं प्राप्तं स्यादिति कल्पनया एव तस्य देहः स्वेदार्द्रः भवति स्म । कदाचित् बहुधा औषधदानेनापि तस्य गोष्ठगताः गावः म्रियन्ते स्म । किन्तु तस्य जीवितकालमाने तस्य गोष्ठस्य या कापि गौः तरक्षुघातमेत्य न

मृता आसीत्। अधुना एषा गौः – तत्रापि पुण्यकोटिपरम्परासन्ततेः गौः – तरक्षुघातेन पतित्वा पीडिता मृता । तरक्षुनखस्य विषम् उपशान्तमासीत् । तथापि गौः आतङ्कितमनाः प्राणान् अत्यजत् । यन्त्रं तन्त्रं तायकबन्धः – एतेषु यत् किमपि न फलितम् । गौः किमर्थं मृता ? मम पुत्रेण प्राणाः अर्पिताः इत्येतत् असत्यं वा ? सः कातरेण मनसा प्राणानार्पयत् किम् ? पुरुषः इत्युक्ते पुरुषः पुत्रः सः । कातरहृदयः नासीत् सः । – इति स्वस्मिन् एव स्वयमुक्तं गौडेन ।

मृतायाः गोः भूमौ निखननं भवेत्। मृतगवां वाटिकायाम् उत केदारे निखननं विधाय, तदुपरि सस्यस्य आरोपणं सामान्यपद्धतिः आसीत्। किन्तु गौडः तस्याः गोः शवं शकटे आरोप्य तदीयां गोचरभूमिं गतः । स्वस्य पुत्रस्य शवस्थापनं यत्र अभूत् तस्याः एव भूमेः पार्श्वे खातं खानयित्वा तत्र गां शाययित्वा तस्याः उपरि नूतनां शाटिकां चोलखण्डं च आच्छादितवान्। प्रस्थमितं तण्डुलं, लवणं, नारिकेलफलं च पार्श्वे संस्थाप्य कलशपूर्णं जलं प्रसिच्य खाते मृत्तिकाच्छादनं कारितवान् ।

गोसमाधिं संस्पृश्य, ललाटं तत्र लगयित्वा बद्धाञ्जलिना गौडेन उक्तम् – 'अम्ब, भवत्याः पार्श्वे एव भवत्याः पुत्रोऽपि शयितः । भवत्याः जीवितार्थं तेन प्राणाः अर्पिताः । त्वत्पुत्रस्य मरणदुःखेन भवती अपि मृता । वीरपुत्रायाः भवत्याः जीवितेच्छा एव नागता कियत्यपि पुण्यात्मवती भवती । पुत्रे मृतेऽपि अहं भवतीव प्राणान् न अत्यजम्, इतोऽपि जीवितः । तस्य यत् किमपि कष्टमापतितं चेत् भवती एव निवारयतीति धिया भवती अपि तेन साकं शायिता । तस्य किमपि भवति च इतःपरं तत् भवत्याः एव ।

## 6

गौडस्य अपरापि चिन्ता सन्निहिता । तस्य गोष्ठपालकः भृत्यः आगत्य अवदत् – 'आर्य, सः कपिलायाः वत्सः बलीवर्दः किमिति कृशताम् आप्नुवन्नस्ति । सुष्ठु न स्पृशति जलं तृणं वा ।'

गौडः गत्वा अपश्यत्। चतुर्दन्तः बलीवर्दः । पतनशीलः इव कृशो जातः । नेत्रयोः आतङ्कच्छाया दृश्यते । कुतः अस्य एवंस्थितिः जाता इति पृष्टे भृत्येन उक्तम् – 'चतुर्दन्तवानपि मातरि एव लग्नः असीत्। मातुः गमनानन्तरम् एवंजातः स्यात्। नाहं सुष्ठु जानामि ।'

वत्सस्य त्रीणि वर्षाणि वयः । तस्य माता सद्यः द्वयोः मासयोः खलु अन्यं वत्सं प्रसूतवती । मातरं शिशुं वत्सं च गौडः स्वपुत्रस्य तिथिदिने जोयिसाय दानरूपेण अर्पितवान् । मातुः अन्यः वत्सः विद्यते चेदपि अयं मातरि लग्नः आसीत् । रात्रिवेलायां बलीवर्दविभागे बध्यमानोऽप्ययं दिवा स्वमातुः समीपं गच्छति स्म । माता वत्सं स्वल्पसमये आघ्राय तनुं लेढि स्म । अधुना माता तत्र न विद्यते । वत्सस्य कृशताहेतुः गौडेन झटिति अवगतः । किन्तु सम्प्रति किं करणीयम् ? तस्य माता दानरूपेण दत्ता एव । पुनरत्र गोष्ठम् आगन्तुं न शक्यते एव । अयं बलीवर्दः अग्रिमकर्षणकाले हले बद्धः भवेत् इति तेन परिगणितमासीत् । स्तन्यपायी शिशुरिव अयं मातरमेव ध्यायन् कृशतां गच्छन्नस्ति ।

गौडः आदिनम् अचिन्तयत् । रात्रौ अपि तदेव चिन्तनं बाधितम् । अम्बायाः चिन्तया अयमपि जीवितं त्यजति चेत् का गतिः ? इति उषःकाले प्रबोधे जाते एव उत्थाय बलीवर्दबालस्य रज्जुं विमोच्य जोयिसस्य ग्रामाय अग्रहारदिशि नयन् प्रस्थितः । मार्गे एव प्राप्यमाने रङ्गनतटाकस्य समीपे लक्कीलतायां तं बद्ध्वा स्वयं लक्कीलतानां गणादनन्तरे देशे शौचं समाप्य आगतः पाणिपादं प्रक्षालितवान् । पूर्वदिशि स्वामी इतोऽपि अव्यक्त आसीत्, तथापि तस्य सारथिम् अरुणम् अञ्जलिबन्धेन नमस्कृत्य बलीवर्देन साकम् अग्रहारं गतः ।

तस्य गमनकाले जोयिसपत्नी सुब्बम्मा दानेन प्राप्तायाः गोः दोहनं कुर्वती आसीत् । तस्याः पञ्चवर्षीयः पुत्रः मातुः पृष्ठतः स्थित्वा क्षीरं निरीक्षते स्म । जोयिसः उत्थाय पुष्पतुलसीचयनाय तटाकाभिमुखं गतः । ते गृहस्य पुरोभागे एव गां बध्नन्ति स्म । स्ववत्सदर्शनक्षणे एव गवा सकृत् हुङ्कृतम् । मातरं परिचिन्वन् वत्सः अपि पुरःउपसृत्य तस्याः मुखे स्वमुखं लगितवान् । गवा पुरतः पदद्वयं निहितमिति हेतोः सुब्बम्मा दोहनपात्रेण साकम् उत्थिता । 'माता वत्सः इति अन्त्रसम्बन्धः कथं विस्मर्तुं शक्यते !' इति गौडय्यः अवदत् । प्रवृत्तं सर्वं जोयिसगृहिणीं प्रतिपादितवान् गौडय्यः ।

अल्पेन कालेन आगतः जोयिसः विषयावगमानन्तरम् अवदत् – 'कतिचन मातरः पुत्राश्च तावद्रीत्या संश्लिष्टाः भवन्ति । सः संश्लेषः नास्माभिः विघटयितव्यः । एकं कार्यं करोतु ।'

'किमति वदतु ।'

'एषा गौः भवता मह्यं दानरूपेण अर्पिता । दत्तं दानं तथैव न प्रतिनेतव्यम् । तस्याः क्रयणमिति एकं रजतरूप्यकं दत्त्वा प्रत्यादाय गच्छतु ।'

'आर्य, एकं रूप्यकं ददातु, उत एकलक्षरूप्यकाणि ददातु, दानमिति दत्ता गौः न पुनः आदेया । प्रत्युत मयोक्तं श्रूयताम् । एषः बलीवर्दवत्सः एव दानरूपेण भवते दीयते । भवान् स्वीकरोतु । मातापुत्रौ संयुतौ तिष्ठेताम् । कुत्रापि भवतु, तेन किम् ?'

जोयिसः क्षणमालोच्य अवदत् – 'तथैवास्तु । किन्तु शास्त्रमपि किञ्चित् द्रष्टव्यम् ।

युवानामिन्द्रियोपेतं शतेन सहयूथपम् ।
गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्गमलङ्कृतम् ॥

इत्युक्तम् । एषः बलीवर्दः । शतशः गवां यूथाय वीर्यं वितरन् यूथपतिः । इतोऽपि यौवनं प्राप्नुवन् इतःपरम् इन्द्रियोपेतो भविता । नाम नैषः गौः, अपि तु गवेन्द्रः । गवेन्द्रस्य स्वीकारे ब्राह्मणेन्द्रः एव भवेत् । नाम गोत्रप्रवर्तकत्वशक्तिः यस्यास्ति सः ब्राह्मणः बलीवर्ददानं स्वीकर्तुं शक्नोति । वृषभः अर्धगोवृन्देन समानः । एकस्य वृषभस्य दानं शतगोदानसमम् । शतगोस्वीकारे यस्य शक्तिः सः केवलम् एकस्य वृषभस्य दानं स्वीकर्तुम् अर्हति । मादृशस्य सामान्यजोयिसस्य एकस्य गोदानस्य जीर्णताशक्तिरेव नास्ति । कथं वा इतःपरं वृषभवत्सं स्वीकर्तुं शक्नुयाम् ?'

काळिङ्गगौडः क्षणकालं निरुत्तरो जातः । तत्क्षणमेव तेन पृष्टम् 'नरसप्प ! गोदानं भवता स्वीकृतं किल ? तया साकं वृषभवत्सोऽपि स्वीकृतः खलु ? सः कथं स्वीकृतः ?'

'सदापि दानावसरे गौः नाम क्षीरदायिनी गौः इत्येव अर्थः । वत्सेन विना पुरुषो वा स्त्री वा सः मात्रा साकम् आगच्छति, न तु पृथक्तया सः दानरूपेण प्राप्यते । वत्सस्य स्तन्यपरित्यागसमये मातरि दुग्धमपि न विद्यते । दुग्धहीना गौः दानाय अनर्हा । नाम तादृशः वत्सोऽपि दातुं न शक्यते एव । त्वम् इदानीं स्तन्यपानं त्यक्तवतः वृषभत्वम् आपन्नस्य वत्सस्य दाने प्रवृत्तः किल ?'

किं वक्तव्यमित्येव न ज्ञातं गौडेन । स्वशिरसि स्थितम् उष्णीषम् अपावृत्य अधो निदधानः तूष्णीम् उपविष्टः । इतः अन्योपायः न विद्यते वा ? तावता एव वृषभवत्सः तन्माता च परस्परं द्वित्रवारं देहलेहनं कृतवन्तौ ।

गौडः अपृच्छत् – 'एषा पुत्रं स्मरन्ती आसीत् किम् ?'

'सा किम् अकरोदिति न मया ज्ञायते स्म । एकस्मिन् दिने तु चारयितुं गतात् स्थलात् रज्जुमपि छेदयन्ती भवतः ग्रामाभिमुखी गता । अहं गत्वा तां गृहीत्वा आगतः । जननगृहस्य स्मरणेन गता स्यादिति चिन्तितं मया ।'

'तथैव स्यात्। वत्सोऽपि स्मरन्नासीत् प्रायः। सम्प्रति वदतु, मातापुत्रयोः सङ्गमनाय किं कर्तव्यमिति।'

जोयिसः क्षणकालम् आलोचयत्। अनन्तरम् उत्थाय अन्तः गत्वा, एकं रजत-रूप्यकम् आनीय गौडस्य पुरतः संस्थाप्य अवदत् - 'उत्तिष्ठतु, भवानेव वत्सस्य रज्जुं गृहीत्वा मह्यं क्रयाय ददातु। एतत् रूप्यकं स्वीकरोतु।'

एषा सूचना गौडेन अभ्युपगता। रूप्यकम् आदाय कटिबन्धे सञ्चिकायां लगयित्वा, उत्थाय वत्सस्य रज्जुं गृहीत्वा छदेः अधः आगतः। प्राभातिकः सूर्यः तदैव पुरुषत्रयमानेन उपरि आगतः आसीत्। रज्जुं सूर्याभिमुखम् उद्गृह्य सः तां जोयिसहस्ते संस्थाप्य 'एतं भवते क्रयरूपेण दत्तवानस्मि। आकाशे उद्गच्छन् असौ स्वामी, अत्रैव स्थित्वा पश्यन्ती तस्य माता गोमाता एव साक्षिणौ' इत्यवदत्।

## तृतीयः अध्यायः

### 1

वर्षत्रयम् अतीतम् । गौडय्यसंसारस्य अधुना केन्द्रं गृहस्य पौत्रः । इदानीं षड्वर्षवयसः तस्य नामापि काळिङ्गः । पितामहस्य नाम प्रथमस्य पौत्रस्य विहितं भवेदिति पद्धतिः तस्य वंशे परम्परया आसीत् । अत एव पुरा यदा पुण्यकोटिधेनुः व्याघ्रमुखात् जीविता तदानीन्तनं काळिङ्गगौडनाम अधुनापि संसारे संरक्षितं सत् आगतम् । पितामहः काळिङ्गश्चेत् पौत्रोऽपि काळिङ्गः । किन्तु पितामहः पिता च यावत् जीवन्नस्ति तावत्पर्यन्तं गौडः इति श्रेणिसूचकं पौत्रनाम्नः अग्रे लगितं न भवति स्म ।

एतं पौत्रं काळिङ्गनाम्ना गृहाङ्गनाः न आह्वयेयुः । गौडाम्बायाः तत् पतिनाम चेत् तायव्वायाः श्वशुरनाम । ग्रामीणाः केवलं तं पुट्टकाळिङ्ग इति आह्वयन्ति स्म । गृहे पुनः तस्य नाम पुट्ट इत्येव स्थितम् ।

पुट्टः षष्ठवर्षवयसि एव पितामहेन साकं गोचरं गच्छति । भृत्यैः सह क्षेत्रशाद्वलादि गत्वा आयाति । पूर्वं यस्याः पुण्यकोटिवंशपरम्परायाः स्वेन पीयमानस्तन्या धेनुः आसीत् सा गौः अधुना अन्यं वत्सं प्रसूतवती दुह्यते । सः इदानीमपि कदापि दिने गोचरे एव स्तनेषु मुखं व्यादाय दुग्धं पिबति । कदापि स्तने सः मुखं योजयतु गौः इतस्ततः न चलत्येव । पितामह्या साकं सदा जल्पन् सः दधिमथनघटात् नवनीतमुन्नीय खादति । मातुः गात्रस्य उपरि पतन् 'भवती किमर्थं न भाषते ?' इति पृच्छति । तस्याः संज्ञारूपम् उत्तरम् अजानन् उत्तराय पितामहीं पृच्छति । 'देवः तव मातुः जिह्वाम् अपाहरत् ननु पुट्ट !' इति पितामह्या उक्ते मातुः उत्सङ्गमारुह्य बलात् तस्याः मुखं व्यादाय अङ्गुलिं निवेश्य अन्तः परिशील्य पितामहीं 'भवती असत्यमेव वदति खलु ? मातुः जिह्वा तत्रैव अस्ति' इति वदति । श्वश्रूः स्नुषा च परस्परं मुखं पश्यन्त्यौ हसतः ।

पौत्रस्य जननात् प्रभृति तस्य उत्तमविद्या सुष्ठु शिक्षणीया इत्याशा कालिङ्गगौडस्य आसीत् । गौडः जैमिनिपठनशक्तः विद्यावान् । तस्य पुत्रं कृष्णं विद्यां शिक्षितुं कञ्चन शिक्षकमेव आनीय स्थापितवान् । किन्तु कृष्णः न किमपि शिक्षितवान् । वेणोः, वंशिकायाश्च वादनविद्यां तु सः केनापि अशिक्षितोऽपि स्वयमर्जितवान् । यक्षगाननृत्यं तथा साधितमासीत् यद् दृष्ट्वा प्रेक्षकाः चकिताः भवेयुः । क्रमुकताम्बूलं चर्वतः, तदा तदा यक्षगानं नृत्यतः दण्डलीलायां पदगाने च प्रथमत्वेन तिष्ठतः अन्यदा वंशिकां वादयतः तस्य गवां चारणं विहाय अन्यत्र आस्था नासीत् । लवांशेऽपि जैमिनिः यदि पठितः स्यात् तर्हि आशा पूर्णा इति गौडः सन्तृप्तः भवेत् । किन्तु तन्न घटितमिति महती निराशता न जाता । भगवता कृष्णेन शिक्षितायाः अधिका विद्या गोपस्य कुतः ? इति कदाचित् स एव वदति स्म ।

स्वयमेव पुट्टम् अ आ इ ई कारान् शिक्षितुं शक्नुयादपि कृषिकस्य स्वस्य शिक्षणाधिकारः नास्ति इति मत्वा न सः तत्र प्रवृत्तः आसीत् । अधुना चतुर्वर्षेभ्यः प्राक् अग्रहारे सर्वकारीय-प्राथमिकशाला आरब्धा । तत्र कश्चन सर्वकारीयशिक्षकः एव आगतः । न केवलं तत्, तत्र बालानाम् उपवेशनाय पीठोपकरणानि स्थापितानि । तत्र बालान् ताडयन्ति चेदपि उच्छूनता यथा स्यात् तथा न ताडयन्ति इति । मरीचकोदण्डरूपं दण्डनं नासीत् । स्वस्य मुग्धः पौत्रः प्रविशति चेदपि सः ताडनेन न खिद्यते इति सन्तुष्टः गौडय्यः पुट्टः तत्रैव प्रवेशनीयः इति निश्चितवान् । जोयिसे निवेदिते तेनापि स एवाभिप्रायः दत्तः । जोयिसपुत्रः अष्टवर्षीयः वेङ्कटरमणः अपि तामेव शालां गच्छन् अस्ति ।

पुट्टं प्रातः एकः भृत्यः आनीय शालां प्रापय्य प्रतिनिवृत्तश्चेत् पर्याप्तम् । मध्याह्ने भोजनं सः जोयिसस्य गृहे एव करोति । सायम् एकः भृत्यः आगत्य आनयेत् - इति गौडय्येन निश्चितम् । जोयिसेन पञ्चाङ्गं परिशील्य सूचिते शुभे दिने गौडय्यः पौत्राय नूतनं युतकम् अर्धोरुकं च धारयित्वा, शालां नीत्वा, तं शिक्षकाय नमयित्वा तस्मै दश नारिकेलफलानि पञ्चप्रस्थमितं नवनीतं च दक्षिणारूपेण समर्प्य, स्वयमपि अञ्जलिना नत्वा शालायाम् उल्लेख्यम् अकरोत् । समग्रशालायाः स एक एव शिक्षकः । किं पाठयति सः इति ज्ञातव्यम् इति कुतूहलेन गौडय्यः शालातः बहिः वेदिकायां घटिकां यावत् उपविश्य तमाखुसञ्चिकाम् अनावृतवान् । तेन साकम् आगतः जोयिसः दानम् आहर्तव्यम् इति ग्रामान्तरं गतः ।

शिक्षकः पुट्टाय अ आ इति लेखनावृत्तिं दत्तवानिति बहिः स्थितेन गौडय्येन श्रुतम् ।

तस्मिन् एकं क्षणं धन्यताभावः उदितः । अनन्तरं शिक्षकः वदन्नासीत् – 'द्वितीयकक्ष्यायाः छात्राः पुस्तकम् उद्घाटयन्तु । ह्यः पाठितं पद्यं शुद्धतया वदन्तु । मया सह वक्तव्यम् ।'

तत् किं जैमिनीयं स्यात् इत्यालोचयति गौडे सः अन्तः अन्यत् पद्यम् अपठत् –

रक्षितं चेत् गोमयं ताडितं चेत् कारीषः
हादितं चेत् भाले भस्म
अताडितमेव स्थितम् उपरि गोभरः
त्वं भवेः कस्मै हे मानव !

गौडय्यस्य कर्णः उन्नमितः । एतत् गोपद्यमेव । सर्वकारीयशालापि वरमेवास्ति । सुष्ठु पाठयन्ति – इति तस्मिन् करेण चोटिकां ताडयति अन्तः ते वदन्ति स्म –

क्षीरं दोहनेन दधि भवति सूते
मण्डमुपरिमथनेन नवनीतमाप्तम्
उत्कृष्टघृतमेति तापनेनाहं
त्वं कस्य भवसि भो नरमानव ॥

तावता तद् गानं स्थगितम् । अन्तः शिक्षकः वदति स्म – 'सर्वे एतस्यार्थं लिखत । श्वः अग्रिमं पाठयामि । एकोऽपि दोषः न भवेत् ।'

गौडय्यः उत्थाय शालायाः अन्तः गत्वा शिक्षकम् अपृच्छत् – 'आर्य, एतत् पद्यं बहु सम्यक् विद्यते । मां किञ्चित् पाठयति वा ?'

शिक्षकः एकं क्षणं व्याकुलः जातः । वर्गस्य एकं पुस्तकमादाय तस्य हस्ते समर्प्य 'पठितुं शक्यते चेत् भवान् एव पठतु । नो चेत् अहं पाठयामि' इत्यवदत् ।

गौडय्यः स्वयम् अग्रिमं पद्यम् अपठत् । तत्र तस्य अर्थावगतिः न स्यात् तादृशं किमपि नासीत् । जैमिनिवत् तत् क्लिष्टं नासीत् । तथापि 'कियत् सुन्दरं लिखितवन्तः' इति वदन् अपठत् । अन्तिमपद्यस्य पठनेन तस्य नेत्रे आर्द्रे जाते ।

पथि रथीषु गततृणानि गवेषयित्वा
चरित्वा गृहमागतामृतं ददामि ।
तदास्वाद्य मां वञ्चयन् मानव वद
त्वं कस्य भवसि वद मानव ।

पठनसमाप्त्यनन्तरम् आचार्यः अपृच्छत् – 'एतत् भवतः इष्टं चेत् अहं तत् विलिख्य भवद्बालकस्य हस्तेन प्रेषयिष्यामि ।' गौडय्यस्य तद्विषये कृतज्ञता सम्भूता । तम् उद्दिश्य

विचारितवान् । आचार्यः जैमिनीयं पूर्णतया जानाति । न केवलं तत्, गदुगभारतस्य वाचनेऽपि शक्तिमान् सः । संस्कृतमपि जानाति । ज्योतिषे, पौरोहित्येऽपि परिश्रमः विद्यते । तं हस्ताभ्यां प्रणम्य पौत्रम् – 'हे पुट्ट, नरसप्पस्य पुत्रेण साकं गत्वा मध्याह्ने भोजनं तद्गृहे कुरु । सायं द्यावः आगत्य आनयति' इत्युक्त्वा ग्रामं गतः ।

मार्गयाने गौडस्य मनसि एकः प्रश्नः तक्षति स्म –

पथि रथीषु गततृणानि गवेषयित्वा
चरित्वा गृहमागतामृतं ददामि ।
तदास्वाद्य मां वञ्चयन् मानव वद
त्वं कस्य भवसि वद मानव ।

गोमातुः दुग्धं निपीतवान् मानवः तस्यै एव द्रुह्यति । सः कस्मै कमुपकारं कृतवान् ? क्षेत्रं गृहम् उद्यानं, निधिः इत्येवं सर्वं तस्यैव आवश्यकम् । मेषः, कुक्कुटः, अजः, छागः – इति सर्वे तेनैव अपेक्ष्यन्ते । शुनकपालनमपि तस्य गृहस्य रक्षणाय, गोमातुः पालनमपि तस्याः दुग्धपानाय । एतेन कः उपकारः कस्यचित् मनुष्यजन्मनः । पुण्यं जन्म इत्येतत् गोमातुः भवति । कियता पुण्येन गोमातुः जन्म प्राप्येत ! देव, मम अग्रिमे जन्मनि गोमातुः जन्म ददाति वा ? इति देवं मनस्येव प्रार्थयत । किन्तु, किं मया किमपि पापं न कृतम् ? गोः जन्म आगच्छतु इति विना मूल्यं भवति वा ? गोमातुः जननं चेत् अनन्तरं देवता एव भवति । देवस्य अपेक्षया महती खलु गौः ? अहमेकः मन्ददासीपुत्रः । आगमिजन्मनि गोभावे मम किमस्ति पुण्यम् !

* * *

मध्याह्ने एकादशवादने शालासमप्त्यनन्तरं पुट्टं जोयिसपुत्रः वेङ्कटरमणः गृहं नीतवान् । एकादशवादनतः द्विवादनपर्यन्तं विरामः । जोयिसगृहिणी सुब्बम्मा पुट्टाय पलाशदलस्य उपरि भोजनं परिविष्टवती । सः भुक्त्वा, पर्णं क्षिप्त्वा, स्वयमेव गोमयं लिप्तवान् । तस्मात् दिनात् प्रतिदिनं मध्याह्ने तेषां गृहे भेजनं कर्तव्यम् । सुब्बम्मा प्रीत्या पर्यवेषयत् । तस्याः पुत्रः वेङ्कटरमणः पुट्टकाळिङ्गात् त्रिभिः वर्षैः ज्येष्ठः । अधुना तृतीयवर्गे पठति । केवलं शालापाठं विना तस्य स्वपितुः संस्कृताध्ययनमपि विद्यते । जोयिसः पुत्राय अधुनापि सायंकाले वेदमन्त्रान् पाठयति । गतवर्षे उपनयनात् पूर्वं संस्कृतव्याकरणम्, अमरं नीतिशतकं च अधीते स्म । इदानीं वेदाध्ययनमपि भवति ।

सर्वकारीयशालां न गच्छति चेत् अग्रिमदिनेषु जीवनोपायः क्लेशकरः इति दृष्ट्या केवलं जोयिसः पुत्रं शालां प्रवेशितवान् ।

पुट्टः बुद्धिमान् बालकः । शालायाम् आचार्येण पाठितेन साकं मध्याह्नकाले वेङ्कटरमणः किमपि पाठयति स्म । एवं सः पञ्चदशदिनेष्वेव द्विपञ्चाशत् अक्षराणि लिखित्वा मर, मठ, मग इत्यादि सरलाक्षरयोजनेन लेखितुम् अभ्यस्तवान् ।

## 2

कस्मिंश्चित् मध्याह्ने काळिङ्गगौडे गङ्गातले हस्तं प्रक्षाल्य, कलशेन तक्रं पिबति सति, अग्रहारस्य शेकदारस्य भृत्यः आगत्य, गौडेन हस्ताङ्कनं कारयित्वा एकं सर्वकारादेशं दत्तवान् ।

'किमेतत् वत्स' इति गौडय्येन पृष्टे भृत्यः 'किमपि न तात, भवतः एकशतपञ्चाशत् एकरेमितं गोचरम् अस्ति खलु ? तत्र कृषिः कर्तव्या इति उपरिष्टात् आदेशः प्राप्तः । भवानेव कृषिं न करोति चेत् तत् सर्वकारेण आक्षिप्य अन्यस्मै कस्मैचिदपि दीयते इति' इत्यवदत् ।

'मदुपरि सर्वकारस्य कुतः अयं कोपः ?'

'केवलं भवतः विषये इति न तात, भवतां ग्रामस्य कोट्टिगेमने चिण्णय्यस्यापि पञ्चाशत् एकरे गोचरम् अस्ति खलु ? तस्मै अपि एवमेव आदेशः जातोऽस्ति । अन्यत्र ग्रामेषु अपि गोचरभूमिवशङ्करेभ्यः कृषिकेभ्यः अपि आदेशो क्रियमाणोऽस्ति । देशे जनाः अधिकाः जाताः । जनानां खादनीयं नास्ति पुनस्तु गवे इति गोचररक्षणापेक्षया तदेव कर्षणेन श्रमे कृते उदराय अपि लब्धं स्यात् इति आदेशः जायमानोऽस्ति सर्वकारेण ।

'कोऽयं मम पत्नीपुत्रः सः सर्वकारो नाम ?' इति कोपेन गौडेन पृष्टे सति अनुचरः 'सर्वकारं न तथा वदेत् । यस्य कस्यापि समक्षं वदति चेत् कारागारे स्थापयन्ति । न किमपि शक्यते कर्तुम्' इति अबोधयत् । तस्य गृहे एव करजलमादाय भुक्त्वा चारः गोष्ठगृहस्य चिण्णय्याय आदेशं दातुं गतः ।

तस्य गमनानन्तरं गौडय्यः एकवारं तत् पठितुं प्रयत्तवान् । किन्तु शेकदारस्य अस्पष्टाक्षरस्य कृष्णपत्रप्रतिकृतिं सः पठितुं नाशक्नोत् । तस्मिन् ग्रामे पर्याप्तः अक्षरज्ञस्तु

स एव । तेनाज्ञातम् अन्येन केन ज्ञातुं शक्येत ? तावदेव स्वस्य प्राप्तम् आदेशं हस्ते गृहीत्वा चिण्णय्यः धावित्वा तत्र आगतः । तस्य आगतमपि तादृशमेव पत्रम् । नरसप्पजोयिसः एव एतत् पठितुं शक्नोति इति निर्णीय द्वावपि अग्रहारं धावितौ ।

रीतिसमेतं पठितवान् जोयिसः तमेव सारांशम् उक्तवान् । जनानाम् आहारः अधुना न पर्याप्तः । कृषिभूमिः अधिका कर्तव्या । कृषिं कुर्वाणेभ्यः सर्वकारीयगोचरभूमिः दरखास्तरूपेण दातव्या इति सर्वकारेण निश्चितम् । क्षेत्रपालकवशे विद्यमानां गोचरभूमिं केदारधारिणः एव कृषिं कुर्वन्ति चेत् वरम् । अन्यथा तां भूमिं सर्वकारः स्वायत्तां विधाय तदनु कृषिविधानम् अभ्युपगतवते आवेदकाय मूल्याय अथवा घोषणरूपेण वितरति । एतत्सम्बन्धिनः गोचरस्वामिनः उपमण्डलामल्दारप्रभुसन्निधानं गत्वा अभ्युपगमपत्रं दत्त्वा आगच्छेयुः ।

तस्मिन्नवसरे जोयिसगृहमागतः शिक्षकः अपि तत् पठित्वा समानतया सारांशम् अवदत् ।

'न वा, गोधनस्य तृणाय इति पुण्यात्मानः गोचरदानेन पुण्यम् अर्जयन्ति । एते मत्पुत्राः स्थितामपि गोचरभूमिम् अपहरन्ति । स्थितायामेव भूमौ कष्टेन अर्जयति चेत् सस्यवर्धनं न शक्यते वा ?' इति गौडय्यः पृष्टवान् । शिक्षकः अवदत् – 'यूयं तालूकु–अमलदार–सविधे गत्वा निवेदनम् अर्पयत । सः भृशम् उत्तमः पुरुषः । भवतां यथा हानिः न स्यात् तथा अनुग्रहं कुर्यात् ।'

परन्तु तालूकुकेन्द्रं प्रति चिण्णय्यः गौडय्यश्च द्वावेव गन्तुं न शक्नुतः । 'अस्माभिः साकं भवानेव आगच्छतु' इति शिक्षकः आहूतः । सः तु 'सर्वकारीयः अल्पः सेवकः न गच्छेयम्, जोयिसः गच्छति चेत् वरम्' इत्यवदत् । किञ्च शालासमयः सन्निहितः इति शिक्षकः ततः प्रस्थाय गतः ।

चिण्णय्यः शुद्धः अनक्षरज्ञः । तस्य सर्वकारः न्यायः – इत्यादिज्ञानं किमपि न विद्यते । गौडय्यः जोयिसश्च एतस्मिन् विषये बहुकालं यावत् संलपन्तौ आस्ताम् । सर्वकारस्य एतादृशी दुर्बुद्धिः कथम् आगता स्यात् ? एवंरीत्या आदेशकारिणः निश्चयेन शुभं न भवेत् इत्येतत्पर्यन्तं वचनम् किञ्चित्कालं प्रवृत्तम् । एतादृशविषयेषु विलम्बः न कार्यः, श्वः एव तालूकुकेन्द्रं गत्वा आगच्छाम इति द्वयोः निर्णयानुसारं चिण्णय्यः अपि हूम् इत्यवदत् । किन्तु तत्र गत्वा स्वामिनां पुरतः अवस्थातव्यम् इत्यालोचनेन तस्य पादौ ईषत् कम्पेते स्म ।

## 3

परस्मिन् दिने काकरुतसमये एतौ द्वावपि अग्रहारम् आगतौ । ततः एव तालूकुकेन्द्रं गन्तव्यम् । त्रयः अपि जनाः कुत्रापि विश्रान्तिं विना चतुःक्रोशदूरस्थितं पत्तनं स्वामिनः मूर्ध्नः उपरि आगमात् पूर्वमेव प्रापुः । जोयिससविधे न किमपि वस्तु आसीत् । परिधानभूता वेष्टिः, स्कन्धे राङ्कवम् अन्यच्च शुचिवस्त्रम् एकं वीतत्वचं नारिकेलम्, मुष्टिमितं मन्त्राक्षतम् । किन्तु गौडय्यः द्वादशप्रस्थतोलितं नवनीतम् एकस्यां स्थाल्यां शिरसि सन्धार्य आगतः । चिण्णय्यः दशप्रस्थनवनीतं पात्रेण आनीतवान् ।

जोयिसेन पूर्वमेव पत्तनं दृष्टमासीत् । ताल्लूकुकार्यालयस्थानमपि ज्ञातं तेन । त्रयः अपि यदा तत्र गताः तदा कार्यालयस्य सर्वाणि द्वाराणि, वातायनानि च पिहितान्यासन् । कोशागारस्य रक्षणाय स्थितौ द्वौ तु भुशुण्डिं धृत्वा स्थितौ । जोयिसः एव धैर्येण समीपं गत्वा तौ यदा अपृच्छत् तदा सः भानुवासरः इति, भानुवासरे सर्वकारीयकार्यालयानां विरामः इति च तयोः अन्यतरः अवदत् । भानुवासरे सर्वकारीयकार्यालयानां विरामः इति जोयिसेनापि ज्ञातम् । किन्तु प्रयाणनिश्चयावसरे तन्न प्रतिभातम् । तेषां प्रास्थानसमयस्तु तैः अतीतदिनं पञ्चाङ्गे यथादृष्टं तथा शुभकारि आसीत् । किन्तु अत्र एवं सञ्जातम् । स्वस्य जातया निराशतया गौडय्यः अवदत् – 'भानुवासरे किमर्थं सर्वकारीयाः विरामं विहितवन्तः ? देशे सर्वत्र सोमवासरे खलु विरामदिनम् ? अत एव तद्दिने यः कोऽपि कर्षणाय हलं न बध्नीयात् । कोऽपि सोमवासरे वृषभराजं न खेदयेत् इति शास्त्रमेव वदति ।'

तयोः एकतरः ललाटे भस्म धृत्वा तदुपरि कुङ्कुमं न्यस्तवान् रक्षिभटः तम् अवदत्– 'गौडतात, भवतः वचनं यथार्थम् । किन्तु सर्वकारः युरोपीयजनानाम् । तज्जात्यनुकूलतया भानुवासरे विरामः विहितः । भवतः ग्रामस्य सोमवासरः सर्वकारे न चलति ।'

जोयिसः रक्षिभटम् अपृच्छत् – 'अमल्दारस्य गृहं कुत्र ? किञ्चित् दर्शयति किम् ?'

ताल्लूककार्यालयस्य बृहत्प्राकारस्य पार्श्वे सप्ताष्टानां बृहद्वृक्षाणां मध्ये एकां सीमाछदियुक्तं भवनं तौ अदर्शयताम् । एतौ परिगृह्य जोयिसः प्राकारम् उल्लङ्घ्य भवनात् पुरतः उद्यानस्य द्वारं गतवान् यदा तदा तत्रैव स्थितः एक सद्गृहस्थः एतान् अपृच्छत् – 'किम् आवश्यकं भवताम् ? किमर्थमागमनम् ?'

तथा पृष्टवतः मुखं दृष्टं जोयिसेन। तस्य ललाटे विभूतिरासीत्, भ्रूमध्ये कुङ्कुममपि आसीत्। स्कन्धगतम् उपवीतं श्लक्ष्णे अन्तर्युतके दृश्यते स्म। कर्णे अरुणवर्णः ताटङ्कः। सुवर्णमिव भासमानेन चतुरङ्गुलमानेन अञ्चलेन युतां वेष्टिं धृतवतः तस्य आयुः पञ्चाशद्वर्षेभ्यः अधिकं चेदपि तस्य शरीरम् अङ्गानि च पुष्टान्यासन्। एषः एव अमल्दाराधिकारी इति ज्ञातवता जोयिसेन पृष्टम् – 'भवतां राज्यभारे अन्तर्गतस्य अग्रहारग्रामस्य वैदिकपुरोहितः अहम्। भवद्भ्यः राजाशीर्वादं कर्तुमागतोऽस्मि।'

'एतौ कौ ?'

'अस्मद्ग्रामीणावेव कृषिकौ। भवतः नत्वा गन्तव्यमित्यागतौ।'

जोयिसस्य वचनसूचनां ज्ञातवन्तौ गौडय्यचिण्णयौ स्वहस्ते विद्यमानं नवनीतपात्रं तृणानामुपरि संस्थाप्य भूमिं संस्पृश्य नतौ। 'अन्तः आगच्छन्तु' इति त्रीनपि वदन् अमल्दारः अन्तः प्रतिष्टः। गौडय्यः चिण्णय्यश्च बहिर्द्वारम् उत्क्रमितवन्तौ अपि अन्तर्द्वारस्य अन्तः न गतौ। अन्तर्द्वारस्य अन्तः स्थिते प्राङ्गणे चतुर्षु आसन्देषु अन्यतमे अमल्दारेण उपविश्य जोयिसाय अन्यस्मिन् आसन्दे प्रदर्शितेऽपि सः न उपाविशत्। स्वशुद्धवसने निबद्धं फलमन्त्राक्षतम् अपनीय दक्षिणहस्तेन परिगृह्य रागेण राजाशीर्वादमन्त्रम् उक्त्वा मन्त्राक्षतं तस्य शिरसि अर्पणानन्तरम् अमलदारः एव हस्यद्वयमपि प्रसार्य फलं स्वीकृत्य जोयिसम् अनमत्।

'भवतः सन्ध्यावन्दनम् अभूत् किम् ?' इति अमल्दारस्य प्रश्नस्य जोयिसः 'प्रातरुत्थाय स्नानं समाप्य आचमनत्रयं विधाय ग्रामात् प्रस्थानं कृतमभूत्' इत्यवदत्।

'कौशेयं धरतु। प्रथमं भोजनं भवतु' इत्युक्तवता अमल्दारेण एतद्द्वयोः पार्श्वे परिवृत्य 'उपविश्यताम्। भोजनं क्रियतां खलु' इत्युक्ते गौडय्यचिण्णय्ययोः अर्थः एव नाभूदिव आनन्दोऽभवत्। अमल्दारस्वामिनः गृहे आवयोः भोजनम् इति वाक्यं ताभ्यां स्वप्नेऽपि न भावितम् आसीत्। स्वामी उत्थाय अन्तः गतः। तस्य गृहस्य पाचकः बहिः आगत्य, कांस्यभाण्डे एताभ्याम् आनीतं नवनीतपिण्डं व्यतारयत्।

## 4

सर्वेषां भोजनानन्तरम् अमल्दारः अन्तः अङ्गणे एकस्मिन् काष्ठमये आसन्दे उपाविशत्। काळिङ्गगौडः चिण्णय्यश्च स्वामिनः पुरतः भित्तिसमीपे भूतले सङ्कुच्य

उपविष्टौ । तदनु अमल्दारेण उक्तम् – ‘गौडय्य, भोजनं कुर्वता मया जोयिसाय तदेव वचनम् उक्तम् । सः न्यायः उपरिष्टात् एव जातः अत्रागतः । आहारोत्पत्तेः अधिक्यसम्पादनाय किं कार्यम् इति सर्वकारनिष्ठाः युरोपीयाः केचन जनाः एकां समितिं रचितवन्तः । ‘गोचरभुवः सर्वाः कृषिकरणार्थं देयाः । अन्यथा स्वायत्तगोचराः कृषिभूमिरूपेण परिवर्तनीयाः’ इति तासां कृषिधारिणाम् आदेशः कर्तव्यः इति निदेशं विहितवन्तः । तद्रीत्या दिवानस्वामिनः रेविन्यू अरण्यायुक्तद्वारा एवम् आदेशं कारितवन्तः । मम हस्ते साध्यं किमपि नास्ति ।’

जोयिसः न्यवेदयत् – ‘स्वामिनः वाक्यस्य अर्थं वयं जानीमः । वयं दिवानाधिपान् द्रष्टुं तावत् न शक्ताः । अतः पुरोहितेन सता मया उच्यते भवान् । भवान् तथैव उपरिष्टात् लिखतु ।

तस्माद् गवां प्रचारं तु मुक्त्वा स्वर्गान्न हीयते ।
यश्छिनत्ति द्रुमं पुण्यं गोप्रचारं छिनत्यपि ॥

नाम गोचरभूमेः त्यागं ये कुवन्ति ते स्वर्गात् भ्रष्टाः न भवन्ति । गोचरभूमिं यः निवारयति, अथवा स्वहिताय उपयोजयति, वृक्षान् छिनत्ति तस्य एकविंशतिसन्तानपरम्परापर्यन्तं रौरवनरके पतति – इति शास्त्रेण उच्यते ।

गोकुलस्य तृषार्तस्य जलान्ते वसुधाधिप ।
उत्पादयति यो विघ्नं तमाहुर्ब्रह्मघातकम् ॥

गोः तृणानां, जलस्य वा यः हानिं करोति सः ब्रह्मघातकः इति महाभारते उक्तम् ।’

अमल्दारः जोयिसवचनम् आस्थया शृणोति स्म । सनातनिनः प्रतिदिनं सन्ध्यावन्दनं, देवपूजां कुर्वतः तस्य शास्त्रपुराणेषु महती भक्तिरासीत् । जोयिसः वदन् आसीत् –

धनुःशतं परिहारो ग्रामस्य स्यात् समन्ततः ।
शम्यापातास्त्रायो वापि त्रिगुणो नगरस्य तु ॥
तत्रापरिहृतं धान्यं विहिंस्युः पशवो यदि ।
न तत्र प्रणयेद्दण्डं नृपतिः पशुपक्षिणाम् ॥

शतधनुषां, नाम चतुःशतवितस्तीनां नाम, एकस्य दण्डस्य त्रिवारं क्षेपणेन या भूमिः आवृता भवति सा गवां कृते देया । नगरस्य समन्तात् चेत् एतस्याः त्रिगुणा भूमिः देया । एतस्य आयामस्य अन्तः यः कोऽपि केदारं निर्माय, तत्र कर्षयित्वा सस्यानि आरोपयति, तानि या काऽपि गौः चरति चेत् तस्याः गोः स्वामी राज्ञा न दण्डनीयः इत्यपि उक्तम् ।

गोमातरं वञ्चयित्वा अस्माभिः भूमातुः उपयोगः न कर्तव्यः । भूमातुः देहे प्रवृद्धानि तृणानि गोमाता भक्षयति चेदपि तत् क्षीरं भूत्वा पर्यायेण अस्माभिरेव प्राप्यते । मातुः क्षीरं वत्सं विना अन्यं कं जनं प्राप्नुयात् ?'

सत्यमिदं वचनमिति शिरःश्लाघनेन अमल्दारः अवदत् । 'शास्त्रिवर्य, भवता उक्तं सत्यमेव । शृण्वन्नेव तिष्ठामि चेत् मयापि भवादृशानां सन्निधौ एतसम्बन्धिशास्त्रमखिलम् अधीत्य ज्ञेयमिति आशा जायते । पाणिपादं प्रक्षालयितुम् उद्यानं गताः भवन्तः एव अपश्यन् खलु । अस्मद्गृहे सदा पञ्चषाः गावः तिष्ठन्ति । द्वे गावौ सदा दुह्यमाने भवतः । प्रातरुत्थाय शुद्धवस्त्रं परिधाय गोपूजाम् अविधाय मम गृहिणी पौत्राय अपि बिन्दुमपि क्षीरं न पाययति । किन्तु किं कर्तुं शक्यते ? सर्वकारशासकाः जनाः एव भिन्नाः । तेषाम् उपदेशकाः तज्ज्ञाः एव अन्ये । ते सर्वे इङ्ग्लेण्डजनाः । अथवा तत्र गत्वा प्रत्यागताः । मादृशस्य ताल्लूकु-अमल्दारस्य वचनं दिवानः शृणोति वा ? भोक्तारः कति जना इति प्रष्टुं भवतः कः अधिकारः, पर्णम् उन्नयेत् इत्युक्ते तत्क्षणमेव उन्नयनं भवतः कर्तव्यमिति वदन्ति । अस्मिन् प्रसङ्गे किं मया कर्तुं शक्यते ?'

तस्य सौजन्यं धर्मबुद्धिं च दृष्टवतः कालिङ्गगौडस्य अमल्दारस्वामी इति कल्पनया जातं भयम् अपगतम् आसीत् । मुखरेण तेन उक्तम् - 'स्वामिन्, मया वक्तव्यं किञ्चित् शृणु ।'

जोयिसः तत्क्षणम् अवदत् - 'गौडय्य, भवान् स्वामिनम् एवम् एकवचनेन शृणु, वद इति वदति वा ? भवतः ईषदपि नागरिकता नागता खलु ?'

अमल्दारः एव - 'भवतु भवतु, सः अभिमानेनैव वदन्नस्ति । किं तत् वदतु गौडय्य ।'

गौडय्यः अवदत् - 'मम अपराधः जातः पश्य । त्वम् एकवचनेन न वक्तव्यः । आवश्यकं चेत् भवानेव मम ग्रामम् आगत्य पश्यतु, मम आहत्य एकशतपञ्चाशत्-एकरेमिता गोचरभूमिः अस्ति । एतस्य चिण्णय्यस्य पञ्चाशत्एकरेमिता भूमिः । नाममात्रेण एषा मम वशे तस्य च वशे अस्ति । किन्तु तत्र अद्ययावत् यः कोऽपि आगत्य गां चारयितुं शक्नोति । गिरौ चरणसमाप्त्यनन्तरम् अस्मद्ग्रामीणाः अन्याः अपि धेनवः आगत्य अस्मद्-गेचरभूमौ चरन्ति । वयम् एकदापि एकामपि गां न धावयामासिम । तस्याः गौडगृहजनान् कुतः इति न पृष्टवन्तः । गोमाता इत्युक्ते यस्य कस्यापि गृहस्य भवतु समाना खलु ?'

अमल्दारः तस्य वाक्याय अभिनन्द्य शिरः श्लाघितवान् । गौडय्यः अन्ववर्तयत् -

'मम नाम कालिङ्गगौडः इति। 'धरणिमण्डल मध्यदेशे' इति गोगीतं भवद्भिः ज्ञातमेव। सः कालिङ्गवंशः अस्माकम्। अरुणाद्रेः समीपे एव अस्मद्ग्रामः वर्तते। मम गोष्ठे अद्यापि पुण्यकोटिसन्ततिरस्ति। मम पुत्रः गोः प्राणरक्षणाय स्वप्राणान् अत्यजत्।'

जोयिसः मध्ये मुखरीभूय – 'आम् आम्। गौडय्यस्य वचनम् अक्षरशः सत्यम्। तस्य कालिङ्गगौडस्यैव वंशः अयम्। काळेनपल्ली इत्येतत् पुण्यस्थलम्। भवता एकदा तत्र दयासन्निधिं कृत्वा तस्य गौडय्यस्य गोष्ठं दृष्ट्वा आगन्तव्यम्। कस्याः काश्याः रामेश्वरस्य वा न्यूनः स्यादयं पुण्यकोटिसन्ततिमत् गोष्ठं नाम ?' इत्यवदत्।

अमल्दारस्य इतोऽप्यधिका आस्था सञ्जाता। 'अग्रिमताल्लूकुजमाबन्दिसमये भवताम् अग्रहारमुख्यकेन्द्रम् अवश्यम् आगमिष्यामि। पुण्यस्थलं चेत् मम गृहिणी अपि आगच्छेत्। तादृशयाः पुण्यकोटिसन्ततेः पूजनेन जन्म सार्थकं भवेत्। वयं पूर्वमेव सूचयामः। भवानेव आगत्य शास्त्रोक्तरीत्या गोपूजां कारयेत्। वयं सामग्रीः आनेष्यामः।'

अमल्दारस्य गौडय्यस्य गोष्ठविषये भक्तिः कथञ्चिदुत्पन्ना एव। किन्तु तस्य गोचरभूमिं रक्षितुं सः असमर्थः आसीत्। न केवलं कालिङ्गगौडस्य, अपि तु यस्य कस्यापि भवतु गोचरः तस्य विषये तस्य भक्तिरासीदेव। तस्य रक्षणम् इच्छति स्म सः। किन्तु अधिकारः तस्य हस्ते न विद्यते। बहुकालं यावत् आलोच्य तेन उक्तम् – 'पश्य, न्यायप्रकारेण अहं किमपि कर्तुं न शक्नोमि। किन्तु भवतां गोचरस्य यथा हानिः न स्यात् तादृशः कश्चन उपायः उपदिश्यते। गोचरः अधुना क्षेत्रं कृतम्, किन्तु तत्र किमपि आरोपयितुं न शक्यम्। तथापि यत्र शक्यं तत्र सर्वत्र भूमौ कर्षित्वा बीजवपनं कृतम् इति भवान् इतः षट्सु मासेषु एकम् आवेदनं लिखतु। तस्य ग्रामकायस्थस्य नामाङ्कनमपि कारयतु। तस्य अधिकारपत्रे तेन अत्र तावती धान्यवृद्धिः न विद्यते, किञ्चित् कुलित्थः मरीचः वर्धितः इति निगदनं लिखितं चेत् पर्याप्तम्। ततःपरं मया तस्य एकरेमितस्य चत्वारि नाणकानि इति करः निर्णीयते। तथा नाम भवान् प्रतिवर्षं सार्धसप्तत्रिंशद्रूप्यकाणाम् अधिकं करं दद्यात्। एतेन चिण्णय्यगौडेन सार्धद्वादशरूप्यकाणि अधिकानि दातव्यानि। भवतां गोचरः तथैव स्थास्यति। इतोऽपि अधिकं किमपि कर्तुं न शक्यते। ममाधिकारे विद्यमानस्य गोचरस्य स्वामी आपादनम् आनयति चेत् एतदेव करोमि।'

जोयिसः अवदत् – 'अस्माकं गौडय्यः चिण्णय्यश्च धर्मकर्माभिज्ञौ। तौ इव अन्ये गोचरस्वामिनः कुर्वन्ति वा नवेति न जाने। एतस्यां स्थितौ भवताम् आदेशः एव साधुः।

गौडय्य, भवन्तः तथा कुर्वन्तु ।'

स्वामिनः उपदेशः गौडय्यचिण्णय्ययोः समञ्जसः इति अभासत । वर्षे सार्धसप्त-त्रिंशदधिकं करदानं गौडय्यस्य, सार्धद्वादशदानं चिण्णय्यस्य च भारः नाभूत् ।

पत्नीसमेतं स्वमिनं स्वग्रामाय आगन्तुम् आह्वानं दत्त्वा गौडय्यचिण्णय्यौ तं नमस्कृतवन्तौ । अमल्दारेण स्थालिकायां दत्तं नारिकेलफलं ताम्बूलोपरि स्थापितं रजतनाणकं च दक्षिणां स्वीकृत्य तम् आशीर्वादमन्त्रेण अभिनन्द्य जोयिसः अन्याभ्यां सह ग्रामं गतः ।

# चतुर्थः अध्यायः

## 1

अग्रिमतालूकजमाबन्दिनिमित्तं तत्र आगतः अमल्दारः स्वकुटुम्बेन साकं काळिङ्ग–गौडस्य गोष्ठे स्थितानां सर्वासां गवां पूजनं कृतवान् । तथैव पुण्यकोटिः स्वसत्यवाक्याय अन्विष्य गतां चण्डव्याघ्रगुहामपि आलोक्य आगतः । तस्याः गुहायाः पुरतः एव सः 'मम स्याः सहोदरी त्वं त्वां निहत्य प्राप्नोमि किम् ?' इति धेनुम् उक्त्वा स्वप्राणान् अत्यजत् । तत् स्थलं समन्तात् दृष्टवान् अमल्दारः 'अस्मिन् स्थले मण्डपमपि तु एकं निर्मातव्यम्, तत्र वर्षे एकवारमपि गोपूजा निर्वहणीया इति काळेनपल्लीजनैरेव तत् कार्यम्' इति च असूचयत् । तदर्थं सः एव प्रथमतया पंचविंशतिं रूप्यकाणि दत्तवान् । गोपूजार्थम् आनीतं द्वादशप्रस्थमितं तण्डुलं, पञ्चविंशतिनारिकेलफलानि, गुडचतुरस्रं, कदलीफलानि च जले निमज्य तस्य गृहिणी गोष्ठस्य सर्वधेनुभ्यः स्वहस्तेनैव भोजितवती । ग्रामस्य नन्दिमन्दिरे स्वपाचकेन सह वास्तव्यवते तस्मै काळिङ्गगौडः विशेषपाकं विधाप्य, तेषां गमनावसरे नवनीतपूर्णं घटं प्रेषयामास ।

काळेनपल्ल्याः गोचरभूमिः रक्षिता । किन्तु समन्तात् ग्रामीणाः सर्वे स्वगोचरभूमिं कर्षितवन्तः । केचन पश्चाद्भावि कुलित्थं वर्धितवन्तश्चेत् अन्ये रागिसस्यं वर्धितवन्तः । स्वायत्तगोचरस्वामिनः सर्वकारादेशात् पूर्वमेव स्वभूमेः बहुभागं कर्षयित्वा सस्यानि रोपितवन्तः । ताः भूमयः इतोऽपि गोचरभूमिरिति सर्वकारीयगणने लेखनेन तेषां करन्यूनतायाः आनुकूल्यमात्रं भवति । सर्वकारादेशजननानन्तरं सर्वकारीयगोचरभूमिषु बहूनां जनानां केदाराणि अभवन् । तत्र सम्यक् श्रमेण धान्योत्पन्नसाधकाः बहुन्यूनाः जनाः, तथापि स्वाधिकाररक्षणाय भूमिकर्षणेन कुलित्थम् आरोपयन्ति स्म ।

एतस्य परिणामः काळेनपल्याः काळिङ्गगौडचिण्णय्ययोः गोचरभूमेरुपरि जातः ।

समन्तात् ग्रामीणाः गोचराः नष्टाः क्षेत्राणि उदभवन् । तद्ग्रामधेनूनां चरणाय स्थलं नासीत् । स्वक्षेत्राणां पार्श्वे पादचरणेन धेनूनाम् उदरं न पूर्णं भवति स्म । एवं सर्वेऽपि स्वस्वगाः गिरेः उपत्यकां प्रापितवन्तः । समन्ततः ग्रामाणां गावः सर्वाः प्रविष्टाश्चेत् उपत्यकातृणानि कति दिनेषु रक्षितानि भवेयुः ? एकस्मिन्नेव मासे तेषां समूलोत्पाटनानन्तरं गाः काळेनपल्ल्याः गोचराय परिवर्तितवन्तः ।

आदौ आदौ काळिङ्गगौडः एतत् न लक्षितवान् । स्वगोचरे अन्येषां गवां चरणे तस्य आक्षेपः नासीदेव । 'भूमातरि गोमातुः चरणेन, मम किम् ? मत्पितुः किम् ?' इति तस्य मनोभावः आसीत् । अन्यच्च स्वकीयं गोचरं प्राप्तवत्सु कः खलु गाः अन्यगोचरे प्रचोदयेत् । किन्तु चिण्णय्येन अन्तर्विषयम् अन्विष्य, समीक्ष्य उदिते सति काळिङ्गगौडस्य कोपः जातः । 'चोराः मम पुत्राः, तेषां गवां दोहनमपि भवेत् । दासीपुत्राणाम् अङ्कुरं नष्टं भवेत् । रे, श्वः गत्वा गोपालकान् मम पुत्रान् निवार्य स्थगयामः' इति सः स्वभृत्यैः सह चिण्णय्यमपि नीत्वा अन्यस्मिन् दिने गवां चरणसमये गोचरभूमिं गतः ।

तत्र पश्यति चेत् समग्रे गोचरे परिपूर्णतया आवृताः गावः । ताः एकस्य ग्रामस्य न, एकस्य अग्रहारस्य न । ताभिः सह आगताः युवजनाः सर्वे धूमवर्तिकापानं कुर्वन्तः सीत्कारं कुर्वन्ति स्म । 'कस्तावत् तव जनयिता मम पुत्रः । रे गाः नयन्ति, उत न ?' इति गौडय्येन तर्जिते ते सर्वे क्षणकालं मौनिनो जाताः । किन्तु तेषां मध्ये ईषद्भाषणशीलाः केचन 'भवतः भूमिश्चेत् वृतिं बध्नातु तात' इत्यवदन् ।

'गोचरस्य को वा वृतिं बध्नीयात् ? भवतः पितुः कालात् गोपालनं कृतं खलु मम पुत्र ?' इति गौडय्यप्रश्नस्य तेषां मध्ये एकः 'हे गौडतात, ईषत् जिह्वां नियन्त्र्य भाषताम् । गोचरभूमिं कर्षयेत् इति सर्वकारः एव आदिशति । अधुना यस्य कस्यापि गोचरो वा गीचरो व न विद्यते । भवतः क्षेत्रं चेत् वृतिं बध्नातु' इत्युत्तरम् अदात् ।

गौडय्यस्य कोपः ब्रह्मरन्ध्रे प्राविशत् । सः स्वहस्ते स्थितं लगुडं वेगेन आदाय वक्तुः दिशि प्रेरितवान् । किन्तु सः अधः नतः सन् ताडनेन मुक्तः अभवत् । चिण्णय्यस्य पुत्रः वेङ्कटः गाः ताडयित्वा अन्यत्र चारयितुम् आरब्धवान् । किन्तु गौडय्यः अवदत् तम् 'रे, एते पापिनः मत्पुत्राः पापं कुर्वन्तीति त्वं गोमातरं ताडयसि ननु ? तेषां गृहस्य वा त्वद्गृहस्य वा भवन्तु, सर्वाः अपि गोमातरः एव । तं लगुडमादाय एतेषां दासीपुत्राणां शिरःकपालेषु त्रिचतुरवारं ताडय ।'

वेङ्कटः दण्डमादाय अग्रे धावन् सरभसेन आक्रामति येन गोपालकाः विद्राविताः । एते सर्वे मिलित्वा गाः तर्जयन्तः प्रधाव्य आगताः ।

तथापि अनन्तरदिनात् चोरचरणलीला न स्थागिता । अत्र तत्र कुत्रापि परिगताः ग्रामीणाः गाः बन्धमुक्ताः कुर्वन्ति । योजयन्ति स्म ।

## 2

अस्मिन् वर्षे काळिङ्गगौडस्य गवाम् आर्द्रतृणचरणाय ईषत् हानिः जाता । गौडः सदा वर्षद्वयपर्याप्तानि तृणानि सञ्चित्य स्थापयतीति हेतोः गवां बहिः उदरम् अर्धपूर्णं चेदपि गृहे पूर्णोदरं शुष्कतृणानि लभ्यन्ते स्म । किन्तु शाद्वले पादान् चालयतां सरस-तृणचरणेन यत् सुखं सन्तोषश्च तत् बन्धकशुष्कतृणजग्ध्या न लभ्यते एव । तेन गवां शरीरं न पूर्णं जातम्, किञ्च धेनुषु पूर्णं क्षीरमपि न स्यन्दते स्म । पुरातनसङ्ग्रहः विद्यते इति कृत्वा अस्मिन्नवसरे शुष्कतृणैः कथा समाप्तिमेति । आगामिवर्षेऽपि गोचरे तृणानि पश्यतोहराणां गवां स्वाहाकारः भवति चेत् गौडस्य गवां का गतिः स्यात् ? अन्यच्च स्वतः गोचररहितानां त्रिचतुरगोमतां काळेनपल्लीजनानाम् इतोऽपि कष्टं स्यात् ।

एकस्मिन् दिने अमुमेव विषयम् अधिकृत्य काळिङ्गगौडचिण्णय्यौ सह चर्चितवन्तौ । चिण्णय्यः अवदत् – 'अग्रिमे वर्षे अस्मद्गोचराय गाः चोदयतां मध्ये चतुर्णां जनानां हननं कर्तव्यम् । तेन भीतः यः कोऽपि दासीपुत्रः अस्मत्पार्श्वं नागच्छेत् ।'

'हे विक्षिप्तबुद्धे, तव शिरः नष्टं विद्यते वा ? हननं क्रियते चेत् सर्वकारीयजनाः अस्मान् कण्ठे पाशबद्धान् कुर्युः ।'

'तर्हि ते सर्वकारीयाः एतेषां चोरदासीपुत्राणां किमर्थं बुद्धिं न पाठयन्ति ?'

सर्वकारविषये आगते काळिङ्गगौडस्य अमल्दारस्मरणम् अभवत् । तस्य दर्शनेन किमपि साहाय्यं कुर्यात् सः इति आशा अपि उदभूत् । तस्य काळेनपल्ल्यागमनानन्तरं सार्धैकवर्षम् अतीतम् । अधुना सः तत्रैव ताल्लूकुकेन्द्रे अस्ति, उत स्थानान्तरं गतः स्यात् इति गौडेन न ज्ञातम् । अन्यदिने सः एव अग्रहारं गत्वा शालाशिक्षकं विचारितवान् । 'सः अत्रैव अस्ति । तदैव तस्य स्थानान्तरगमनादेशः प्राप्तः आसीत् । किन्तु तस्य निवृत्तिकालः सन्निहितः । 'निवृत्तः भविष्यामि । मां किमर्थं स्थानान्तरं प्रापयन्ति स्वामिनः ।

इतः सार्धैक-वर्षम् अत्रैव स्थास्यामि' इति उपरितनान् प्रार्थितवान् इति । अतः सः अत्रैव अस्ति । इतः षट्सु मासेषु अत्रैव स्थास्यति' इति शिक्षकः अवदत् ।

'कथमपि ज्येष्ठैः सह संलापः कर्तव्यः । अहम् एकः मन्दमतिः । अस्माभिः साकं जोयिसः अस्ति चेत् वरम्' इति आलोच्य काळिङ्गगौडः कस्मिंश्चित् दिने जोयिसमपि नीत्वा चिण्णय्येन साकं ताल्लूकुकेन्द्रं प्रस्थितः । स्वस्वगौरवम् इति तौ द्वावपि घटे नवनीतं नीतवन्तौ । जोयिसः पूर्ववत् नारिकेलफलं मन्त्राक्षतांश्च स्कन्धांशुकस्य कोटौ निबद्धवान् ।

तद्दिनमपि भानुवासरः आसीत् । स्वामिनः गृहे एव वार्तालापः भवेदिति स एव वासरः जोयिसेन चितः आसीत् । एकादशवादने एतेषां गमनावसरे अमल्दारः गृहे एव आसीत् । 'आगच्छन्तु, आगच्छन्तु । मयापि ततःपरं भवतां पार्श्वे आगन्तुं न शक्तमासीत् । भवतां विषयोऽपि न ज्ञातः । मण्डपनिर्माणकार्यं कियत्पर्यन्तमागतम् ?' इति वदन् सः स्वागतं कृतवान् । एतेषां त्रयाणामपि भोजनानन्तरं पुनः मण्डपवार्ता एव उद्धृता – 'तथा चिन्त्यते चेत् एकं देवस्थानमेव निर्मितं भवेत् । नो चेत् एकं मण्डपम् अपि वरम् । कार्यं कियत्पर्यन्तम् आगतम् ?'

गौडय्यः अवदत् – 'अस्मद्ग्रामीणाः कृषिकराः धनम् अर्पितवन्तः । धनसङ्ग्रहः कथमपि भवेत् । चन्द्रेनपल्ल्याः शिवलिङ्गाचार्यः आहूतोऽस्ति । सः आगत्य भूमिं समग्रां परिशील्य गतः । केवलं मन्दिरनिर्माणं न पर्याप्तम् । अग्रे एकं सरः अपि उत्खातयितव्यम् । तत्र गोधेनवः जलं यथा पिबेयुः तथा भवेदिति उक्तवान् ।'

सा अत्युत्तमा सूचना । कुर्वन्तु, कुर्वन्तु । धनव्ययः अधिकश्चेदपि साधुः । आवश्यकं चेत् अहं धनस्य कृते कमपि मार्गं करोमि । मम निवृत्तेः पूर्वं भवति चेत् अस्य ग्रामस्य वणिग्भ्यः सर्वकारीयभृत्येभ्यः उपहारं सङ्ग्राहयामि ।'

'आर्य, अस्माकं मन्दिरस्य निर्माणाय वयमेव धनम् अर्पयामः । काळिङ्गगोपस्य कुलजातः खल्वहम् ? मम गोष्ठस्यैव खलु पुण्यकोटिधेनुः । दशसहस्रं यावत् अहम् अर्पयामि । धनविषये चिन्ता नास्ति । अस्मद्ग्रामस्थाः एव प्रतिगृहम् एकः पुरुषः एका नारीति गत्वा कर्मापि कुर्वन्ति ।'

'तर्हि कार्यम् अद्यापि कुतः नारब्धम् ?'

'अधुना शिवलिङ्गाचारी नागेनपल्ल्याम् एकम् ईश्वरमन्दिरं रचयन् अस्ति । इतः षण्मासान् अतीत्य सः अस्मद्ग्रामम् आगमिष्यति । मन्दिरनिर्माणाय अपेक्षितानां

शिलानामेव समस्या । अस्मद्गिरेः शिलाः मन्दिरनिर्माणाय न शुद्धाः इत्युच्यते । अन्तरङ्गणाय तु सा न योजनीया एव इति सः आचारी अवदत् । शिला बेट्टीक्यरेगिरितः आनेया । अस्मद्ग्रामात् पञ्चषाणां क्रोशदूरं भवति । आर्य, भवान् यस्मिन् कस्मिन्नपि ग्रामे भवति चेदपि भवन्तं विहाय कुर्मः किम् ?'

अमल्दारः नितरां सन्तुष्टः । सः अवदत् – 'अत्युत्तमं कार्यम् । सरः ईषत् बृहद्रीत्या उत्खातयन्तु । अग्रे तस्मिन्नेव प्रदेशे वर्षे एकवारं गावां यात्रा चालयितुं शक्यते । सङ्क्रान्त्युत्सवदिने क्षीरान्नं कारयतु इति पुण्यकोटिधेनुः भवद्वंशजाय गोपगौडाय उक्तवती खलु ? तद्दिने तस्मिन्नेव स्थले महान् उत्सवः भवतु । गोः यात्रोत्सवः अपि भवतु । जलस्य छायायाश्च आनुकूल्यमस्ति चेत् आसमन्तात् जनाः गाः चोदयन्तः आगच्छन्ति ।'

अयं नूतनः विचारः काळिङ्गगौडस्य मनसि हर्षम् अवर्धयत् । तस्य कल्पना तदैव गोयात्रोत्सवम् अपश्यत् । 'चण्डव्याघ्रस्य गुहास्थले विपुला छाया अस्ति । समन्ततः वटशखानाम् अरोपणेन ताः इतोऽपि वर्धन्ते । घनरीत्या अधः यात्रोत्सवः कर्तुं शक्यः' इति चिण्णय्यः अपि उक्तवान् ।

एतेषाम् अधुना स्वसविधे आगमनस्य कारणम् अमल्दारः पृष्टवान् । स्थिते विषये काळिङ्गगौडस्य विवरणानन्तरं सः अवदत् – 'एवमेव भवेदिति मम पूर्वमेव अभासत । ग्रामे प्रत्येकं जनः कृषिं करोति चेत् यस्य कस्यापि क्षेत्रे चौर्यं न भवेत् । सर्वेऽपि स्वस्वक्षेत्राणि कृषिविहीनानि त्यजन्ति चेत् अन्ये सर्वे कृषिवतां क्षेत्रेषु दृष्टिं प्रसारयन्ति । एवमेव एतत् । समन्ततः ग्रामजनाः स्वस्वगोचरे कृषिं कृतवन्तः । गवां तृणानि न सन्ति । एतेषां गोचरः नापेक्षितः । गौस्तु अपेक्षिता ।'

'एतेषां मत्पुत्राणां बुद्धिः न विद्यते वा ?' गौडय्यः पृष्टवान् ।

'एतद्विषये सर्वकारः प्रष्टव्यः । जनानाम् अधिकः आहारः आवश्यकः । तदर्थं अधिकतया कृषिः भवेत् । तदर्थम् अधिकाः गावः अपेक्षिताः । गोः उर्वरः आवश्यकः । किन्तु गोचरभूमिः निवारणीया । सर्वकारे तज्ज्ञाः एव एतादृशम् आदेशम् उद्भावयन्ति । किं कर्तव्यम् अत्र ?'

'स्वामिन्, अस्माकं भवानेव यं कमपि मार्गं दर्शयेत् ।'

अमल्दारः पञ्चनिमेषं यावत् स्वस्मिन्नेव आलोच्य तदनु अवदत् – 'भवतां ग्रामे गोष्ठं नास्ति वा ?'

'अस्ति ममैव गोष्ठं बृहत् अस्ति । इतोऽपि एकं द्वयम् अल्पगात्रं गोष्ठमप्यस्ति । अन्ये सर्वे गृहगोष्ठे एव गाः बध्नन्ति ।'

'तन्न पृष्टं मया । याः खलगावः क्षेत्रे चरन्ति ताः बन्धनेन स्थापयितु योग्यं गोष्ठम् अस्ति वा ?'

जोयिसः अवदत् – 'स्वामिना उच्यमानम् अस्मद्ग्रामे विद्यते खलु । रङ्गेगौडः यत् निर्वहति तादृशं गोष्ठम् । काळेनपल्ल्यां तत् नास्ति ।'

गौडय्यचिण्णय्ययोः इदानीं बोधः जातः । अमल्दारेण एकः उपायः सूचितः – 'अस्मद्ग्रामाय एकं गोष्ठम् आवश्यकम् इति मह्यम् एकम् आवेदनं ददतु । तस्य ग्रामीणस्य रक्षिभटाधिकारिणः नामाङ्कनं तत्र भवेत् । मया अनुमोद्यते । भवद्ग्रामे एव यः कोऽपि दशरूप्यकाणां पणेन घोषं कृत्वा स्वीकरोतु । भवतां गोचरः अधुना केदारम् इति सर्वकारेण परिगणितः । तत्र वा भवद्ग्रामसविधे लग्नाम् अन्यां यां कामपि भूमिम् अन्यग्रामात् या काऽपि गौः वत्सो वा आगच्छति चेदपि गृहीत्वा गोष्ठे स्थापयन्तु । एकस्याः गोः प्रत्यहं पञ्चाशत् आणकानि इति दण्डम् अर्पयित्वा तत्स्वामी विमोच्य नयेत् । अष्ट दिनानि यावत् यः कोऽपि विमोचकः नागच्छति चेत् ग्रामस्य पञ्चायतानां समक्षं गां पणेन दत्त्वा गोष्ठव्ययं व्यवकलय्य अवशिष्टं धनं सर्वकारकोशागाराय अर्पयेत् । एवं त्रिचतुरगवां कुर्वन्तु । अग्रे यः कोऽपि भवद्ग्रामस्य दिशि एकामपि गां न चोदयति ।'

सः एव उत्तमः उपायः इति जोयिसः उक्तवान् । स्वग्रामस्य सर्वकारीयगोष्ठम् आवश्यकम् इति आवेदनं विलिख्य, ग्रामस्थानां नामङ्कनेन साकम् आनेष्यामः इति गौडय्य-चिण्णय्याभ्याम् अङ्गीकृतम् ।

## 3

द्वादशरूप्यकाणाम् आधारेण पणाय कट्टेमने शिङ्ग्रीगौडः गोष्ठस्य दायित्वं स्वीकृतवान् । न्यायानुगुणं समन्ततः ग्रामेषु सर्वेषु भेरीघोषेण 'काळेनपल्ल्या नूतनतया गोष्ठं प्राप्तम् । यः कोऽपि काळेनपल्लीक्षेत्राय गां चोदयति चेत् गृहीत्वा गोष्ठे बध्यते । दिनं यावत् अष्टाणकदण्डः । अष्टदिनेभ्यः अनन्तरं पणम् आहूयते' इति घोषणमपि कृतम् ।

तथापि अग्रिमवर्षाकालादनन्तरं गोचरे अन्यग्रामतः गवाम् आगमनं न स्थगितम् । एकस्मिन् दिने काळेनपल्ल्याः सर्वे जनाः सम्भूय न केवलं गोचरं, स्वग्रामस्य सविधात् बहिः स्थितां गिरेः सानुमपि गत्वा आहत्य त्रिशतं गाः गृहीत्वा आनिन्युः । गोस्वामिनः आगत्य तद्दिने सायं ताडनकलहाय आगच्छाम इति तर्जनं प्रेषितवन्तः । चिण्णय्यस्य पुत्रः वेङ्कटः धावित्वा गत्वा अग्रहारतः रक्षिभटद्वयम् आनीतवान् । ताडनाय आगताः भीताः । अन्ते गवाम् अष्ट नाणकानीति गोष्ठाय सार्धैकशतं रूप्यकाणि दत्त्वा स्वामिनः गाः मोचयित्वा नीतवन्तः । तावद्दूरात् आगतौ रक्षिभटौ तत्र शतं रूप्यकाणि नीतवन्तौ । गोष्ठदायिनः शिङ्ग्रीगौडस्य पञ्चाशत् रूप्यकाणि अवशिष्टानि । तत् न स्वल्पः लाभः । तेन सर्वकाराय अर्पितं केवलं द्वादश रूप्यकाणि एव ।

तद्दिनादारभ्य शिङ्ग्रीगौडस्य नूतनः उद्योगः लब्ध इव अभवत् । प्रातरुत्थितश्चेत् सः एव ग्रामस्य क्षेत्रे सर्वत्र भ्रमति स्म । गिरेः सानावपि अन्विष्यति स्म । एका अपि गौः लभते चेत् अष्टानाम् आणकानां सम्पादनम् । समन्ततः केनापि ग्रामीणेन शिङ्ग्रीगौडस्य दृष्टिम् अपावर्तितुं न शक्यते स्म । समग्रः अरुणाद्रिः काळेनपल्ल्याः सम्बद्धः इति, तथैव अमल्दारादेशः एव अस्ति इति पृष्टान् वदति स्म । इत्थं च प्रत्यहं द्वित्रेभ्यः अधिकानां रूप्यकाणां सम्पादनं भवति स्म ।

द्वित्रमासेषु अन्यग्रामतः गवां तत्र भ्रमिसूचना अपि स्थगिता । शिङ्ग्रीगौडस्य सम्पादनमपि तत्रैव समाप्तम् । किन्तु किमपि सम्पादनं विना सः कथं सामयिकः भवेत् ? एकस्मिन् दिने सः काळेनपल्ल्याः एव द्वौ वृषभौ आनीय गोष्ठे बद्धवान् । तौ काळिङ्ग-गौडस्य केदारे चरन्तौ आस्ताम् । वृषभस्वामी गत्वा पृच्छति चेत् एकं रूप्यकं दत्त्वा विमोच्य नेयौ इत्यवदत् । सः काळिङ्गगौडाय एव निवेदितवान् ।

'अस्मद्ग्रामीणा गौः चरति चेत् गोष्ठे न बद्धव्यः' इति गौडेन उक्ते गोष्ठसामयिकः 'तथा वदसि चेत् मम सम्पादनं कथं भवेत् ?' इति पृष्टवान् । गौडः कुपितः जातः । 'त्वं कृषिकर्म नीत्वा निःस्वः जातो वा ? गवां गोष्ठे बन्धनेन सम्पादयितुं तिष्ठसि वा ? तव द्वादश रूप्यकाणि ग्रामे सञ्चित्य प्रापयामि । वयम् अन्येषां गाम् आनीय स्थापयामः चेत् त्वं स्वीकुर्याः । नो चेत् न । कृषिकस्य पुत्रत्वेन जातः क्षेत्रे श्रमेण जीवनं विहाय गोबन्धनेन सम्पादयितुं प्रवृत्तोऽसि' इति तेन उपालब्धः शिङ्ग्रीगौडः न प्रत्युत्तरम् अदात् । किन्तु मनसि 'इतः परम् अन्यग्रामात् गौः आगच्छति चेदपि न गृह्णामि । मया किञ्चित् निर्बन्धः कृत इति अस्य तातस्य कोपावेशः इव दृश्यते' इति चिन्तितवान् ।

एकस्मिन् दिने शिङ्ग्रीगौडः अन्यग्रामस्य गर्भिणीं गाम् आनीय गोष्ठे बद्धवान् । एकस्मिन् दिने गतेऽपि न कोऽपि तां विमोच्य नेतुम् आगतः । गर्भिणी धेनुः इति श्रुतवता गौडेन स्वयं तत्र गत्वा दृष्टं चेत् तस्याः प्रसवदिनं परिपूर्णम् आसीत् । अद्य श्वो वा प्रसवः स्यात् । सामयिकेन ह्यः आरभ्य तस्यै तृणानि अपि न दत्तानि । तां दृष्टवतः नयने अश्रुपूर्णे जाते गौडस्य । अन्यच्च शिङ्ग्रीगौडस्य विषये कोपोऽपि जातः । साक्षात् तस्य गृहं गत्वा 'त्वं सापत्यः किल ? एतादृशं पापं करोषि चेत् तव अपत्यानि जीवन्ति किं नु ? नीचापसद, दासीपुत्र, प्रत्यहम् अष्टाणकानि स्वीकरोषि । धेनोः तृणानि देयानि इति ज्ञानं नास्ति वा ? त्वं तस्याः तृणमपि दद्याः इति सर्वकारादेशः एव अस्ति' इति गौडेन निन्दितः शिङ्ग्रीगौडः गोष्ठस्य तालकुञ्चिकाम् आनीय गौडस्य पुरतः संस्थाप्य 'तात, मम अयं समयोऽपि मास्तु । क्लेशोऽपि मास्तु । दृष्टानां गवां तृणदानाय इति न मया गोष्ठसमयः स्वीकृतः । भवानेव स्वीकरोतु गोष्ठम्' इत्यवदत् । 'रे, त्वं जीवसि इत्येव अस्माकं साक्षीभवति मम पुत्र' इत्युक्त्वा गौडय्यः तालकुञ्चिकाम् आनीय गोष्ठद्वारम् उद्घाट्य दिनपूर्णायै तस्यै गवे स्वगृहादेव तृणानि मण्डं च आनाय्य अर्पितवान् । धेनुः आदौ द्विप्रस्थपूर्णं मण्डं पीतवती । अनन्तरं तृणखादनाय प्रवृत्ता । गौडय्यः तस्याः कण्ठम्, उदरं, वस्तिं कटिं च परिमार्जयन् 'गोपालकानां दासीपुत्राणां सा उन्मुच्य गता चेत् अन्वेषणं न शक्यते किम् ? एतादृशाः मम पुत्राः कुतो वा गोधनपालनं कुर्युः ?' इति उपालभते स्म ।

तावता कालेन गौः इतस्ततः पदं न्यस्यन्ती पश्चात् पादम् उन्नीय तोदयितुम् आरब्धवती । तावत्पर्यन्तं शरीरं मार्जयन्तं गौडमेव सिरिति तोदयितुं प्रवृत्ता । 'हला एषा, भुक्तम् अधिको जातो ग्रासः' इति सः नासारज्जुं गृहीत्वा रज्ज्वा एकत्र बद्ध्वा पश्यति चेत्, तस्याः प्रसूतिचिह्नं लक्षितम् । 'तिष्ठ अम्ब तिष्ठ, अत्रैव वत्सं चोदय, कापि चिन्ता मास्तु । तव शुश्रूषां सर्वामपि अहं करोमि' इति गाम् अवदत् । गौः 'हूम्' इतीव द्विवारं स्पन्दितवती ।

गौडः गृहं गतः । लक्कम्मा पिष्टपिण्डं सज्जीकुर्वती आसीत् । वृत्तं तस्यै आवेद्य स्वयमेव जम्बीरफलद्वयं, हरिद्राम् आर्द्रं वस्त्रं कलशपूर्णं जलं च उद्वाह्य गोष्ठम् आगतः । यत्र बद्धा आसीत् तत्रैव गौडम् अङ्गारतुल्यदृष्ट्या पश्यन्ती गौः सिर् इति तोदयितुं शिरः स्पन्दयन्ती आसीत् । एषः किञ्चिद्दूरे एव उपविश्य प्रतिपालयति स्म । एका घण्टा अतीता चेदपि प्रसूतिः नाभूत् ।

तावता लक्कम्मा तत्र आगता । 'तदारभ्य प्रतिपालयन्नस्मि । अधुनापि न प्रसूते एषा । मामेव तोदयन्तीव पश्यति' इति गौडेन उक्ते सा गोसमीपं गत्वा परीक्षितवती । किमन्यत्, प्रसवकालः सन्निहितः आसीत् । गौडी परिवृत्य पतिं दृष्ट्वा अवदत् – 'भवतः बोधः न विद्यते वा ? पुरुषः अग्रे अस्ति चेत् गौः प्रसूते किं नु ? न लज्जते किं सा ? भवान् अन्यत्र पार्श्वे गच्छतु ।'

'तदपि सत्यम् । तन्न मम चित्ते स्फुरितं खलु ?' इति स्वस्य मूर्खतां स्वयमेव उपालभ्य, गौडः गोष्ठात् बहिः आगत्य पुरोगतस्य वटवृक्षस्य छायायाम् उपविष्टः । अल्पेनैव कालेन तत्रागतः चिण्णय्यः । 'किमेतत् गौडय्य, अत्र उपविष्टोऽसि ?' इति तेन पृष्टे गोष्ठस्य दायित्ववतः शिङ्ग्रीगौडस्य व्यवहारं निवेदितवान् । चिण्णय्यः एव 'तत् मयापि ज्ञातमेव आर्य ! सः मत्पुत्रः गोष्ठम् इत्युक्ते धनसम्पादनमिति ज्ञातवान् । अष्टाणकानि स्वीकरोति, गोधनम् उपवासेन स्थापयति । किमिदं समुचितम् ? पापीत्ययं पापः' इत्यवदत् ।

चिण्णय्यः काळिङ्गगौडश्च द्वावपि आलोच्य तस्य एकं परिहारं चिन्तितवन्तौ । शिङ्ग्रीगौडः गोष्ठसमयात् त्यक्तव्यः । चिण्णय्यपुत्रः वेङ्कटः समयं स्वीकृत्य, गृहीत्वा स्थापितानां गवां तृणं जलं च सुष्ठु दद्यात् । तासां जलम् उन्नीय स्थापयितुं वर्षस्य दशरूप्यकवेतनेन एकः भृत्यः एव नियोजनीयः । तृणव्ययं स्वीकृत्य, सर्वकाराय देयानि द्वादश रूप्यकाणि व्यवकलय्य अवशिष्टं धनं गिरिसमीपे निर्मातव्याय देवालयाय दद्यात् ।

तावता गौडी गोष्ठात् आगत्य उक्तवती – 'धेनुः प्रसूता । वृषभशिशुः अतीव रम्यः अस्ति । ईषत् देहक्षालनाय इतोऽपि अल्पं जलम् आवश्यकम् ।'

चिण्णय्यः गत्वा घटद्वयमितं जलम् आनयत् । सद्यः प्रसूता गौः स्वसमीपम् आगन्तुं कमपि नाङ्गीकरोति चेदपि गौडय्यः तस्याः नासारज्जुं गृहीतवान् । लक्कम्मा चिण्णय्यश्च तस्याः देहं शुभ्रतया क्षालितवन्तौ । लक्कम्मा वत्सस्य गात्रं क्षालितवती । अनन्तरं ते प्रसूतायाः ललाटे शृङ्गयोश्च हरिद्रां कुङ्कुमं च लिप्त्वा, नारिकेलफलमेकं भित्त्वा दृष्टिनीराजनं कृत्वा फलद्वयार्पणं कृतवती । गोष्ठात् बहिः स्थितात् शकटात् एकस्मात् अञ्जनम् आनीय तस्याः मुखे परिमार्ज्य दृष्टिपातनिवारणं साधितवती । प्रसूतां, सौम्यशिशुं च एकाकित्वेन अस्मिन् गोष्ठे कथं त्यजेत् ? लक्कम्मा वत्सम् उन्नीतवती । गौडय्यः मातुः नासारज्जुं गृहीत्वा स्वगृहम् आनीय प्रस्थितः । अग्रे अग्रे गच्छतः लक्कम्माबाह्वोः स्थितस्य स्ववत्सस्य देहं लिहन्ती प्रसूः गच्छति स्म । गोष्ठे एव स्थितः चिण्णय्यः पुरातनं शरावमेकम् आदाय प्रसवान्त्रमुन्नीय क्षिप्तवान् ।

स्वगोष्ठागमनानन्तरं लक्कम्मा गोः विषविकारः न स्यात् यथा तथा देहं हरिद्रया विलिप्तवती। गौडय्यः वाटिकां गत्वा हरितदलम् आनीय निष्पेष्य, योनिद्वारे लिप्तवान्। नूतनप्रस्वाः शैत्यं भवेत्। श्वश्र्वादेशेन मूका तायव्वा प्रस्थद्वयमितं तण्डुलं जले निमज्ज्य स्वादु नारिकेलेन साकं निष्पेष्य पायितवती। तावता गोस्वामी अन्विष्यन् तत्र आगतः। मार्कि पञ्चविंशतिवर्षवयसं तं पश्यन्नेव गौडय्यः उद्दीप्तः। 'कस्याः सीमायाः कृषिकरः मत्पुत्रस्त्वम् ? गर्भिणीं गां द्वे दिने विस्मृत्य स्थितोऽसि खलु ? दुग्धं पातुं शक्यते, लक्ष्ये द्रष्टुं न शक्यते किम् ?'

'अत्र आगता इति अस्माभिः न ज्ञतं तात, वयं स्वारेनपल्ली सुरगेपल्ली इति तत्र सर्वत्र अन्विष्य भ्रान्ताः।'

'तव ग्रामः कः ?'

'द्यावलापुरम्।'

द्यावलापुरं काळेनपल्लीतः एकगव्यूतिदूरे भवति। सद्यःप्रसूतां गां तावद्दूरं न गमयेत् इति गौडय्यः अवदत्। 'दिनद्वयं यावत् गौः वत्सश्च अस्मद्गृहे एव तिष्ठताम्। परेद्युः नय। त्वं भोजनाय उत्तिष्ठ' इत्युक्त्वा तं भोजयित्वा प्रेषितवान्।

अन्यस्मिन् दिने गोवत्सयोः नयनकाले लक्कम्मा गोः कुङ्कुमं विलिप्य नेत्रयोः संयोज्य प्रेषितवती। पञ्चदिनानां गोष्ठशुल्कं सार्धरूप्यकद्वयं बहिः निष्कास्य 'प्रसूतायाः शुश्रूषार्थं कियान् व्ययो जातः ?' इति स्वामिना पृष्टे गौडय्यः कुपितोऽभूत्। 'त्वमेक एव धनदर्शकः किम् ? गृहपुत्री इव सा आगत्य प्रसूतिशुश्रूषां कारयित्वा वृषशिशुम् उन्नीय गच्छति। तदर्थं शुल्कं स्वीकार्यं वा मया ?'

गोस्वामी मौनम् अतिष्ठत्। काळिङ्गगौडः एवावदत् – 'अत्र पश्य, तव गोः रज्जुः ग्रहीतव्या नास्ति। बालशिशुं न पद्भ्यां गमय। तम् आलिङ्ग्य त्वम् उद्धृत्य अग्रे अग्रे गच्छ। सा तस्य पृष्ठत एव आगच्छति।'

## पञ्चमः अध्यायः

### 1

पुट्टकाळिङ्गस्य अग्रहारस्य प्राथमिकशालायां चतुर्षु वर्षेषु अध्ययनसमाप्त्यनन्तरं आङ्ग्लभाषाध्यापनाय ताल्लूकुकेन्द्रे प्रवेशयितुं जोयिसेन उक्तम् ! एकः एव पौत्रः इति तस्य तत्र प्रेषणं समुचितमिति गौडय्यस्य न भाति । आङ्ग्लभाषाध्ययनेन साध्यं किम् अस्ति ? पौत्रः अग्रहारशालाध्ययनं समापितवान् । नलचरित्रपद्यं पठितुं शक्नोति । इतः अवशिष्टं जैमिनीयम् । येन केनापि अध्याप्यते चेत् विद्या समाप्ता इव – इति गौडय्यस्य विचारः । 'एतस्य कालस्य समुचितम् इति कृत्वा किञ्चित् आङ्ग्लभाषामपि अधीते चेत् हानिः का ?' इति जोयिसः एव बलात् उक्तवान् ।

जोयिसस्य पुत्रः वेङ्कटरमणः पुट्टकाळिङ्गात् त्रिवर्षैः ज्येष्ठः इदानीं तालूकुकेन्द्रे इङ्ग्लिष्-तृतीयवर्षे पठति । अधुनैव उपनयनमपि तस्य अभूत् । पितुः सकाशे ईषत् वेदपाठोऽपि अधीतः । भोजनाय भिक्षान्नम् आनीय नरसिंहदेवस्थानस्य प्राकारे स्थिते कस्मिंश्चित् मण्डपे निवसति । द्वारं तालं चास्ति अस्य मण्डपस्य । इतोऽपि पञ्चषाः ब्राह्मणवटवः अस्मिन् मण्डपे निवसन्ति । देवस्थाने सायं प्रातः प्रवर्तमानासु संस्कृत-कक्ष्यासु अपि अध्ययनं करोति । मूर्ध्नः प्राङ्मुखे क्षौरं कारयित्वा, पश्चाद्भागे आयत-केशानां ग्रन्थिं घनतया निबद्ध्य, ललाटे गोपीचन्दनं विलिप्य, वामहस्ते श्वेतप्रसेवं लम्बयित्वा, दक्षिणहस्ते सारपात्रं परिगृह्य भिक्षान्नाय गच्छति चेत् सः प्राचीनऋष्याश्रम-कालस्य वटुरिव भाति ।

जोयिसः गौडज्जम् उक्तवान् – 'गौडय्य, भवतः पौत्रमपि तत्र प्रवेशय । कृषिकराणां छात्रावासः इति निर्मितोऽस्ति इति श्रूयते । वर्षं यावत् पलद्वयरागिधान्यं, पञ्चविंशतिः रूप्यकाणि दीयन्ते चेत् सुखेन भोजनं कल्पयन्ति इति । भवतः पौत्रस्य दायित्वम् अस्मद्वेङ्कटरमणः स्वीकरोति । अत्र यथा अध्यापितवान् तथा तत्रापि पाठं कमपि

अध्यापयति । किमपि न चिन्तयतु भवान् ।'

गौडय्यः पौत्रं माध्यमिकशालां प्रवेश्य आगतः । ताल्लूककेन्द्रमिति न सामान्यं तत्, अमल्दारस्वामिनः कार्यालयवत् स्थानम् । पूर्वं स्थितः अमल्दारः निवृत्तः, अधुना स्वस्थानं श्रीरङ्गपट्टणं गतः । गौडय्यः एव शकटे रागीधान्यं, अवरेधान्यं, तण्डुलान् च आरोप्य, छात्रावासं गत्वा तत्सर्वं तत्र समर्प्य पौत्रस्य व्यवस्थां विधाय आगतः ।

गौडय्यस्य साम्प्रतिकी चिन्ता एका एव । पुण्यकोटिः यत्र व्याघ्रमुखे पतिता तस्याः गुहायाः अग्रभूमौ बृहती कल्याणी उत्खातनीया । किन्तु एतन्मध्ये चन्द्रेनपल्ल्याः शिव-लिङ्गाचारी अन्यदेवस्थानस्य निर्माणाय नञ्जनगूडुदिशं गतः आसीत् । 'किमर्थं चिन्ता भवतः ? मयोक्तं यथा तथा शिलाः आनाय्य स्थापय । अग्रिमकार्यं मम स्यात्' इत्युक्तेऽपि स एव अग्रे आगत्य यावत् न तिष्ठति तावत् गौडय्यस्य कार्यस्य विषये विश्वासः नायाति ।

पुट्टकाळिङ्गः इङ्ग्लिष्भाषामपि सम्यक् अधीते । वेङ्कटरमण एव उपरितनपाठम् अध्यापयतीति अन्यं शिक्षकं नियोज्य पाठनं नावश्यकमासीत् । पौत्रस्य विषये गौडय्यस्य तृप्तिः आसीत्, अभिमानोऽपि भवति स्म । इङ्ग्लिष् इति किं न्यूनम् ? अमल्दारित्व-ग्रहणाय इङ्ग्लिष् आवश्यकमिति उच्यते । आगामिदिनेषु अस्मत्पुट्टः अमल्दारित्वमपि कुर्यात्, इतोऽपि उपरि गच्छेदपि । तदा यः कोऽपि गोचरे न कर्षयेत्, गोमात्रा भुक्त्वा अवशिष्टां भूमातरं कर्षयेत् इति आदिशति – इति कदाचित् स्वप्नमपि पश्यति । तथा स्वप्नदर्शने कारणमपि आसीत् । गोचरस्य कर्षणारम्भानन्तरं तृणानां मूल्यम् अत्यधिकम् अभवत् । तस्य बाल्ये तत्र समन्तात् यः कोऽपि तृणानि न विक्रीणीते स्म । अनन्तरं यद्यपि तृणविक्रयणम् आरब्धं तथापि वितस्तिमितस्य तृणपुञ्जस्य रूप्यकद्वयं मूल्यम् आसीत् । सम्प्रति रागितृणानि चेत् दशद्वादशरूप्यकपर्यन्तमपि उद्गच्छति । तृणमूल्यस्य वर्धनेन पत्तनेषु दधिक्षीरनवनीतानां मूल्यमपि अधिकं जातमिति श्रूयते । 'एतेषां मत्पुत्राणाम् एवमेव भवेत् । गोचरं कर्षयेत् इति तैरेव खलु आदेशः कृतः । खादनाय नवनीतमपि न लब्धं भवेत् तेषाम्' इति गौडय्यः उपालभते स्म ।

पुट्टस्य यदा इङ्ग्लिष्-अध्ययने वर्षद्वयम् अतीतं तदा सः एकम् एकम् इङ्ग्लिष्वाक्यं पितामहस्य अग्रे भाषते स्म । 'अमल्दारित्वं नाम एषैव भाषा ननु ?' इति तातः आलोचयति । वेङ्कटरमणः माध्यमिकशालां समाप्य अधुना मैसूरुनगरं गतः । मैसूरु-संस्कृतपाठशालायां वेदाध्ययनाय तत्पित्रा प्रवेशितः आसीत् । तत्र तस्मै ज्योतिषं

पौरोहित्यं च पाठ्यते इति । प्रौढशालाध्ययनमपि भवति इति । संस्कृताधीतिनः तस्य महाराजानां धर्मशालायां निःशुल्कं भोजनं कल्पयन्ति इति च श्रूयते ।

पुट्टः इदानीं ताल्लूकुस्थानं सम्यक् जानाति । पद्भ्यामेव तत्र गत्वा आगच्छति । पितमह्या तापयित्वा दत्तं घृतकलशं लम्बितां कृत्वा गृहीत्वा गच्छति । तत्र भोजनाय उपवेशनात् पूर्वं स्वस्थाल्यां चमसद्वयमितं घृतं संस्थाप्य गच्छति । यदा ग्रामम् आगच्छति तदा स्वयं गाः चोदयित्वा चारणाय गच्छति ।

सः ग्रामम् आगतश्चेत् पितामहेन सह संलपति । पितामह्या साकं सम्भाषते । गृहस्य कर्मकरैः परिचारकैः सह सङ्गच्छते । किन्तु स्वमात्रा सह न सम्भाषते एव । तत्समीपमेव न गच्छति । तायव्या तेन मनसि एव चिन्ताकुला भवति । पुत्रः गृहम् आगतश्चेत् प्रीत्या गत्वा समीपे तिष्ठति । किन्तु सः न सम्भाषते ।

एकैकवारं सा नेत्रयोः अश्रुधारां वहति । स्नुषायाः अश्रु यदा लक्षितवती लक्कम्मा एकस्मिन् दिने तामेव कुतः इति अपृच्छत् तदा सा हस्तसंज्ञया स्वातङ्कं व्यवृणोत् । लक्कम्मया अर्थः ज्ञातः । विषयं भर्त्रे निवेदितवती । 'बालबुद्धिः' इत्युक्तवान् गौडय्यः । तथापि अग्रिमदिनेषु पुट्टे गृहमागते स एव अपृच्छत् – 'हे वत्स, गृहमागतश्चेदपि त्वं मात्रा सह न सम्भाषते, कुतः ?'

'तया साकं कथं तात सम्भाषे ?'

'कथम् इति चेत् एवम्, मया साकं कथं सम्भाषसे ?'

'त्वमपि भाषसे, अहमपि भाषे । सा मूका खलु ? मूकया सह कथं सम्भाषणम् ?'

गौडय्यस्य तत्क्षणे किमपि उत्तरं न अभासत । मूकया सह कथं सम्भाषणम् इति प्रश्नः तस्यापि बाधकः आसीत् । तस्मिन् दिने स एव गाः चोदयित्वा गतः । तदानीमपि तम् अयं प्रश्नः बाधते स्म । मध्याह्नं सर्वं स्वयमेव स्वस्मिन् चिन्तयति स्म । तन्मध्ये एकदा गावः गोचरं परित्यज्य क्षेत्राभिमुखं गताः । एकवारम् 'रे कुत्रास्ति ज्ञानम् ?' इति क्रन्दितवान् । ताः पुनः स्वस्थानम् आगताः । अल्पसमयादनन्तरं द्वौ वत्सौ समीपे आगत्य तस्य शिरसि स्वकण्ठं चालयामासतुः । प्रत्यहं तस्य हस्तेन सास्नां न मार्जयति चेत् तयोः तृप्तिः न भवत्येव । 'हो, मम ज्ञप्तिरेव उद्गता आसीत्, त्वमेव आगतः खलु ?' इति प्रत्येकं पृच्छति चेत् तस्मिन् ते मुखम् आघ्राय पृष्ठम् लीढवन्तौ । द्वाभ्यां हस्ताभ्यां द्वयोरपि कण्ठं मार्जयन् सः सम्भाषते स्म । तथैव तेन कोलेवृषभयोः सीतारामयोः स्मरणम् अभवत् । द्वावपि तौ कियत् सुष्ठु सम्भाषेते । रामदेव, सीताम्बां परिणयसि

किम् ? इत्युक्ते, वृषभाग्रजः 'हू' इति कण्ठं कम्पयति स्म । पशूनां वाक् नास्ति इति को वा मम पुत्रः उक्तवान् ? इति सः स्वयं आत्मन्येव चिन्तितवान् ।

प्रातरारभ्य पीडयतः प्रश्नस्य सम्प्रति उत्तरं भासितम् । तस्य स्नुषा तायव्वा मूका एव स्यात् । किन्तु तस्याः गृहानयनदिनात् एतावत्सु दिनेषु ते सर्वेऽपि तया सह भाषमाणाः आसन् । सापि तैः सह भाषमाणा अस्ति । भाषितुं किं जिह्वा एव आवश्यकी ? मम पुट्टस्य एतत् अपि ज्ञातव्यं न भवेद् वा ? इङ्ग्लिषुशालां गत्वा एतावदपि न अधीतं वा ? इति सः मनसि एव ध्वनति स्म । तस्य कृते तु गोभिः सह सम्भाषते सः । ताः अपि तेन सह सम्भाषन्ते । स्नुषा तायव्वा अपि तेन सह सम्भाषते स्म । सा मूका इति तस्य प्रज्ञायां नासीत् एव । एषः पौत्रः आगत्य तद् स्वस्मै पाठयेत् किम् ?

ऐषमः सायं गृहं गतः पौत्रं समीपे उपवेश्य अपृच्छत् – 'रे पुट्ट, तव मातरं मूकां वदसि खलु, अहं तया सह न सम्भाषितवान् किम् ?'

'भवान् सम्भाषते । सा उत्तरं ददाति किम् ?'

'मह्यं ददात्येव । तव मतामह्याः अपेक्षया तस्याः बुद्धिः सुष्ठु विद्यते । व्यवहारे तस्याः वचनमेव अङ्गीकरोमि, जानासि किम् ?'

एतस्य वचनस्य पुट्टकाळिङ्गः न किमपि उत्तरं दत्तवान् । पितामहः एव अवदत् – 'त्वं तां मूकां न वदेः । तव पिता जीवितकाले एकदापि तथा नोक्तवान् । तया सह सः सम्भाषमाणः एव आसीत् । सा पत्युः मूका नासीत् । श्वश्रूश्वशुरयोरपि नासीत् । तस्याः उदरे जातस्य तव मूका अभवत् किम् ?'

किं वक्तव्यमिति पौत्रः न ज्ञातवान् । एतत् वाक्यं शृण्वन् सः क्षणकालं मन्दः जातः । पितामहः एव अवदत् – 'उन्मत्तवचाः, वितस्तिगात्रोऽसि । त्वम् एतत् सर्वं कथं जानासि ? जन्ममाता गोमाता च समाना एव । गोमाता अपि वक्तुं न शक्नोति । यस्य कस्यापि जन्ममाता वक्तुं न शक्नोति, जानीहि । केवलं तव माता एका एव मूका न ।'

एतत्क्षणे स्वयं किमुक्तवान् इत्यस्य अर्थं गौडय्यः अपि न ज्ञातवान् । बह्ववसरेषु तस्य तथैव भवति स्म । सः भाषते । तस्य अर्थः कः ? इति अनन्तरम् आलोच्य, अनवबुध्य चिन्तयति स्म । तस्य पौत्रः अपि कमपि अर्थम् अवबुध्य मिकमिकिति पश्यन् स्थितः ।

## 2

पुट्टकाळिङ्गस्य अग्रे वर्षद्वये माध्यमिकशालायाः पञ्चरूप्यकाणां परीक्षा अपि समाप्ता । वेङ्कटरमणः इव स्वयमपि मैसूरुनगरं गत्वा प्रौढशालायां पठेयम् इति तस्य आशा । किन्तु तस्य पितामहस्तु तावदेव पठनं पर्याप्तम् इत्यवदत् । पुट्टकाळिङ्गस्य अन्यः उपायः एव न दृष्टः इति अग्रहारं गत्वा जोयिससन्निधौ स्वस्य आशां निवेदितवान् । जोयिसः एव काळेनपल्लीम् आगत्य गौडय्यम् अवदत् । किन्तु सः 'आर्य, दिने आगते आगते मम प्रौढत्वम् आगच्छति किम् ? मम तदा एव द्विषष्टिं समाप्य त्रिषष्टिवयः अभूत् खलु ? भृत्यान् सम्बध्य अहं कियद्दिनेषु श्रमं वहेयम् ? एषः अमल्दारित्वं न करोति चेत् वरं न भवेद्वा ? निर्विरोधं गोष्ठं समीक्ष्य तिष्ठतु' इत्यवदत् ।

पुट्टः अश्रुपूर्णनेत्रः अभवत् । जोयिसः पुनरपि अनुमोदनं न्यवेदयत् । विद्योत्सुकान् बालकान् वारयति चेत् सरस्वती कुपिता भवति इति शात्रोक्तिमेव प्रत्यपादयत् । मैसूरुनगरे तस्य पुत्रः वेङ्कटरमणः एव अस्ति । एतद्वर्षं तस्य प्रौढशालाशिक्षणस्य अन्तिमवर्षम् । स एव पुट्टस्य दायित्वं वहति । कृषिकरछात्रावासे पुट्टस्य सर्वविधव्यवस्था भविष्यति – इत्यादि दिनार्धं यावत् उक्तः गौडः अभ्युपागच्छत् ।

पुट्टः मैसूरुनगरं प्रस्थितः । प्रस्थानात् पूर्वं सः स्वमातरम् अपि 'गत्वा आगमिष्यामि अम्ब' इत्यवदत् । तायव्वा कियदपि सन्तुष्टाभवत् । मैसूरुनगरं गतः सः नवरात्रविरामेषु ग्रामं न आगतः । देशस्य देशः एव शोभायात्रां द्रष्टुं मैसूरुनगरं यदा आगच्छति तदा मैसूरुतः सः कथं ग्रामं गच्छेत् ? बालकः पठन्नास्ते इति गौडय्यः अपि मौनी अभवत् ।

ग्रीष्मविरामे ग्रामम् आगतस्य पुट्टस्य मुखस्य कला एव अन्यादृशी आसीत् । ताल्लूकुगमनानन्तरं तस्य मुखे एकविधः विजयः उद्भूतः आसीत् । अधुना तस्मिन् सर्वज्ञत्वभावः उद्गच्छन्नस्ति । 'प्रौढशालायां किं पाठयन्ति ? जैमिनीयं कदा पठ्यते त्वया ?' इति पितामहेन पृष्टः सः 'जैमिनीयं न तत्र पाठयन्ति । अग्निः कथं भवति, वायौ के के अनिलाः सन्ति, प्राणिनाम् उत्पत्तिः कथं भवति, कस्मिन् कस्मिन् देशे के के जनाः कथं कथं जीवन्ति इत्येतत् सर्वं पाठयन्ति' इत्यवदत् ।

'हे, तत् गले बद्ध्वा किं भवेत् ? जैमिनीयं न पठितं चेत् कीदृशं सुखम् ? जोयिसपुत्रः वेङ्कटरमणः संस्कृतम् अधीते इति । रामायणं भारतम् इत्येतत् सर्वं संस्कृतेन एव

पठति इति । जैमिनीये यस्य कस्यापि पद्यस्य अर्थमपि विवृणोति इति च श्रूयते । त्वं कदा तत् सर्वं पठसि ?'

'सः जोयिसपुत्रः, तस्य तत् सर्वम् आवश्यकम् । मम किमर्थं तत् सर्वम् ? त्यज दूरे । अहं विज्ञानं पठामि ।'

'विज्ञानं नाम किं तत् ?'

'तदेव उक्तं खलु, अग्निः कथं भवति ... ?'

'चकमकिशिलाघर्षणेन तथैव भवति । एतत् शालायां पाठनीयं वा ?' इति गौडय्यः तत् वाक्यं तत्रैव समापयत् ।

पुट्टः तदा एव चतुर्दशवर्षीयः । क्रियते चेत् विवाहः तस्य भवेत् । दशवर्षवयसि एव तस्य पिता कृष्णः कुन्तं स्वीकृत्य एकाकी गिरेः उपत्यकां यावत् धेनूः चोदयन् गच्छति स्म । तदा कदाचित् गुहासु तरक्षवः आगच्छन्ति स्म । कृष्णस्य मरणानन्तरं ते तत्प्रान्ते शिरः न प्रसारितवन्तः । किन्तु पुट्टः मैसूरुं गत्वा आगमनानन्तरम् एकस्मिन्नपि दिने स्वयं धेनूः चोदयितुं न गतः । एकदा पितामहेन उक्तः पौत्रः 'मम तत्र नीरसता भवति । कस्तावत् तत्र एकाकी सायंकालपर्यन्तं तिष्ठेत् ? परञ्च साकं च कोऽपि न विद्यते' इत्यवदत् ।

'कीदृशोऽसौ, सार्थः कः आवश्यकः ? गावः न सन्ति किम् ?'

'गावः सन्ति चेत् सार्थाः इव भवन्ति किम् ? गावः किं मनुष्याः ?'

पितामहस्य तत्क्षणम् उत्तरं नाभासत । अनुभवे एव अगाधतां प्राप्तं प्रमाणनिरपेक्षं सत्यं कोऽपि पृच्छति चेत् तस्य तत्क्षणम् उत्तरं कथं वक्तुं शक्येत ? तत्रापि गौडस्य तु इतोऽपि क्लेशः एव । सः प्रकारान्तरेण पौत्रं समाहितवान् । 'नीरसता भवति चेत् त्वं स्वयमेव वंशिकां वादय । अथवा वेणुं वादय ।'

'अहं तत् किमपि वादयितुं न जानामि । तत्र आसक्तिरपि मम न विद्यते ।'

पितामहः अनेन वाक्येन व्यग्रो जातः । अवदच्च – 'त्वं नष्टः । गोपः सन् जातः वंशिकां वादयितुं न जानामीति वदसि ननु ? तत्र आसक्तिरपि नास्ति इति वदसि । किमिति जानासि ? गोपः गोमातुः सेवां कुर्यात् इति, ततः गोमाता स्वात्मानं विस्मरति यथा तथा वंशिकां वादयति चेत् सः मुक्तिमेव प्राप्नुयात् इति । सर्वं विस्मृत्य स्वात्मानमपि विस्मृत्य एकवारं वंशिकावादकस्य गोपस्य मुक्तिः इति कृष्णेनैव उक्तमिति वदन्ति ।'

प्रौढशालायाम् अधीयानस्य पौत्रस्य अनेन वचनेन हासः उदभूत् । अवदत् – 'मैसूरुनगरे अहं वेङ्कटरमणं द्रष्टुं गच्छामि खलु ? एकैकस्मिन् दिने अहं यदा गच्छामि तदा सः रागेण मन्त्रं पठति स्म । तदा तत् किमिति प्रश्नस्य 'वेदः' इति तस्य उत्तरम् । अर्थं ज्ञात्वा तत्रैव मनः आसज्य एकवारं पूर्णं पठति चेत् मुक्तिः लभ्यते इति, पठिता भगवतः पादमेव प्रविशति इति च वदन्ति । वेङ्कटरमणः तथा वदति । केवलं वंशिकावादनेन भवगतः पादः लभ्यते इति भवान् वदति खलु ? सत्यं किम् ? सर्वमपि अनृतम् ।'

'तथा मा वद मूढदासीपुत्र ! वेङ्कटरमणजातीयस्य तेन उक्तमेव सत्यम् । अस्मज्जातीयस्य लघुवंशिका एव सत्यम् । तव पिता कथं लघुवंशिकां वादयतीति किं जानासि ? नागवल्लीपल्लवं खादित्वा ओष्ठं रक्तवर्णं कृत्वा हस्ते वेणुं धृत्वा तिष्ठति चेत् कृष्णगौडः अपि स एव, कृष्णपरमात्मा अपि स एव । सः मृदुवंशिकां वादयन् तिष्ठति चेत् दुष्चेष्टावान् वृषभशिशुरपि पुच्छम् आवर्त्य शेते स्म । तथा वादयितुं जानाति स्म खलु ? अत एव सः गोरक्षणाय इति अग्रे गत्वा प्राणान् अत्यजत् । मृदुवंशिकां वादयितुम् अजानतः भूपस्य जीवत्यागाय स्थैर्यं प्राप्यते किम् ? तव पितुः अत एव धैर्यं प्राप्तम् । तस्य भक्तिहेतोः भगवान् तं स्वपादम् अनयत् ।'

स्वपितुः विषयं श्रुतवतः पुट्टकाळिङ्गस्य मनसि विषादः प्रीतिः इत्यादिसम्मिश्रभावाः उदिताः । किन्तु तस्य पिता तरक्षोः प्रहारम् अनुभूय मृतः आसीत् । तदेव भगवत्पादाश्रयणम् इति पितामहः वदति । मृदुवंशिकां वादयतः एव तस्य पितुः इव धैर्यं प्राप्यते इति । तस्य एतस्य च कः सम्बन्धः ?

तथा तेन पृष्टः पितामहः 'गोप्राणरक्षणाय खलु तव पिता स्वजीवम् अर्पितवान् ? वंशिकावादनं नास्ति चेत् गोप्राणरक्षणबुद्धिः कथम् उदियात् ? प्रत्युत स्वप्राणरक्षणमेव पर्याप्तम् इत्येव बुद्धिः अवशिष्येत खलु ?'

'तात, भवतः वचनस्य अर्थं ज्ञातुमहं न शक्नोमि ।'

एतावत्पर्यन्तं स्वेन भाषितानां वाक्यानां पितामहः अपि चर्वणमकरोत् । किन्तु तेनैव अर्थः न ज्ञातः । तथापि किमपि महार्थगर्भितं वचनं प्रयुक्तम् इत्यभासत । जोयिसः पृष्टश्चेत् वाक्यानाम् अर्थं विवृत्य वदेत् । बहुवारम् एवमेव भवति स्म । वृद्धः गौडतातः किमपि भाषते स्म । तस्य अर्थः तेनैव न ज्ञायते स्म । जोयिसः तस्य अर्थम् आरोप्य एतत् महत् वचनम् इति वदति चेत् स एव विहस्य 'अहमेकः गोपमूर्खः, मनसि उदितम्,

उक्तम् । तत्र किं स्यात् त्रिमार्गमृत्तिकामात्रम् !' इति मौनं तिष्ठति स्म ।

तद्दिने पुट्टकाळिङ्गस्तु गाः चोदयन् गतः । किन्तु सायंपर्यन्तमपि तस्य विरसता एव भवति स्म । मृदुवंशिकां वादयितुं यत्ने कृतेऽपि तस्य मनः तत्र न प्रवर्तते स्म । गोषु समीपम् आगतास्वपि एतैः मूकप्राणिभिः सह सम्भाषणाय कोऽपि विषयः तस्मिन् नासीत् । अधुना प्रौढशालायाः प्रथमवर्षम् अतीतम् । विरामानन्तरं तेन ऐच्छिकभागाः चयनीयाः । मानविकविभागस्य चयनम् उत विज्ञानविभागस्य ? तस्य आदरः विज्ञानदिशि आसीत् । वेङ्कटरमणः 'संस्कृतं पठ, अहम् पाठयामि' इति वदति स्म । किन्तु जीवशास्त्रं रसायनशास्त्रं च तस्य तदैव प्रियम् अभवत् । ताभ्यां सह संस्कृताध्ययने आस्था नासीत् ।

## 3

पुट्टकाळिङ्गः प्रौढशालापरीक्षाम् उत्तीर्णः । अग्रे महाविद्यालये पठनीयम् इति स्वस्य आशां ज्ञात्वा पितामहः नाङ्गीकुर्यात् इति प्रागेव तेन जोयिसः गृहीतः । पूर्वं यथा तथा चर्चा संवृत्ता । अन्ते गौडतातः अङ्गीकृतवान् ।

प्रौढशालापरीक्षासमाप्त्यनन्तरं वेङ्कटरमणः संस्कृतमहापाठशालाध्ययनमेव पूर्णतया प्रवर्तितवान् । ब्राह्मे मुहूर्ते उत्थितस्य तस्य शौचं, स्नानं सन्ध्यावन्दनं, वेदोपनिषत्पाठः, अनन्तरं महापाठशालायाः पाठ्यक्रमानुसारं कक्ष्याः – इति तस्य विरामः एव न भवति स्म । अनध्ययनदिनेषु तु केवलं विरामः । किन्तु तस्य अनध्ययनदिनानि काळिङ्गस्य भानुवासरविरामानुगुणं नायान्ति । अतः अनयोः परस्परं दर्शनमेव विरलमासीत् । मेलनं चेदपि ग्रामगतान् वृष्टिकृषिविषयान् विहाय अन्यः भाषितुं समानः विषयः न भवति स्म । तेन अधीयमानं जीवशास्त्रं रसायनशास्त्रं वा अनेन न ज्ञायते । अनेन उच्यमानाः पुराणकथाः उपनिषद्रहस्यादयश्च तस्मै न रोचन्ते । वेङ्कटरमणः इदानीमपि कटौ मौञ्जीं बध्नाति । अन्तः कौपीनं धृत्वा उपरि वेष्टिं धरति । चण्डातकम् अद्यापि धृत्वा नानुभूतम् । शिरसः पश्चाद्भागे प्रसाध्य शिखां बध्नाति चेत् त्वचारहितं नारिकेलफलमिव घनीभूताः आयताः केशाः इदनीमपि सन्ति । बहिर्गमनं विना सः स्वप्रकोष्ठे अथवा कक्ष्यायां यावत्तिष्ठति तदा चतुरस्रांशुकम् आच्छादयति केवलम् । युतकस्य आवश्यकता विरला एव ।

काळिङ्गः नगरे क्रिश्चियन्महाविद्यालये पठन्नस्ति । न केवलं पठने, विद्यालयस्य

क्रीडायामपि प्रविशति स्म । इण्टर्मीडियेट्परीक्षायाः उत्तीर्णतावसरे सः विद्यालयस्य उत्तमः क्रीडापटुरिति प्रसिद्धिं प्राप्तः । वालिबाल्, कब्बडिक्रीडासु इव धावन–उत्प्लवन–स्पर्धासु अपि विद्यालये प्रथमः आसीत् ।

ज्यूनियर् बिएस्सिपठनावसरे तं मैसूरुनगरस्य सर्वविद्यालयानां मध्ये प्रवर्तितासु स्पर्धासु प्रेषितवन्तः । तत्रापि सः कब्बडिक्रीडायां धावनस्पर्धासु च प्रथमतां प्राप्तः, उत्तम–वालिबाल्क्रीडकः इत्यपि निर्णीतः । अधुनातने एम् जि एस् टूर्नमेण्ट् मध्ये क्रीडितुं सः बेङ्गलूरुनगरं प्रेषितः । तत्र धावनस्पर्धायां विश्वविद्यालयस्यैव प्रथमः जातः । कब्बडि–वालिबाल्क्रीडयोः उत्तमः क्रीडापटुः इति घोषितः ।

एवं काळिङ्गस्य नाम महाविद्यालयस्य क्रीडावृत्ते प्रसिद्धम् अभवत् । किञ्च सः महाविद्यालयस्य प्राचार्यस्यापि प्रीतिपात्रम् अभवत् । पाद्रिवरः सः प्राचार्यः अमेरिका–देशीयः । सामान्यतः अन्ये विद्यार्थिनः तं द्रष्टुम् इच्छन्ति चेत् आवेदनं सम्प्रेष्य अनुमतिं प्राप्नुयुः । किन्तु काळिङ्गः साक्षात् तस्य कार्यालयस्य प्लापद्वारम् उद्घाट्य अन्तः प्रविश्य सम्भाष्य आगच्छति स्म ।

सीनियर्–बिएस्सिवर्गे पठनावसरे तस्य विद्यालयस्य वालिबाल्गणस्य स एव नायकः आसीत् । बेङ्गलूरुमहाविद्यालयेन केनचित् सह क्रीडितुं निर्णयः आवश्यकः आसीत् । तत्सम्बन्धिपत्रे प्राचार्यस्य नामाङ्कनम् अपेक्षितम् । पत्रं तत्क्षणं बेङ्गलूरुनगरं गच्छेत् । प्राचार्यः इतोऽपि महाविद्यालयं नागतः । काळिङ्गः एव द्विचक्रिकाम् आरुह्य तस्य वास्तव्यमन्दिरं गतः । सः भोजनार्थम् उपवेष्टुं सज्जः आसीत् । अस्य पत्रस्य नामाङ्कनं विधाय 'बाय्, तव भोजनम् अभूत् किम् ?' इति अपृच्छत् । 'नाट् एट् फादर्' इति सः सहजतया अवदत् । स्वेन सह भोजनं कर्तुं सः उक्तवान् । सङ्कोचेन मास्तु इत्युक्तवानपि अयं तेन अनुरोधे कृते 'अस्तु' इत्यवदत् ।

प्राचार्यस्य भोजनपीठस्य समीपे एव एतस्मै अपि एकं पीठं संस्थाप्य तदुपरि पिङ्गाणि–स्थालीषु पाचकः परिवेषितवान् । चमसेन छुरिकया दंशिकया च तौ भोक्तुं प्रारब्धवन्तौ । चमसं जानाति काळिङ्गः । किन्तु छुरिकायाः दंशिकायाश्च ग्रहणे अभ्यासः नासीत् तस्य । प्राचार्यः एव 'दंशिका मास्तु चेत् भवतां देशीयपद्धतिमनुसृत्य अङ्गुलीभिरेव खादितुम् अर्हसि' अवदत् सः अङ्गुलीभिः खादितुम् आरब्धवान् । तत्तु मांसभोजनम् । काळिङ्गस्तु न शुद्धशाकाहारी । माराम्बोत्सवादिषु तस्य गृहे अजमेषाणां मांसं पचन्ति स्म । तत्तु किमपि भवति चेत् बहिः स्नानगृहे । तदर्थमेव विशेषतः नागदन्तिकायां

लम्बिते घटे स्नानगृहचुल्ल्यां पाचयित्वा तत्रैव खादन्ति स्म । गृहस्यान्तः पाकगृहे तस्य प्रवेशः नासीत् । भोजनानन्तरं प्राचार्यः कार्यानेन महाविद्यालयं गतः । काळिङ्गः द्विचक्रिकया गत्वा पत्रं पत्रपेटिकायां संस्थाप्य स्वकक्ष्यां गतः । मांसपाकस्य गृहे भुक्तस्य, अद्य भुक्तस्य च तस्य रुचौ कश्चन व्यत्ययः अनुभूतः । गृहे कार्यस्य जीरिका, मरीचः, कुस्तुम्बरी, दाल्चिनी, मरीचिकादिः देशीयसम्भारः घमघमगन्धवान् पेषितः भवति स्म । खादनावसरं विना दूरतः गन्धग्रहणेन शिशिरकाले तस्य पितामहस्य प्रियम् उपस्कारं सम्पेष्य क्रियमाणस्य कुलित्थसारस्य मांसपाकस्य च तावान् भेदः नानुभूयते स्म । किन्तु प्राचार्यगृहे मांसस्य तावान् उपस्करः न मिश्रितः । पूर्णतया पक्वता अपि नानुभूता । तत् किमिति न ज्ञायते, असहजता कापि अनुभूता । अर्धघण्टायां स्थितस्यैव तस्य किमपि आलोचनं प्राप्तम् । प्राचार्यः क्रिश्चियन्जनः । किञ्च रक्तवर्णीयः । गोमांसं भक्षयति । अस्मिन् दिने स्वस्मै तदेव परिवेषितं स्याद्वा ! अनया आलोचनया एव उदरे वमनशङ्का अनुभूता इव ।

अवधेः घण्टावादनानन्तरम् अग्रिमावधौ तत्र अनुपविश्य स बहिरागत्य द्विचक्रिकाम् आरुह्य प्राचार्यस्य वास्तव्यमन्दिरम् आगतः । शयितः निद्रामग्नः तस्य पाचकः तेन वादितायाः विद्युदाकारिकायाः ध्वनिना प्रबुद्धः द्वारम् उदघाटयत् । अन्तः गतः काळिङ्गः 'अद्य मह्यं परिवेषितं मांसं कस्य ?' इति साक्षात् पृष्टवान् । 'किमपि अजानानः पाचकः 'बीफ्' इत्यवदत् । 'बीफ् ? गोमांसम् ? मां किमिति न उक्तवान् ?'

किमपि अजानन् पाचकः अवदत् – 'वक्तव्यं किमस्ति भवते ? तत्र वक्तव्यं किमस्ति ?'

काळिङ्गः निरुत्तरः जातः । 'किमर्थम् ? किम् अभूत्' इति पाचकेन पृष्टोऽपि किमपि उत्तरम् अवदन् सः बहिरागत्य द्विचक्रिकाम् आरूढवान् । किन्तु फर्लाङ्ग्-द्वयागमनावसरे एव सङ्कटम् अनुभूयमानमिव जातमिति द्विचक्रिकातः अधः पतितः इव जातः । अनुक्षणमेव अधः अवरुह्य मार्गपार्श्वे विद्यमाने वृक्षे द्विचक्रिकां लगयित्वा भूतले उपविष्टः । उदरस्य अन्तः समन्तात् परावर्तितमिव भूत्वा वमनं जातम् । स एव कण्ठे अङ्गुलिद्वयं निवेश्य वमनं कृतवान् । प्रातः खादितेन गोमांसेन साकं तत्पूर्वम् उपाहारगृहे खादिता सोपस्करदोसा व्यञ्जनस्य आलुकखण्डैः पलाण्डुना च सहिता बहिरागता । दशनिमेषेषु उदरसङ्कटं शान्तं जातम् । गण्डूषेण विना असह्यता न गच्छति... । शरीरं सर्वं स्वेदक्लिन्नम् । स्नानमेव वरम् इति आलोच्य द्विचक्रिकाम्

आरुह्य स्वस्य छात्रावासम् आगतः ।

स्नानानन्तरं शरीरं प्रकृतिमापन्नम्। किन्तु मनसि तु आतङ्कः अवशिष्टः एव। स्वयं कालिङ्गगोपवंशजः । गौः देवतासमाना । एवं सति अद्य गोमांसं भक्षितं खलु मया। एते क्रिश्चियन्जनाः, तत्रापि युरोप्देशीयाः पाद्रिजनाः गोमांसं भक्षयन्ति इति मम भोजनावसरे स्मरणमेव आगच्छेन्न खलु ? कीदृशमेतत् पापं जातम् !

मञ्चस्य उपरि शयित्वा कियदपि लुठनेऽपि एतदेव चिन्तनं मनः पीडयति स्म । 'पापम्, एतत् पापम्' इति भावना मनः यदा पूरयति तदा प्रायश्चित्तम् इति स्मरणे प्राप्तम्। अद्य कृतस्य किं प्रायश्चित्तम् ? इति मनः यदा पृच्छदासीत् तदैव सह वेङ्कटरमणस्य स्मरणम् अभवत्। वेदशास्त्राधीती, जोयिसपुत्रः। स एव योग्यः – इति उत्थाय युतकं धृत्वा द्विचक्रिकाम् आरुह्य संस्कृतमहापाठशालां गतः ।

तद्दिने वेङ्कटरमणस्य अध्ययनं नासीत्। सः स्वप्रकोष्ठे अग्रपीठे उपविश्य मुद्रित-पुस्तकात् मन्त्रान् स्वश्वेतपत्रकपुस्तके मषीकठिन्या लिखन्नासीत् । आगतमेतं दृष्ट्वा 'आगच्छ कालिङ्ग, मासत्रयम् अतीतं खलु आगतस्य तव, किम् आतङ्कितः इव दृश्यसे ? आरोग्यं न समीचीनं किम् ?' इत्यवदत्।

कालिङ्गः प्रातरारभ्य संवृत्तं सर्वं विषयं न्यवेदयत्। 'मम प्रायश्चित्तं त्वमेव कारय। तत् किं कर्तव्यमिति वद।'

वेङ्कटरमणः क्षणकालमालोच्य अवदत् – 'तेषां गृहे कुतः त्वं भुक्तवान् ? जातिविहीनस्य जातीयस्य गृहे किमपि न खादितव्यम् इति शास्त्रं विहितं तत् अनृतं किम् ?'

'मया न ज्ञातम्। ज्ञातं चेत् भक्षयेयं किम् ? सम्प्रति घटितं घटितमेव। तस्य प्रायश्चित्तं किमिति वद।'

'त्वया प्रज्ञापूर्वकं कृतं पापमिदं न। त्वया अज्ञातमेव इदं घटितम्। अतः न बहुलो दोषः। श्वः प्रातः पञ्चगव्यं स्वीकुरु। तावत्पर्यन्तं मुखे जलमपि न स्थापय।'

'तर्हि त्वमेव देहि। तत् कुतः आनेयम, कथं कर्तव्यम् इत्यहं न किमपि जानामि।'

क्षणकालमालोच्य वेङ्कटरमणः अवदत् – 'राजभवनस्य गोशालायामेव गोक्षीरं, गोदधि, गोघृतं, गोमूत्रं, गोशकृत् – इति सर्वं लभ्यते। अहम् आनयामि। श्वः प्रातः आवां सहितौ प्रथमयानेन पश्चिमवाहिनीं गच्छाव। नद्यां स्नानानन्तरं स्वीकुरु ननु ?'

अनन्तरदिने द्वावपि पश्चिमवाहिनीं गतौ । द्वयोरपि स्नानानन्तरं वेङ्कटरमणः सन्ध्यावन्दनं समापितवान् । अनन्तरं काळिङ्गस्य पञ्चगव्यप्राशनं कारितवान् । वेङ्कटरमणाय एकं रजतरूप्यकं दक्षिणारूपेण दत्त्वा नदीजले एकं रजतनाणकं निमज्ज्य द्वावपि नमस्कृत्य काळिङ्गः स्वपापं परिहृतमिति सन्तुष्टः ।

## 4

काळिङ्गगौडतातस्य अधुना षट्षष्टिवर्षवयः इति जोयिसः वदति । सप्ततिरेव अभूत् इति गौडतातः वदति । सम्प्रति तस्य एका एव चिन्ता – पुण्यकोटेः देवालयनिर्माणसमाप्तिः । गोष्ठे इदानीं पूर्ववत् सम्पादनं न भवति चेदपि वेङ्कटहस्ते तत्संबद्धं द्विशतं रूप्यकाणि यावत् समाविष्टम् । ग्रामसंहत्या देयं दातुं सर्वेऽपि सज्जाः । पूर्वम् अमल्दारेण दत्तानि पञ्चविंशतिः रूप्यकाणि गौडज्जसमीपे एव सन्ति । किन्तु तेन धनेन देवस्थानस्य कल्यण्याश्च कार्याणि न भवेयुः । मम वंशस्य गोष्ठस्य गौः । तस्य पुण्यं देवस्थानं निर्मीयते । अहमेव सर्वं व्ययं निर्वहामि – इति विचारः सम्प्रति तस्य मनसि उदेति । बेट्टकेरेशिलागिरेः देवालयस्य अन्तरङ्गणस्य आवश्यिकाः शिलाः आनेतुं ग्रामीणाः शकटैः वृषभैश्च सह गच्छन्ति । कर्म कर्तुम् अपि प्रतिगृहं द्वाविति कर्मकराः आगच्छन्ति । धनव्ययः मया एव कर्तव्यः – इति निर्णीतवान् ।

तावता एव कस्मिंश्चिद् दिने अग्रहारस्य जोयिसः ग्रामं दानाय गतः । दानबन्धकम् उद्वाह्य आतपे गृहम् आगतः पत्नीं जलं याचितवान् । कदापि एवम् अस्नातः जलं न याचमानः एषः एवं याचितवान् इति आश्चर्यवती सुब्बम्मा ‘अस्नातः एव पिबति किम् ?’ इति अपृच्छत् । ‘तदहं न जानामि वा ? शीघ्रं जलं देहि, प्राणाः निर्गताः इव अनुभूयते’ इति सः अयाचत । एषा बृहति ताम्रपात्रे कस्मिंश्चित् पूर्णं गङ्गोदकं दत्तवती । तत् उन्नीय गटगटिति पानावसरे एव पादोनपञ्चपात्रमितं गङ्गोदकमन्तः गतम् । अवशिष्टं बहिरागतम् । प्रज्ञाशून्यत्वमनुभवन् सः वक्षसि हस्तं निधाय ‘राम राम’ इति वदन् भूतले लुठितवान् । ‘किमिदम् ?’ इति समीपमागत्य शुद्धौ विद्यमाना अपि सुब्बम्मा तस्य शिरः अकम्पयत् । किन्तु तस्य वाक् अपि नास्ति कथा अपि नास्ति ।

जोयिसस्य कोऽपि रोगः नासीत् । सः दष्टपुष्टः एव आसीत् ।

आद्या वार्ता गौडतातेन प्राप्ता । जोयिसः गौडतातात् पञ्चवर्षैः कनीयान् ।

गौडतातोऽपि अस्मिन् वयसि गाः चोदयन् आतपे शाद्वलं गिरिसानुं च गच्छति स्म। जोयिसः दानाहरणाय ग्रामं ग्रामम् अटति स्म। तत्तु तस्य कुलगतं कर्तव्यम्, जीवनसाधनं च आसीत्। किन्तु आतपे गवां पृष्ठतः सञ्चरणं गौडतातस्य जीवनसाधनं नासीत्, किन्तु जीवनधर्मः आसीत्। तस्य गृहे भृत्याः सेवकाः आसन्। तद्द्वारा कर्म कारयितुं शक्यते चेदपि सः एकस्मिन् दिनेऽपि स्वधर्मं न त्यजति स्म।

गोमूत्रेणाचरेत् स्नानं वृत्तिं कुर्याच्च गोरसैः।
गोभिर्व्रजेच्च भुक्तासु भुञ्जीताथ च गोव्रती॥

गोमूत्रेण स्नानम्, गोरसैः क्षीरदध्यादिभिः केवलम् उदरपोषणम्, गाः अनुसृत्य चरणम्, गवां भोजनानन्तरमेव आहारस्वीकारः – गोव्रतिना एवं कर्तव्यमिति गौडतातः बाल्ये एव वयसि श्रुतवानासीत्। एवंरीत्या मन्त्रविवरणं प्रोक्तम् एतेनैव जोयिसेन। यथा शक्यं तथा, स्वसन्ततौ अनुगतस्य प्रकारस्य स्वल्पमपि अनतिक्रम्य सः गोव्रतं पालितवान्।

सम्प्रति जोयिसः निधनं गतः। गौडतातः एव अग्रे स्थित्वा तस्य गृहिण्यै, मैसूरुतः आगताय तत्पुत्राय च समाधानं विहितवान्। आत्मा नाम कः ? जीर्णं युतकं विहाय नूतनस्य धारणम् इव आत्मा जीर्णं शरीरं परित्यज्य नूतनं शरीरम् अन्विष्यति – एतदेव मरणं नाम। तत्र ज्ञानी न कोऽपि दुःखं प्राप्नुयात् – इत्यादिं मृत्युमीमांसां मातापुत्रौ बोधयित्वा सान्त्वयामास। वेङ्कटरमणेन तर्कः, वेदः, वेदान्तादिः अधीतः। पितृमरणशोकावसरे तत्स्मृतौ कोऽपि नोदेति। किन्तु गौडतातेन उच्यमाने तत् वचनं सत्यमेवेति भाति।

'वत्स ! त्वम् एतावदधीत्य ज्ञानी संवृत्तः। न जानासि त्वम् ? वेदना रोदना नानुभूता। सुखेन मृतः। पुण्यं कृतं भवतः पित्रा। सः यथा वैतरणीं तरति तथा अग्रिमां क्रियां विधेहि। एवं निश्चेष्टः नोपविशेः' इति वेङ्कटरमणम् उक्त्वा सुब्बम्मायै अपि समाधानम् उक्त्वा तौ कर्तव्ये प्रवर्तयामास। तेषां गृहे अपर्याप्ताः सामाग्रीः धनधान्यादीनि च दत्त्वा श्राद्धकर्म साङ्गं प्रवर्तयामास। पूर्णतया शिरोमुण्डनं प्राप्य वेङ्कटरमणः वैकुण्ठदिने गोदानमपि कृत्वा पितरं स्वर्गं प्रापयामास।

वेङ्कटरमणस्य संस्कृतमहापाठशालायां दशवर्षीयाध्ययनं समाप्तम् आसीत्। इतोऽपि वर्षद्वयं चेत् विद्याभ्यासः साङ्गः समाप्तः भवति स्म। अग्रे चेत् तत्रैव पाठशालायाम् उपप्राध्यापकः सन् प्रवेशमर्हति। अथवा कस्यामपि पौढशालायां

संस्कृतपण्डितो भूत्वा वेतनं सम्पादयितुं शक्नोति। इतः वर्षद्वयं पठितुं च कोऽपि अन्तरायः नासीत्। महाराजानां धर्मशालायां निःशुल्कं भोजनम्। पाठशालायामेव वास्तव्यम्। अन्यच्च तदुपरि द्वादश-रूप्यकाणां छात्रवृत्तिरपि प्राप्यते स्म। राजभवने विशेषपूजा-पुरस्कारदिनेषु कर्मठः ब्रह्मचारीति आह्वानं प्राप्य अयं वेष्टिं पञ्चपात्रं, रूप्यकद्वयदक्षिणां च लभते स्म। ग्रामे वसन्त्यै मात्रे तत्रैव सप्ताष्ट रूप्यकाणि प्रेषयति चेत् इतोऽपि वर्षद्वयं तस्याः जीवनं भविष्यति। गृहं पङ्चषाः गाः विहाय तेषाम् अग्रहारे किमपि स्वं नासीत्। समन्तात् ग्रामाणां पौरोहित्यम्, तस्य निर्वहणशक्तिः यावदस्ति तावत् जीवनोपायः आसीत्। न करोति चेत् स एव नास्ति।

जोयिसस्य निधनदिनात् पुट्टकाळिङ्गः ग्रामे एव आसीत्। अपरकर्मणां समाप्त्यनन्तरं सः एकस्मिन् दिने अग्रहारम् आगतः। अग्रे स्वेन किं कार्यम् इति वेङ्कटरमणः तेन सह पर्यालोचनम् अकरोत्। तदा तेन उक्तम् – 'पश्य, अधुनातनकालः त्वया ज्ञायते एव। शास्त्रसम्बन्धः इत्यादि जनेषु न्यूनतां भजते। तव पितुः कालः अन्यादृशः आसीत्। केनापि दानं दत्तं चेत् तेन किं लभ्यते ? प्रस्थमितं धान्यम्, तण्डुलः, एकरूप्यकं दक्षिणा। एतदर्थं मैल्त्रयं मैल्चतुष्टयं वा आतपे गन्तव्यम्। कोऽयं ग्रहचारः ? विना क्लेशं वर्षद्वयं पठ। प्रौढशालायां पण्डितः भविष्यसि चेत् जीवनं सुखकरं भवेत्।'

वेङ्कटरमणस्यापि एतदेव समुचितम् इत्यभासत। ग्रामे मात्रा एकाकिन्या एव वस्तुम् अवश्यकीं व्यवस्थां कृत्वा मैसूरुगमनाय कृतनिश्चयः अभवत्।

किन्तु तदनन्तरदिने गौडतातः अग्रहारम् आगत्य वेङ्कटरमणम् अपृच्छत् – 'वत्स, मैसूरु गमिष्यसीति, सत्यं किम् ?'

'अन्यत् किं कर्तुं शक्यते गौडतात ?'

'त्वं गच्छसि चेत् अस्माकं ग्रामे शास्त्रसम्बन्धः केन क्रियेत वत्स ? जन्मग्रामे वंश-परम्परागतं कर्म विहाय त्वं कुतः ग्रामात् ग्रामं भ्रमेः ?'

'तदपि युक्तम्, किन्तु अनेन उदराय किं लभ्यते ? कालः न पूर्ववदस्ति।'

'मया तदपि चिन्तितम्। भवतः क्लेशं विना उदरम्भरणाय एकः उपायः कृतः।'

'तत् किमिति वद।'

'अहं न तत् कण्ठतः वदामि। आवश्यकं चेत् अत्रागच्छ' इति तं गृहस्य पश्चाद्भागं नीत्वा, तत्र बद्धायाः गोः पुच्छं हस्तेन गृहीत्वा अवदत् – 'अहं किमपि करोमि, मयि

विश्वसिहि । त्वं ग्रामं विहाय मा गच्छ । त्वमपि विवाहं निर्वर्तय । तव कुटुम्बः यथा नाधोगतः स्यात् तथाहं करोमि ।'

तत्रैव स्थित्वा अनयोः द्वयोः सम्भाषणं श्रुतवती वेङ्कटरमणस्य माता अवदत् – 'वत्स, गौडतातस्य वचनं शृणु । सः कदापि भाषितं नातिचरन् यजमानो भवति ।'

'तव अम्बा यथा वदति तथा कुरु तात' गौडज्जः अवदत् ।

वेङ्कटरमणः अग्रे पठितुं न गतः । एकदा मैसूरुनगरं गत्वा स्वस्मिन् सम्पन्नां स्थितिं गुरुभ्यो निवेद्य तेषाम् अनुमतिम् आशीर्वादं च प्राप्य, स्वस्य वसनानि गृहीत्वा आगतः । गौडज्जः अग्रे किं करिष्यति इति च कोऽपि न जानाति । एतेऽपि नापृच्छन् । सोऽपि कण्ठतः नावदत् । किन्तु एकस्मिन् दिने शकटे त्रिचतुरगोणीमितान् व्रीहीन् द्विगोणीमित-रागिधान्यानि च आनीय दत्त्वा 'अग्रे धान्यकर्तनपर्यन्तं पर्याप्तं भवति । तदनन्तरम् अहं किमपि करिष्यामि' इत्यवदत् ।

वेङ्कटरमणः स्वपित्रपेक्षया महान् विद्वान् इति समन्तात् सर्वे जानन्ति । तत्रापि जातकं दृष्ट्वा भविष्यद्गुणने तस्य यथावाक् विद्या । सोऽपि सर्वैरपि ज्ञातः विषयः । एतेन ज्योतिषे पौरोहित्ये च तस्य प्रतिदिनं पञ्चषाणां रूप्यकाणां सम्पादनं भवति स्म ।

## 5

कस्मिंश्चित् दिने चन्द्रेनपल्लीतः शिवलिङ्गाचारी काळेनपल्लीम् आगत्य काळिङ्गज्जम् अवदत् – 'मम कार्यं सर्वं समाप्तम् । इतःपरं भवदीयम् एव अवशिष्टम् । झटिति झटिति देवस्थानं निर्मामः । भवदीयं सिद्धमेव अस्ति न किम् ?'

देवस्थानस्य आवश्यकानि सर्वाणि सिद्धानि आसन् । नाम कर्मणे जनाः, शिला-वहनाय वृषभाः, शकटानि, व्ययाय धनम् एतानि आसन् । किन्तु शिलायाः श्लक्ष्णता-कर्मार्थं शिलाकाराणां योजनमात्रम् अवशिष्टम् ।

'शिलातक्षकाणां विषयः मयि एव त्यजतु । अहम् आनेष्यामि । गर्भाङ्गण-निर्माणभूमिः शोधनीया । तस्य भूमेः निष्कर्षं कर्तुम् एकं योग्यं दैवज्ञं पृष्ट्वा समग्रं देवालय-प्रमाणपरिमाणं निश्चिनोतु । अग्रिमः सर्वः व्यवहारः मदीयः' शिवलिङ्गाचारी अवदत् । काळिङ्गज्जः वेङ्कटरमणम् आहूतवान् । चिण्णय्यं ग्रामीणान् इतरान् चतुरः जनान्

मुख्यान् सम्मेल्य सर्वेऽपि गिरिसानुम् अतिक्रम्य पुण्यकोटिः चण्डव्याघ्रमुखं प्रवेष्टुं गतां भूमिं गताः। तां भूमिम् पूर्वम् अपश्यन् जनः कोऽपि नासीत्। तत्र आचारी वेङ्कटरमणम् अवदत् – 'शास्त्रिणः, प्रथमं गर्भाङ्गणभूमेः निष्कर्षं कुर्वन्तु । तदनन्तरं देवस्थानस्य आकारं वदामि ।'

वेङ्कटरमणशास्त्री अवदत् – 'आचार्य, अन्यस्याः कस्याः अपि भूमेः भूशुद्धिः द्रष्टव्या भवति। पुण्यकोटेः सत्यवचनम् अनुमोदयन् दुष्टव्याघ्रः एव स्वप्राणान् अत्यजत् अत्र इति न सा पुण्यभूमिः किम् ? अस्याः भूमेः शुद्धिः न दर्शनीया एव । पश्चात् व्याघ्रस्य गुहा अधुना यथा विद्यते सा तथैव तिष्ठतु। पुरोभागे पूर्वाभिमुखं यूयम् आकारं रचयत ।'

'न्याय्यम्, न्याय्यम्' इति काळिङ्गज्जसमेताः ग्रामस्य इतरमुख्याः अपि एतत् वचनं शिरसा श्लाघितवन्तः। आचार्यस्यापि एतद्वचनं सम्मतं जातम्। वेङ्कटरमणः अवदत् – 'इतःपरं कल्याणीनिर्माणानुकूला भूमिः द्रष्टव्या। देवस्थानस्य पूर्वदिशि तत्र दृश्यते खलु, अधः सः भुजः, सः भवेदिति भाव्यते । तत्रैव अधः सहस्रशः गवां मेलनाय पर्याप्ता भूमिरपि विद्यते । तत्र किं स्थलं खातयितव्यमिति एतत् अहं गणनेन वदामि ।'

'अस्तु । देवस्थानस्य विग्रहः कीदृशः भवेत् वदन्तु' आचारी अपृच्छत् । व्याघ्रः स्वप्राणत्यागावसरे 'हरिर्नन्दति, हरो नन्दति । ब्रह्मदेवः स्वयं नन्दति । सुरा वर्षन्त्याशु कुसुमम् । करुणया तिष्ठन्ति यत्र । – इति पद्ये एव अस्ति । त्रिमूर्तयः पङ्क्तौ तिष्ठन्तु । तेषां पुरतः गौः तिष्ठतु । तत्रैव अग्रे व्याघ्रः मृतः तिष्ठतु, एवं ननु ?'

'साधु, साधु' इति काळिङ्गज्जः एतां सूचनाम् अनुमोदितवान् । काळिङ्गज्जेन उक्तस्य विस्तारस्य अनुसारेण आचारी देवस्थानस्य आकारं तेभ्यः व्यवृणोत्। सर्वेषामपि सम्मतं जातम् । इतः अष्टदिनेषु निश्चयेन आगत्य कार्यम् आरम्भणीयम् इति तद्दिने भूमिपूजा, आयुधपूजा भवेत् इति बेट्टेकेरेगिरेः शिलारोपणकार्यं श्वः आरभ्य एव प्रारब्धुं शक्यते इति च आचारी अवदत्। तं स्वगृहं वेङ्कटरमणः भोजनार्थं नीतवान्। तदीया काळिङ्गज्जगृहे भोजिका जातिः न । शुद्धिमन्तः विश्वकर्माणः ते । ब्राह्मणगृहेऽपि भोजनं न कुर्वन्ति । शिवलिङ्गाचारी तु करोति स्म । देवस्थाननिर्माण भूमेः अस्याः अग्रहारपर्यन्तं सार्धैकमैलूदूरं भवति ।

गतेभ्यः अष्टदिनेभ्यः पुट्टकाळिङ्गः ग्रामे नासीत् । मैसूरुनगरं गतः आसीत् । बि.एस्.सि.उत्तीर्णतानन्तरं किं कर्तव्यम् इत्यस्मिन् विषये सः पितामहाय किमपि न

उक्तवान् आसीत् । सः गृहपरम्पराम् अनुवर्तयन् तिष्ठेत् इति पितामहेन तु निर्णीतम् आसीत् । अन्यच्च तस्य विवाहविधानमेकम् अवशिष्टम् आसीत् ।

आचारी वाक्यं दृढं कुर्वन् यस्मिन् दिने सायङ्काले गतः तत्सायङ्काले एव पुट्टकाळिङ्गः मैसूरुतः ग्रामम् आगतः । आगतः एव पितामहम् अवदत् यत् तस्य अमेरिकादेशे अध्ययनाय छात्रवृत्तिः अलभत । तस्य प्रयाणव्ययः तैरेव निरुह्यते । समेत्य सर्वमपि व्ययं ते एव निर्वहन्ति । वर्षद्वयं तत्र गत्वा सः विज्ञानम् अधीत्य आगच्छेत् । पौत्रस्य वचनं पितामहेन नाङ्गीकृतम् । 'इतोऽपि किम् अध्येतव्यम् ? त्यज । मम सप्ततिः अभवन् । इतः कतिदिनेषु मया श्रमः किमिति वोढव्यः ? अत्र स्थित्वा गोष्ठं पश्य ।'

'इतः वर्षद्वयमेव । भवता किं स्वहस्तेन धनं देयम् ? सर्वं ते एव दास्यन्ति । अस्मन्महा-विद्यालयस्य प्राचार्यः अनुमोद्य प्रापितवान् । यादृशस्यापि न लभ्यते, मया तु लब्धम् । तत्र अधीत्य आगच्छामि चेत् अस्मद्भूमौ सुवर्णं चेतुं शक्यते ।'

किन्तु पितामहः नाङ्गीकृतवान् । सः सुखेन नाङ्गीकरोतीति ज्ञातमेव पुट्टकाळिङ्गेन । स्वयंनिवेदनापेक्षया वेङ्कटरमणः निवेदयति चेत् सुगमम् इत्यालोच्य सः अग्रहारं धावितः ।

काळिङ्गस्य अमेरिकागमनविषयं श्रुत्वा वेङ्कटरमणस्य सन्तोषो जातः । किन्तु ईषत् सन्देहः जातः । 'पश्य, स रक्तवर्णीयानां देशः । तत्र केवलं गोमांसं भक्षयन्ति इति शृणुमः । तद्विना न भोजनं, न खाद्यम् इत्यपि । द्वयोः वर्षयोः त्वं कथं कुर्याः ? एकवारम् अपरिज्ञाय गोमांसभक्षणं विहितम् । तत्तु अपरिज्ञाय जातम् । प्रायश्चित्तेन परिहारः अपि जातः । किन्तु अधुना तत्र ज्ञात्वा ज्ञात्वा एव भक्षणं विना अन्यः मार्गः एव नास्ति । तेन पापेन किमर्थं बद्धो भवसि ? विना रोधं गृहे वर्तितुं न शक्यते किम् ? तव किं न्यूनं कृतवान् देवः ?'

वेङ्कटरमणः एवं पृच्छेदिति तेन निरीक्षितमेव आसीत् । सः स्वस्मिन् सिद्धमेव उत्तरम् अवदत् । 'तत् सर्वम् असत्यम् । तद्देशीयाः जनाः भक्षयेयुः । किन्तु तत्र गताः सर्वे भक्षयेयुः इति किमपि नास्ति । कियन्तः जनाः ब्राह्मणाः एव गत्वा आगच्छन्ति, ते भक्षयन्ति किम् ? तत्र पर्याप्तं सुपिष्टकं, क्षीरं लभ्यते इति श्रुतम् । मांसम् एव भक्षितुः अजमेषमांसम् अपि लभ्यते । निश्चयेन अहं न खादामि । आवश्यकं चेत् त्वयि शपथं कृत्वा वदामि । अहम् एकवारं प्रमादेन भक्षितमिति भवतः सन्निधिम् आगत्य निवेद्य

पञ्चगव्यं स्वीकृतवान् खलु ?'

वेङ्कटरमणस्य स्वमित्रस्य वचने विश्वासः जातः। अनन्तरं पुट्टकाळिङ्गः स्वसमस्यां न्यवेदयत्। अस्मत्पितामहं यथाकथञ्चित् त्वम् अभ्युपगमय। तत्र अधीत्य आगम्यते चेत् भूमौ एव सुवर्णं रोपितुं शक्यम्। अस्माकं गावः एव दशप्रस्थपरिमितं क्षीरं दोग्धुं यथा शक्नुयुः तथा कर्तुं शक्यते। राजभवनगाः पश्यति खलु ? ताः इव अस्मद्गाः कारयितुम् अनुकूलं विज्ञानं तत्र पाठयन्ति। तत् अधीत्य आगच्छामि। इतः वर्षद्वयं विनाक्षेपं स्थातुं पितामहं त्वं वद।'

वेङ्कटरमणः चिन्तितवान् – काळिङ्गेन उक्तमपि युक्तमेव। वैज्ञानिकरीत्या कृषिः क्रियते चेत् भूमौ अधिकं वर्धयितुं शक्यते। अन्यच्च विज्ञानम् अवेत्य पशुपालनं क्रियते चेत् धेनूनां क्षीरमपि अधिकं भवेत्। पशुसंरक्षणमपि साधुरीत्या भवति। गौडज्जेन स्वहस्तात् व्ययः कर्तव्यः इति किमपि नास्ति। स्वयम् अवसरे प्राप्ते मास्तु इति किमर्थं वक्तव्यम् ? गौडज्जः एकाकी एव एतावद्दिनानि भूमिं गोष्ठं च निरूढवान्। इतः वर्षद्वयं कथमपि कुर्यात्।

'यावत् मया ज्ञातं तावत् तव पितामहं निवेदयामि' इति वेङ्कटरमणेन आश्वासनानन्तरं 'त्वं निश्चयेन अभ्युपगमयेत्' इति उक्त्वा काळिङ्गः ग्रामं गतः। अनन्तरदिने सायं काळेनपल्ली गन्तव्या इत्यालोचितम् आसीत् वेङ्कटरमणेन। किन्तु प्रातः गौडज्जः एव अग्रहारम् आगत्य पौत्रस्य विषयं प्रस्तुतवान्। तस्य प्रेषणं समीचीनम् इति, तेन भूमौ सम्यक् कृषिवर्धनं भवेत्, धेनवोऽपि उत्कृष्टाः भवेयुः इति वेङ्कटरमणेन उक्तं श्रुत्वा गौडज्जः 'वत्स, भवदुक्तं साधु। किन्तु रक्तदेशं गच्छति चेत् भूमाता अधिकं फलितं दद्यात् किम् ? अस्माकं पलाशतटाकस्य क्षेत्रम् अस्ति खलु ? तदुपरि एकः बन्धः निर्मातव्यः। वर्षाकाले गिरिसानोः सर्वं जलं तत्र सम्मिलितं भवति। जलव्ययम् अकृत्वैव क्रियते चेत् घनतया द्विवारं व्रीहिवर्धनं सम्पादयितुं शक्यम्। वाटिकायां तमालपर्णानि सन्ति। गोष्ठे प्रतिदिनं शकटद्वयमितम् आर्द्रं गोमयं सम्पद्यते। भूमाता रम्यतां वहति। गङ्गाम्बाम् एकां प्रतिरुध्य स्थापयित्वा स्वेदं निःसार्य वृषभाग्रजम् उपयुज्य कृषिः न भवेदिति विद्यते किम् ? तदर्थम् एषः रक्तदेशं गच्छेत् किम् ?' इत्युक्तवान्।

गौडज्जवचनस्य उत्तरं वक्तुं वेङ्कटरमणः न ज्ञातवान्। 'भवता उक्तं साधु। तथापि गत्वा, पठित्वा आगच्छति चेत् का हानिः स्यात् ?' इति तेन पृष्टे 'वत्स, त्वं मम मुखात्

अनुमोदनं कारयसि । सः श्रमेण सम्पादयन् मत्पुत्रः चेत् गृहे एव स्वेष्टं कर्तुं शक्नुयात् । अधुना अधीतं न पर्याप्तं किम् ? आतपे गच्छन् मूर्खः न सः । अतः एव अग्रे पठिष्यामि इति प्रस्थितः । तस्य अध्ययनाय प्रेषणम् एव दोषाय । मम पुत्रः कृष्णः नाधीतवान् एव । सः अर्जितं न कृतवान् किम् ?'

वेङ्कटरमणः मौनेन शिरः चालयति स्म । अन्ते गौडज्जः एव उक्तवान् – 'सः विपणिं दृष्टवान् वृद्धदासीपुत्रः । अधुना अहं मास्तु इति वदामि चेदपि सः न त्यजेत् । गच्छतु, चिन्ता नास्ति । इतोऽधिकं किं कर्तुं शक्यते ? गत्वा आगच्छ तात इत्येव उक्त्वा प्रेषयिष्यामि ।'

एतावदुक्त्वा सः तूष्णीम् उपविष्टः । पुनः दशनिमेषानन्तरम् अवदत् – 'कर्माभ्यास-चिकीर्षुः पूर्वम् अत्र अभ्यस्य अनन्तरं तत्र अभ्यस्येत् । गोषु आपद्यमानेषु रोगेषु कस्य कस्य किं किम् औषधम् इति सः जानाति किम् ? तेन मम सन्निधौ निवेद्य किमपि अधीतं किम् ? गोः मूत्रादिषु एव गोः औषधं मिर्मातुं शक्यते । तत्र किं किम् औषधं निर्मीयते इति सः जानाति किमु ?'

वेङ्कटरमणः गभीरतया आलोचयितुं प्रक्रान्तः । गौडज्जस्य वचनं सत्यमिति भासते स्म । गृहे स्थितमेव ज्ञानं यः न अधिगच्छति सः बहिः अधीत्य आनीतेन किं साधयेत् ? नष्टस्य व्यवकलनानन्तरं तत्र संहतौ अवशिष्टः लाभः कियान् स्यात् ?

गौडज्जः पुनः नाभाषत । सुब्बम्मया साकं कष्टं सुखं च सम्भाष्य ग्रामं गतः । काळिङ्गं दृष्ट्वा तेन सह सम्भाषणीयम् इति वेङ्कटरमणः आलोचयामास । किन्तु तन्मध्याह्ने केचन जातकदर्शनाय आगताः । अनन्तरं पुनः केचन ग्रामीणाः गृहम् आगताः । अनन्तरदिने अस्मिन् ग्रामे गृहप्रवेशसमारम्भाय गन्तव्यम् आसीत् । अनेन दिनद्वयानन्तरं सः यदा काळेनपल्लीं गतः तदा काळिङ्गः मैसूरुनगरं गतः आसीत् । इतः मासद्वये तस्य गमनमपि निश्चितम् आसीत् एव । इतःपरं मम सम्भाषणेन न किमपि प्रयोजनम् । काळिङ्गः निश्चितं तस्य प्रयाणं न त्यजति इत्यालोच्य सः तूष्णीम् अतिष्ठत् । पौत्रः परदेशं गमिष्यति इति सुरक्षितताविषये लक्कम्मा आतङ्किता आसीत् । मूका तायव्वा वक्तुम् अशक्नुवती अपि वेङ्कटरमणस्य पुरतः आगत्य स्थिता । 'किमपि न सम्पद्येत । नौकायां न किमपि भयम् अस्ति । नौका नाम एकः महान् ग्रामः इव भवति । तस्य अन्तः समुद्रस्य जलं न प्रविशति । कथमपि भीता मा भवतु' इति समाधानम् उक्त्वा वेङ्कटरमणः ग्रामम् आगतः ।

# षष्ठः अध्यायः

## 1

अष्टसु दिनेषु आगमिष्यामि इत्युक्त्वा गतः आचारी मासत्रयं चेदपि अत्र नागतः । काळिङ्गज्जः एव शकटं संवाह्य चन्द्रेनपल्लीं गत्वा तम् आनयत् । आचारिणा सह दश शिलातक्षकाः अपि आगताः ।

सम्प्रति समग्रा काळेनपल्ली कर्मणि निरता जाता । बेट्टकेरिगिरिः अरुणाद्रेः द्वादशमैल्दूरे अस्ति । देवस्थानकर्मणि आवश्यिकाः शिलाः सकलाः ततः एव आनेतव्याः । अरुणाद्रेः ईषत्पिष्टशिलाः । ताः कल्याण्यै सोपाननिर्माणाय च केवलम् उपयोगिन्यः स्युः । ग्रामस्य षष्टिकृषिकेषु चत्वारिंशद्गृहाणां स्वकीयाः वृषभाः शकटानि च सन्ति । प्रतिदिनम् एकस्मात् अधिकां गतिं शिलां सम्पूर्य वाहयितुं साधयितुं न शक्यते । प्रथमतः बेट्टीकेरिगिरौ शिलाच्छेदिभिः सह श्रमार्थं पुरुषभृत्याः आवश्यकाः । शिलाफलकानि, स्तम्भान् शकटे आरोप्य अत्र अवतारयितुमपि अनुभविनः एव अपेक्षिताः । तेषां सर्वेषां भोजनस्य खादनस्य च व्यवस्था भवेत् ।

गौडज्जः स्वकुसीदात् रागिधान्यं सर्वं बहिः निःसारितवान् । अन्यच्च ग्रामजनाः अपि यथाशक्ति अर्पितवन्तः । रागिधान्यं सर्वत्र गृहेषु वितीर्णम् । प्रत्येकमपि गृहस्य स्त्रियः रागिधान्यं सम्पेष्य, पिण्डीकृत्य मृदुदलानां पायसं, नवनीततक्रसमेतं पटोले संस्थाप्य, देवस्थाने यत्र कर्म प्रवर्तते तत्र नीत्वा ददति स्म । अश्लक्ष्णकर्मकराणां शिलानां धनं देयं न भवति, तेभ्यः आहत्य त्रिसहस्रं देयम् इति निर्णीतम् । मन्दिररचनया सह गर्भाङ्गणस्य विग्रहः, मन्दिरस्य पुरोभागे नन्दी, द्वारबन्धः, स्तम्भः – इत्येतेषां चित्रकार्यस्य सर्वस्यापि दायित्वं तस्यै दशजनानां शिलाखण्डकानां संहत्यै चतुःसहस्रम् । बेट्टकेरगिरौ शिलायाः अपेक्षिताकारस्य छेदनम् आरभ्य देवस्थानभवने आचारिकथनरीत्या श्रमकरणेन

साकं कल्याण्याः स्थलीयशिलां विभेद्य सोपानयोजनमपि तेषामेव दायित्वम्। लेपकार्याय अन्यः कश्चन एकसहस्रमिति निश्चितः । देवालयेन साकं कल्याण्याः आवश्यकं लेपपेषणं, सुधाशिलामादाय तापयित्वा प्रदानं च तद्गतं कार्यम् अभवत् । सानोः अधोगते ग्रामे लेपयोग्याः श्लक्षणाः वालुकाः लभ्यन्ते ।

आचारिणः पाकव्यवस्था भवेत् । तं वेङ्कटरमणगृहे संसाध्य प्रेषयन्ति स्म ।

संहतः व्ययः एतावानेव नासीत् । आचारिणः शिलाखण्डकानां च धूमवर्तिका, अग्निपेटिकाः आवश्यिकाः । देवस्थानस्य पूर्णतानन्तरं तस्य द्वाराणि, कलशः, बृहद्-घण्टाः, विग्रहप्रतिष्ठापनम् इत्यादीनां व्ययः पञ्चदशसहस्रमितः स्यादिति आचारी एव गणनेन प्रत्यपादयत्। धनविषये ग्रामस्थेभ्यः ग्रहणं विधेयम् इति सूचनां 'मास्तु' इत्युक्तवान् गौडज्जः । गोष्ठस्य अवशिष्टं सामयिकं धनं द्विशतं रूप्यकाणि त्रयोदशचतुर्दशवर्षेभ्यः पूर्वम् अमल्दारेण दत्तां पञ्चविंशतिं विहाय सः अन्यस्मात् कस्माच्चिदपि एकां वराटिकामपि न गृहीतवान्। स्वस्य मध्यगेहे बृहद्भाण्डे खनौ स्थापितानि नाणकानि एव बहिः निःसार्य व्ययितुं प्रक्रान्तवान् ।

अमेरिकां गतवतः पुट्टकाळिङ्गस्य षट् मासाः अतीताः । कुशली अस्मीति पत्रं लिखति स्म सः । किन्तु देवस्थानस्य कार्यविषये न विचारयति स्म । पितामहः अपि न लिखति स्म । पठनलेखनज्ञानी अपि काळिङ्गज्जः पौत्राय वेङ्कटरमणेनैव पत्रं लेखयति स्म । सङ्केतः आङ्ग्लभाषया लेखनीयः खलु ? अन्यच्च कन्नडेऽपि सङ्केतः कथं लेख्यः इत्येतत् गौडज्जः न जानाति । जैमिनीयपाठे एतत्सर्वं नागच्छति ।

कर्मारम्भानन्तरं गौडज्जस्य गृहे पूर्वं कदापि अविद्यमानः उत्साहः उच्चल्य प्रावहत्। पद्भ्यां गमनेन गिरिभुजारोहणं गौडज्जस्य क्लेशाय । तथापि वेणुदण्डम् अवलम्ब्य गमनेन अथवा कार्यसम्बन्धिशकटे उपविश्य वा गत्वा देवस्थाननिर्माणप्रदेशे एव सदा तिष्ठति स्म । सः आचारिणं शिल्पशास्त्रविषयं पृच्छति । शिलाखण्डकेभ्यः ताम्बूलदलं, तमाखुं च ददाति । ते विश्रान्तिं स्वीकुर्वन्ति चेत् सुधन्वयुद्धं पद्येन प्रतिपादयति । ग्रामवनिताः कर्मकराणां पिष्टपिण्डम् आनयन्ति चेत् 'आतपः अस्ति, शिरसि अंशुकं छादय अम्ब' इति वदति ।

गौडज्जिः गौडात् पञ्चवर्षाणां न्यूनवयस्का । तथापि तस्य यथा आरोग्यं शक्तिः, तथा तस्याः नासीत्। सा द्वित्रदिनेषु एकवारमपि तत्र आगत्य गच्छति स्म । तादृशकर्म-कारिस्थानाय तथैव न आगच्छेत् खलु ? कर्मकरेभ्यः ताम्बूलं क्रमुकं च उत्सङ्गे

सञ्चित्य आगच्छति । तदपि नास्ति चेत् मार्गे लभ्यात् तटाकात् उत्सङ्गधार्याः वालुकाः सम्पूर्य आनयति । लेपकुण्डाय तत् अर्पयति चेत् तावता अलम्, तद्दिने स्वागमनेन सम्पद्यमाना सेवा सा ।

तायव्वायाः सम्भ्रमस्तु वक्तुमेव अशक्यः । श्वश्र्वा 'मास्तु' इत्युक्ता अपि प्रतिदिनं पटोले पिष्टं तक्रं च सन्धार्य गत्वा ददाति । स्वेन समेत्य आगताभिः ग्रामस्य इतरमहिलाभिः सह केवलं हस्तसंज्ञया एव अलं भाषते । गिरिभुजम् अगतः कोऽपि कार्यं कियत्पर्यन्तम् आगतम् इति पृच्छति चेत् तत् अधुना कियद्घट्टं प्राप्तम् इति हस्तसंज्ञया वर्णयति । एकस्मिन् दिने पिष्टं सन्धार्य गमनावसरे समेत्य स्थिता वेङ्कटपली कल्लव्वा प्रदेशमेकं प्रदर्श्य 'हे तायक्क, अत्रैव खलु कृष्णप्पः मृतः ? पश्य तत्र अधः दृश्यते खलु, तत्रैव किल तटाके तरक्षुः शयितः आसीत्' इत्यवदत् ।

तायव्वायाः अश्रु आपतितम् । आतपे एव स्थित्वा अञ्चलेन नेत्रे मार्जितवती । कल्लव्वा एव 'कुतः रोदिषि, विमुच्यताम्, अधुना अष्टादश वर्षाणि अभवन् ननु ? कृष्णप्पः पुण्यवान् । साधुमरणं प्राप्तम् । मदीयाः गृहे भाषन्ते स्म मन्दिरनिर्माणं धने स्थितेऽपि न शक्यम् । निर्मीयते इति नर्तनेनापि न शक्यते । निर्माणपुण्यं नास्ति चेत् किमपि कृतं चेदपि न शक्यते इति । कृष्णप्पस्य पुण्यम् अस्ति खलु ? अतः सम्प्रति तत् मन्दिरं निर्माति ज्येष्ठताતઃ, अथ किम् ?' इत्यवदत् ।

तायव्वा स्वात्मानं स्वयं सान्त्वयामास । स्वभर्तुः विषये तस्याः अभिमानः सम्पन्नः । 'आम्' इति कण्ठं पुरःसारितवती ।

कस्मिंश्चिद् दिने गौडज्जं चिण्णय्यः अवदत् – 'एतावन्तं व्ययं कृत्वा मन्दिरं निर्माति खलु, तस्य प्रतिदिनं पूजा मा भवेद् वा ? तदर्थं किं करोषि ?'

गौडज्जः मनसि एव विहस्य अवदत् – 'रे अहं किं तद्विषये न चिन्तितवानिति भावयसि ?'

'तत् किमिति वद ।'

'कण्ठतः न वदामि । त्वं पश्यसि, तूष्णीं तिष्ठ ।'

## 2

वेङ्कटरमणेन दर्शिते प्रदेशे खातायां कल्याण्यां समृद्धं जलं प्राप्तम् । त्रिंशत्–

हस्तपञ्चकम् आयतं त्रिंशत्-हस्तपञ्चकमितं दीर्घं प्राप्ते चतुरस्रेण खाते तस्याः चतुर्षु पार्श्वेषु तलात् अग्रपर्यन्तं शिलासोपानानि अभवन्। तटस्य चतुर्षु पार्श्वेषु अपि शिलया द्रोणीं तक्षयित्वा गावः आगत्य जलं पातुं यथा शक्नुयुः तथा अनुकूलता विहिता। गावः एव कल्याण्याम् अवतरन्ति चेत् तासाम् अपायः स्यात्, जलमपि कलुषितं भवेत्। शिलामिश्रिते तत्प्रदेशे नारिकेलोदकमिव रुचिकरं श्लक्ष्णं च जलं पूरितम् अभवत्।

देवस्थानस्य भवनकार्यं समाप्य गर्भाङ्गणे शिवलिङ्गाचारिणा निर्मिताः विग्रहाः सर्वेषामपि प्रियकराः अभवन्। गौडज्जस्य गृहे स्थिताः पुण्यकोटिसन्ततिगताः गाः सम्यगवलोक्य तासां मुख्यलक्षणं संगतं यथा स्यात् तथा आचारी गोविग्रहं निर्मितवान्। देवालयस्य पुरतः निर्मितस्य बृषभस्य मुखमपि तत्पुण्यकोटिगर्भे एव जातः इतिवत् भाति। पञ्चलोहेन निर्मिताः झगझगायमानाः प्रकाशकाः कलशाः देवालयस्य गोपुरम् आरोढुं सिद्धाः आसन्। यस्याः उन्नयनं पुरुषद्वयस्य क्लेशं जनयेत्, वादनेन यस्य नादः गिरेः उपरिष्टात्, प्रसार्यः, निःशब्दसमये तु समन्तात् दशग्रामैः श्रूयमाणः भवेत् तादृशीं घण्टां कारयित्वा मैसूरुतः आचारी आनीतवान्। तां देवालयस्य बहिरङ्गणे छदेः संयोज्य अयःशलाकायां लम्बयामास।

विग्रहप्रतिष्ठापनाशास्त्रस्य दायित्वं सर्वं वेङ्कटरमणे एव अतिष्ठत्। तस्य आगम-शास्त्रपरिचयः केवलम् आसीत्, न तु क्रमेण अध्ययनं कृतमासीत्। अतः मैसूरुनगरं गत्वा सः स्वगुरुमेव आहूय आगतः। प्रत्यागमनावसरे गौडज्जवचनानुसारं मार्गे श्रीरङ्गपत्तनं गत्वा सेवानिवृत्तस्य अमल्दारस्य विषये विचारितवान्। सः त्रिवर्षेभ्यः पूर्वमेव निधनं यातः इत्यवगतम्।

सङ्क्रान्तिपर्वदिने एव प्रतिष्ठापनं भवेदिति निष्कर्षः अभवत्। तद्दिने एव गवां शोभायात्रा भवेदिति निश्चित्य समन्तात् ग्रामेषु तालूकुकेन्द्रपर्यन्तं डिण्डिमः वादितः। वेङ्कटरमणः अमल्दारसविधे गत्वा यात्रायाः अनुमतिम् आनीतवान्। प्रतिष्ठापनादिने आगतानां भोजनं भवेत्। प्रायः दशसहस्रजनेभ्यः अन्यूनाः जनाः सङ्गताः भवेयुः इति विचिन्त्य आयव्ययान् अकुर्वन्।

सङ्क्रान्तेः दशदिनेभ्यः पूर्वम् एकस्मिन् दिने प्रातः प्रागेव गौडज्जः चिण्णय्येन साकं शकटम् आरुह्य अग्रहारम् आगतः। वेङ्कटरमणगृहस्य पुरतः शकटं स्थापयित्वा अन्तः आगत्य अवदत् - 'वत्स, किञ्चत् पञ्जीकरणालयः गन्तव्यः, त्वमपि आगच्छ।'

'इदानीं किं कार्यमस्ति गौडज्ज ?'

'तत्र वदामि, प्रतिष्ठेथाः । अनन्तरं गच्छाम इति चिन्तितम् आसीत् । अद्यैव गन्तव्यमिति ह्यः रात्रौ मनसि आगतम् । चिण्णय्यमपि स्वीकृत्य प्रस्थितः । वयं पिण्डं मुद्गम् आनीतवन्तः । त्वं किमपि रोटिकां पट्टीं वा कारयित्वा गृहाण । अहं शानुभोगम् आमन्त्र्य आनेष्यामि ।'

अर्धघण्टायां वेङ्कटरमणस्य स्नानम् अभवत् । तस्य माता रागिरोटिकां नारिकेलोपसेचनं च विधाय बन्धेन दत्तवती । तावता शानुभोगेन साकं गौडज्जः प्रत्यागतः । सर्वेषां शकटे उपविश्य कण्ठोन्नयनानन्तरम् 'इदानीं प्रस्थानस्य कः विषयः?' वेङ्कटरमणः पुनरपि पृष्टवान्।

शानुभोगः एव अवदत् – 'गौडज्जः कण्ठात् न उद्घाटयति । अहं वदामि तावत्, शृणु । तत्र किं गोपनीयमस्ति ? अधुना गौडज्जेन देवस्थानं निर्मितम् । तस्य अग्रिमदिनेषु विना बाधं पूजा भवेत् । तत् त्वया निर्वोढव्यम् इति तस्य आशा । तस्य भूमौ पञ्च–एकर्–मितं शाद्वलम्, एकर्द्वयमितं क्षेत्रम्, पञ्चाशन्नारिकेलवृक्षाणां वाटिकां च तव नाम्नि लिखति । क्षेत्रं त्वं वंशपारम्पर्येण अनुभव । अग्रे तव वंशे यः कोऽपि तस्य विक्रयणं न कुर्यात् । पूजा क्षेत्राधिकारश्च वंशस्य प्रथमपुत्रेण प्राप्तव्यः । सः न करोति चेत् द्वितीयपुत्रस्य भवेत् । समग्रतः देवस्थानस्य पूजा यावदपि अविच्छिन्नतया प्रचलेत् ।'

वेङ्कटरमणस्य न केवलम् आश्चर्यं जातम्, अपि च सङ्कोचमपि अनुभूय सः अपृच्छत् – 'गौडज्ज, देवपूजाम् अहं करोमि, किन्तु क्षेत्रमिदं कुतः ?'

'क्षेत्रम् उदरम्भरणाय । उदरम्भरणं विना उपवासेन वर्तितुं शक्यते किम् ? त्वं पुनः मैसूरुनगरं मा गच्छ, अत्रैव तिष्ठ इत्यवदं खलु ? तदैव एतद् आलोचितम् । देवकर्मवचनं करेण कर्तव्यम्, न मुखेन वक्तव्यमिति मौनम् आस्थितम्' इत्युक्त्वा शकटचोदकं प्रौढं युवकं दृष्ट्वा गौडज्जः 'रे होन्न, शृणुहि खलु ?' इत्यवदत् । तेन परावर्त्य 'किं तात' शत्युक्ते 'जोयिसाय लेखनीयं क्षेत्रं सर्वम् अग्रहारपार्श्वे एव विद्यते । एतत् केव्वेशाद्वलं, अग्रहारतटाकशाद्वले विद्यमानं सावन्त्रिक्षेत्रं, चूतवृक्षसहितम् उद्यानम् – एतावत् क्षेत्रं लिखामि । तत्र त्वमेव कृषिं कुरु । एतावत्पर्यन्तं त्वया मद्गेहे सेवा कृता । तुभ्यं गृहं निर्माय ददामि । एकं शकटं ददामि । वृषभयुगलं धेनुद्वयं च ददामि । अस्मिन् अवसरे यस्य कस्यापि आप्तस्य पुत्रीम् आनीय विवाहं च कारयामि । सुखेन एतत्क्षेत्रतः सम्पादय । त्वम् अर्धम् उपयोज्य तस्मै अर्धं देहि । ज्ञातं खलु ?'

होन्नः एतत् वचनं श्रुत्वा मूको जातः । तस्य काळेनपल्लीतः दशमैल्दूरे स्थिता

केञ्चनपल्ली । षड्वर्षवयसि बाल्ये एव तस्य मातापितरौ निधनं यातौ । तमेतमिति ग्रामं सञ्चरन् स्वदशमवर्षवयसि कालेनपल्लीं प्राप्तः । गतद्वादशवर्षेभ्यः एतस्य गौडज्जस्य गृहे श्रमकर्म करोति स्म । स्वयमेव वेतनं न याचितवान् । गौडज्जः किम् अपि नादात् । अन्नं वसनं च दत्त्वा प्रीत्या दृष्टवान् । विश्वासेन कर्म निर्वहन् होन्नः देवस्थानकार्ये निरीक्षणं करोति स्म ।

चिण्णय्यः उक्तवान् – 'साधु साधु । दम्पती कष्टेन कर्म कुरुतः चेत् चतुर्षु वर्षेषु स्वतः एक्रेद्वयमितं क्षेत्रं क्रेतुं शक्यते । होन्नः कटिं नमयित्वा कर्म करोति । प्रौढः वज्रपुत्रः निस्सत्वः दासीपुत्रः न भवति सः ।'

ताल्लूककेन्द्रसविधं गत्वा तटाकजले सर्वे स्वपाथेयभक्षणानन्तरं शानुभोगः गत्वा गौडज्जनाम्नि छापापत्रम् आनीय सविशदं दत्तिपत्रं लिखितवान् ।

पत्रं पञ्जीकृत्य ग्रामः गन्तव्य इति यावत् शकटस्य युगं वहेत् तावदेव अग्रहारस्य शेकदारः एतेषां पुरतः आगतः । अग्रहारभागस्य शानुभोगं दृष्ट्वा अवदत् च – 'भवतः ग्रामम् आगच्छेयम् इत्यासीत् । काळेनपल्ल्याः एकं प्रकरणम् अस्ति ।'

'किं तत् देव ?' इति शानुभोगेन पृष्टे स्वग्रामनाम श्रुतमिति गौडज्जस्य चिण्णय्यस्य च कर्णौ उन्नमितौ जातौ ।

शेकदारः अवदत् – 'काळिङ्गगौडनामकः अरुणाद्रेः उपरि एकं देवस्थानम् एकां कल्याणीं च रचितवान् इति खलु ? सर्वकारीयभूमौ आदेशं विना एवम् आक्रम्य निर्मितमिति उच्चानां लक्ष्ये आगतम् अस्ति । स्थलीयसमीक्षां विधाय प्रणिगदनं कर्तव्यमिति मह्यम् आदेशः दत्तः अस्ति ।'

'अयमेव काळिङ्गगौडनामा' इति गौडज्जं दर्शयन् शानुभोगः अपृच्छत् – 'गौडज्ज, देवस्थाननिर्माणात् पूर्वं त्वं सर्वकारादेशं न स्वीकृतवान् किम् ?'

'मम वंशस्य धेन्वा सत्येन व्याघ्रं विजित्य आगते प्रदेशे देवस्थाननिर्माणाय कं सर्वकारं किं पृच्छेत् बत । अहं किं तत्र भूमौ कर्षित्वा रागिधान्यम् आरोप्य तेन गृहं पूरितवान् ?'

'गौडय्य, तथापि सर्वकारभूमौ किमपि कर्तुम् आदेशः आवश्यकः । एवमेव त्वं वदसि चेत् श्वः आरक्षकप्रकरणं स्यात् ।'

'आरक्षकः किं कुर्यात् ?'

'सर्वकारेण आदेशः कृतश्चेत् देवस्थानम् उत्पाटयेत् ।'

'किं तत्पिता !' गौडज्जः उद्विग्नः। 'देवस्थानम् उत्पाट्य स जीवेत् किम् ? मन्दिर-निर्माणाय पुण्यम् अपेक्ष्यते । तस्य उत्पाटकस्य वंशः समाप्तः भवेत् । शेकदारवर्य, भवतां का जातिः ?'

शेकदारः एव सावधानेन उक्तवान् - 'तथा उद्वेगी न भवेत् गौडय्य ! सर्वकारस्य न्यायम् उक्तवान् अहम्। अधुनापि एकं निवेदनं दत्तं चेत् तत्सर्वं समञ्जसं कर्तुं शक्यते। सर्वकाराय किञ्चित् शुल्कं देयम्। तावदेव ।

शेकदारः शानुभोगम् एकं निमेषम् अन्यत्र नीत्वा गतः। पतिनिवृत्य आगतः शानुभागः 'गौडज्ज, एकशतं रूप्यकाणि दीयन्ते चेत् ईषदपि पीडा यथा न स्यात् तथा समापयामीति वदति। किं कुर्याम ?' इति अपृच्छत्।

'देवकार्यं कर्तुम् एतेभ्यः दासीपुत्रेभ्यः कुतः देयम् ?' इति गौडज्जः हठं विहितवानेव। किन्तु एतम् आक्षेपं न शामयति चेत् इतः दशदिनेषु जायमानायाः प्रतिष्ठापनायाः यात्रायाश्च प्रतिबन्धस्य सम्भावना आसीत्। शानुभोगस्य मध्यस्थतया तदनु गौडज्जः शेकदाराय पञ्चविंशतिं रूप्यकाणि अदात्। तेन निवेदनं विलेख्य शानुभोगः अमल्दारं दृष्ट्वा तस्य उल्लेख्यस्य एकं मार्गं कल्पितवान्।

## 3

प्रतिष्ठापना यात्रोत्सवश्च गौडज्जस्य निरीक्षपेक्षया सुष्ठुतया संपन्नौ। आदौ गङ्गापूजनं भूत्वा कल्याण्याः जलं पवित्रं जातम्। देवालयस्य कलशं संस्थाप्य अनन्तरं विध्युक्तं विग्रहप्रतिष्ठापनमभूत्। तावन्तः जनाः विप्राः सम्भूय तावत्कालं मन्त्रं पठितवन्तः इति न केवलं गौडज्जः, तत्र समन्तात् यः कोऽपि न श्रुतवान् आसीत्। पर्वार्थं निरीक्षाम् अतिरिच्य जनाः आगताः चेदपि एतैः कृतः पाकः सर्वान् उपशमय्य इतोऽपि अवशिष्टः अभवत्। 'पुण्यकार्यं क्रियमाणं चेत् सर्वदापि भोजनम् अपर्याप्तं न भवत्येव। अत्रैव एकत्र इति न स्यात्। अहं बहुत्र अपश्यम्। प्रथमतः देवतीर्थम् अन्नराशेः उपरि प्रोक्ष्यते खलु, तत् राश्यन्नं कियतामपि जनानां पर्याप्ततां याति' इति मैसूरुतः आगतः महापुरोहितः अवदत्। यात्रोत्सवाय सप्ताष्टसहस्रं गावः आगताः आसन्। सर्वकारेण प्रकटनं कृत्वा विक्रीतेन गोमयेनैव त्रिशतं रूप्यकाणि प्राप्तानि।

गौडज्जस्य इतःपरं न कापि चिन्ता । देवस्थानकार्यम्, तत्र पूजार्थं स्वेन केदारं दत्तिरूपेण दत्तमिति च निवेद्य पौत्राय पत्रं लिखितं चेत् सः बहु किमपि अविलिख्य तत् ममापि सन्तोषकरम् इति अलिखत् । चैत्रमासे होन्नस्य विवाहः संवृत्तः । केदाराणि अग्रहारस्य बहुसमीपानि भवन्तीति कारणात् गौडज्जः तत्रैव पश्चाद्भागे सगोष्ठं गृहमेकं निर्माय दत्तवान् । तस्य वृषभशकटमपि प्राप्तम् । वृष्टिपतनानन्तरं होन्नः स्वस्य नूतनवारगतायां भूमौ श्रमं वोढुम् आरभत ।

जोयिसस्य निधनस्य तावता वर्षद्वयम् अतीतम् । गौडज्जः अग्रे स्थित्वा वेङ्कट-रमणस्यापि विवाहं कारितवान् । द्वौ कुटुम्बौ सङ्गतौ आस्ताम् ।

अग्रहारे सम्प्रति न्यूटैपूमाध्यमिकशाला प्राप्ता । तस्यां कश्चन एस्.एस्.एल्.सि. परीक्षामुत्तीर्णः अनुभवी आङ्ग्लाध्यापकः आगतः । शुद्धाशुद्धम् अनुसृत्य नित्य-नैमित्तिककर्मानुष्ठानं कुर्वतः तस्य प्रौढवयस्का पुत्री एका असीत् । वेङ्कटरमणः अनुरूपः वरः इति तस्य अभासत । जातकम् अपि सङ्गतम् । गौडज्जसमक्षे संलापः जातः, विवाहश्च निश्चितः, ज्येष्ठमासे विवाहोऽपि संवृत्तः ।

तस्मिन्नेव वर्षे अग्रहारशालायां एस्. एस्. एल्. सि. परीक्षामुत्तीर्णः अन्यः अध्यापकः आवश्यकः आसीत् । वेङ्कटरमणः कथमपि तत्र उत्तीर्णः आसीत् । तस्य श्वशुरस्य एव प्रयत्नेन उच्चैः गत्वा कर्तव्यकारणानन्तरं तस्य उद्योगः लब्धः । मासे पञ्चचत्वारिंशद् रूप्यकाणि वेतनम् । सः इदानीं प्रतिदिनं प्रातः उत्याथ स्नानसन्ध्यावन्दनं विधाय पुष्पपत्रैः सहितः गिरिं गच्छति । अग्रहारतः पुण्यकोटिदेवस्थानपर्यन्तम् ऋजुमार्गेण गम्यते चेत् सार्धैकमैल्दूरम् । देवस्थानं सम्मार्ज्य भूतले जलं संसिच्य पूजां विधाय दशवादनतः पूर्वं प्रत्यागत्य शालां गच्छति ।

देवस्थानं परितः गौडज्जस्य भृत्याः एव बिल्वपत्र-करवीरादिपूजापुष्पाणि वर्धयन्ति । कल्याण्याः अधोभागे वटगोणीशाखाम् आरोप्य जलं सिञ्चन्ति । प्रातः पूजार्थं गतेन वेङ्कटरमणेन वादितायाः घण्टायाः नादः काळेनपल्लीं प्रपूर्य श्रूयते । गौडज्जः तस्य गृहवासिनश्च नियतं तत्र यत्र कुत्रापि भवन्तु नाम, हस्तम् उन्नम्य, नमस्कृत्य नेत्रनिमीलनेन शिरः नमयन्ति ।

# सप्तमः अध्यायः

## 1

गतैकमासात् गौडज्जी लक्कम्मा शय्यालग्ना शयिता अस्ति । तदा तदाः ज्वरः बाधते ताम् । जातुचित् अग्रपादः उच्छूनः पुनः उच्छूनता न्यूना भूत्वा प्रकृतिमापद्यते । उत्थाय सञ्चरितुं न शक्तिर्विद्यते । गृहस्य सर्वं दायित्वं तायव्वायाम् आपतितम् । गौडज्ज्याः सप्तषष्टिः पूर्णा इति गौडज्जस्य गणना । तया तु तद् गणनं न ज्ञायते । 'विवाहे अस्मद्गौडानां श्मश्रु उदितम् आसीत् । अहं खण्डशाटिकां धरामि स्म । गणनं कलयन्तु' इति सा स्ववयसः गणनं वदति । पुरा यदा अस्वास्थ्यम् अभूत् तदा एतावत् न शयिता आसीत् सा । तस्याः अन्तिमः रोगः आगतः स्यादिति गौडज्जः चिन्तयति । पालितं, जीवितं मन्दिरं निर्मितं च । स्वस्य अस्याश्च मरणं विना किमन्यत् अवशिष्टम् – इति निरासक्त्या जातुचित् तं रोगं पश्यति ।

परन्तु एकाकी एव स्थितः पौत्रः अरुणदेशात् नागतः । गतस्य तस्य वर्षत्रयम् अतीतम् । इतः षट्सु मासेषु आगमिष्यामीति पत्रं लिखितम् । वर्षद्वयमिति गतस्य ग्रामस्मृतिः न भवेत् वा ? सः ग्रामम् आगमिष्यति चेदपि किमपि न करिष्यति । गोष्ठं न पश्यति । तस्य मातुः सविधे न संलपति । मूकया साकं कियान् संलापः इति वदति । यां कामपि विपणिं सङ्गम्य अमल्दारितां करोति । ग्रामे अस्मदीयम् अस्माकम् इति कदाचित् मनसि एव चिन्तयन् घूर्णितो भवति गौडज्जः । इदानीं होन्नस्य पत्नी गर्भिणी जाता । वेङ्कटरमणस्य पत्नी अपि गर्भिणीति श्रूयते । 'एतस्यापि विवाहः सम्पन्नश्चेत् सम्प्रति एकद्वापत्यानि अभविष्यन् । स अस्मद्वचनं कथं शृणोति ?' इति कदाचित् गौडज्याः सविधे वदति ।

अग्रहारे स्थितं वैद्यम् आमन्त्र्य तेन सूच्यौषधं दत्तं चेदपि इदानीं स्वेन प्राप्तः

मराणान्तिकः रोगः इति गौडज्जी निश्चितवती । तस्याः मरणमिति दुःखं न भवति । किन्तु मरणात् पूर्वं पौत्रः द्रष्टव्यः इति आशा आसीत् । एतावता एव तस्य विवाहं विधाय चतुरः प्रपौत्रान् उन्नीय लालयेयम् इति अतृप्ता आशा अवशिष्टा । स्वयं मृता चेत् मूकां स्नुषाम् आदरेण कः पश्येत् इति आलोचनमपि तां बाधते स्म । वृद्धवयसि पाणिपादं निःसत्त्वमिति शयितश्चेत् अनन्तरं यजमानगौडस्य प्रतीक्षां कः कुर्यात् ? इत्येतां चिन्तामपि प्राप्नोति ।

सदाकालं शय्यायां शयानायाः तस्याः एकैकस्मिन्नपि पार्श्वे क्षतं जातम् । गौडज्जः गृहे एव शोषके उत्पादितं श्रीगन्धतैलं विलिप्य एकत्र यावत् शामयति, तत्पूर्वम् अन्यस्मिन् भागे नूतनं क्षतं भवति स्म । प्रतिदिनं सायङ्काले वेङ्कटरमणः आगत्य एकघण्टां यावत् उपविश्य संलप्य गच्छति । एकस्मिन् दिने गौडज्जः तम् अवदत् – 'वत्स, तव पितामह्याः एवमभूत्, शीघ्रं नागमिष्यसि चेत् मुखदर्शनमपि न प्राप्स्यसि इति तस्मै एकं पत्रं लिख । दासीपुत्रः आगच्छति चेत् आगच्छतु, नागच्छतु वा ।'

वेङ्कटरमणः अन्यस्मिन् दिने एव अग्रहारं गत्वा पत्रं विलिख्य निक्षिप्य आगतः ।

तावता गौडज्जस्य अन्यत् कष्टम् आपतितम् । तस्य तालूकस्य पार्श्वतालूकस्य च शिलाखण्डैः यानमार्गं कृत्वा तत्र दिने एकवारं लोकयानं गच्छेत् यथा तथा सर्वकारः करोति इति किंवदन्ती प्रसृता । नाम तत्र समन्तात् जनाः तैः तालूककेन्द्रं गन्तव्यं चेत् इतःपरं लोकयाने उपविश्य गन्तुं शक्नुवन्ति । एतावन्मात्रा वार्ता काळिङ्गज्जस्य पक्षे कियत् महत्त्वं नार्हति । तस्य तालूकुगमनकार्यं न विद्यते । गन्तव्यमेव आपतितं चेत् गमनसामर्थ्यरहिते अस्मिन् स्थविरवयसि वृषभेन उह्यमानं वृत्तशकटमेव पर्याप्तं भवति । किन्तु यथार्था एका नूतना वार्ता प्राप्ता इति सः उद्विग्नः एव जातः । अरुणाद्रेः सानुम् अतिक्रम्य गच्छन् नूतनः यानमार्गः तस्य गोचरभूमेः अर्धं कर्तयित्वा गच्छति इति श्रूयते । सर्वकारस्य जनाः मापनमपि कृत्वा गताः इति च । मापनपट्टीम् आदाय मापयतः तान् चिण्णय्यस्य पुत्रः वेङ्कटः एव अपश्यत् इति । परितः समन्तात् ग्रामाणां गोचराः केदाराः जाताः चेदपि गौडज्जः तदीयं रक्षितवान् आसीत् । गतविंशति–द्वाविंशतिवर्षेभ्यः तत् सर्वकारस्य गणने केदारमिति दृष्टं चेदपि सः केदारकरं ददच्चेदपि, सा अखण्डतया गोग्रासभूमिः आसीत् । अधुना तस्य मध्ये यानमार्गः गच्छति चेत् नश्यन्ती भूमिः कियती स्यात् ? अन्यच्च मध्ये गच्छति मार्गे प्रदेशस्य जनाः गावः वत्साश्च सञ्चरेयुः । उभयतः पार्श्वे अवशिष्टं क्षेत्रं कापि गौः चरति चेदपि को वा पृच्छेत् ?

एतद्विषयावगमानन्तरदिने सायम् अग्रहारस्य शेकदारस्य चारः आगत्य गौडज्जाय एकं प्रशासनिकं सूचनम् अदात् । तत्रत्यः विषयः कः ? इति पृष्टे स तदेव वाक्यम् अवदत् । सर्वकारः नूतनतया यानमार्गं करोति । सः मार्गः काळिङ्गगौडस्य केदारस्य मध्ये गच्छति । तावद्भागं सर्वकारजनाः वशमानीय तस्य परिहारं ददति । अस्मिन् विषये केदारस्वामिनां यः कोऽपि अक्षेपः विद्यते चेत् मासाभ्यन्तरे निवेदयितुं शक्नुवन्ति ।

सायं विषयावगमानन्तरं गौडज्जः आरात्रि न निद्रितवान् । स्वस्य गोचरस्य एकानन्तरम् अन्यदिति विधया विपत्कारः कुतः आगच्छति ? इति अयं प्रश्नः तस्य मनः तुदति स्म । सद्यः एकस्मिन् मासे ग्रामे गवां सर्वासां चप्पेरोगः प्राप्तः आसीत् । तेनैव काळेनपल्ल्याः सर्वासां गवाम् औषधे कृतेऽपि तस्य गोष्ठे एव गोद्वयं मृतमासीत् । एतद् दुःखम् अधुनापि पूर्णतया न उपशान्तम् । अधुना गोचरभूमेरपि छिन्नतायाः प्रसङ्गः प्राप्तः । 'एते मम पुत्राः यन्त्रयानं न प्रापयन्ति चेत् किं भवेत् ? वृषभशकटे उपविश्य गन्तुं न शक्यते किम् ?' इति सः समग्ररात्रौ स्वस्मिन् एव पर्यालोचयति ।

गौडज्जी एकस्मिन्नेव पार्श्वे शयिता आसीत् । तस्याः प्रज्ञा सुष्ठु आसीत् । तायव्वा अपि जागरिता लुठति स्म । स्वस्य मनश्चिन्तां तासु गौडज्जः न्यवेदयत् । किन्तु तं समाधातुं तायव्वायाः जिह्वा नासीत् । किमपि वक्तुं प्रयत्तवत्याः अपि गौडज्ज्याः स्पष्टं भाषितुं शक्तिः नासीत् ।

प्रातः उत्थितः एव गौडज्जः अग्रहारं गतः । सूचनां वेङ्कटरमणाय दर्शितवान् । किमपि कृत्वा तत् निवार्यम् इति द्वौ अपि निश्चितवन्तौ । सूचना तावता एव विंशति-दिनेभ्यः पूर्वतनी आसीत् । अत्र आगमने विलम्बः अभवत् । होन्नस्य शकटं संवाह्य तदानीमेव द्वावपि होबळिकेन्द्रम् आगतौ । शेकदारस्य सब्वोवर्सि इत्यस्य च दर्शनेन 'यानमार्गः त्वरितं भवेत् । सर्वेक्षणम् अभवत् । अस्मात् तालूकतः कार्यमपि आरब्धम् । मार्गगमनभूमौ स्वायत्तकेदाराणां विचारणा कर्तव्या इति आदेशः अपि प्राप्तः । भवतां केदारं प्रापयितुं सर्वकारीयाः किञ्चित्परिहारमपि ददति । केदारस्य मूल्यं फलवत्ततादि सर्वं विलिख्य भवद्भिः निवेदनं कर्तव्यम्' इति शेकदारः अवदत् ।

'स्वामिन्, किमपि कृत्वा मम भूमेः पीडानिवारणं कर्तुं न शक्यते किम् ?' – गौडज्जः अपृच्छत् ।

'किमपि कृत्वापि न शक्यते । सर्वेक्षणं कृतम् एक्सिक्यूटिव्-अभियन्ता एव अङ्गी-कृतवान् । तत् तालूकम्, एतत् तालूकम् – इति उभयतः अपि कर्म प्रारब्धम् । विनाकारणं

मार्गं वक्रं कर्तुं सर्वकारस्य उन्मादः किम् ?'

अत्र किमपि कार्यं न भवेत्। तेनैव शकटेन द्वावपि ताल्लूककेन्द्रं गतौ । अधुना द्वाविंशतिवर्षाणि यावत् स्थितः अमल्दारश्चेत् किमपि कुर्यात् । किन्तु अधुनातनः कीदृशो वा स्यात् ? तथापि वेङ्कटरमणः निवेदनम् अलिखत्। तत् हस्तेन गृहीत्वा गौडज्जस्य अन्तः गमनावसरे वेङ्कटरमणः सहैव गन्तुं न शक्नोति । यतः सः शालाशिक्षकः । सर्वकारीयः उद्योगी । 'अस्मिन् विषये त्वं कथम् आगतः ? तव विभागाय प्रणिगदनं कुर्मः' इति अमल्दारः आक्रोशति चेत् का गतिः ? गौडज्जः एव निवेदनं दत्त्वा अमल्दारं नतवान्।

'तव गौः यत्र चरति सा भूमिः रक्षिता भवेदिति सर्वकारः योजनां परिवर्तयेत् वा वृद्ध ? सर्वकारः नाम कः इति ज्ञायते त्वया ?' – इति तरुणः अधिकारी पृष्टवान्।

'स्वामिन्, गोमातुः भूमिः बत ? कथमपि रक्षणीया त्वया । पुण्यं प्राप्नुयाः ।'

गौडज्जः एकवचनेन तेन साकं सम्भाषितवान् इति वा, पापपुण्यवचनेन वा अथवा अन्येन कारणेन वा स्वामिनः कोपः प्राप्तः । 'तव कापि बुद्धिः न विद्यते किं वृद्ध ? कः ग्रामः तव ?' इति अगर्जत्।

वृद्धस्य धैर्यम् अन्तर्लीनम्। जिह्वा शुष्का जाता इति यत्ने कृतेऽपि तस्य वाक् न निःसृता । स्वामी 'सर्वकारेण किमपि क्रियते चेत् ग्रामीणानाम् आक्षेपः अस्त्येव । भवतु, अधुना त्वं ग्रामं गच्छ । अहम् अनन्तरं सर्वं कृत्वा ददामि' इत्यवदत्।

'महोदय, निश्चितम्' इति गौडः वदन्नासीत्। 'अहम् एकदा वदामि चेत् न पर्याप्तं वा, न वा ? अधुना बहिर्गच्छ' इति तेन आदेशः कृतः ।

एषः बहिरागत्य शिरसः उष्णीषेण मुखस्वेदम् अमार्जयत्। बहिः द्वारे स्थित्वा सर्वं श्रुतवते वेङ्कटरमणाय घटितं वृत्तं वक्तव्यं नापतितम्।

वेङ्कटरमणः गौडज्जेन साकम् उपाभियन्तुः कार्यालयं गतः । अन्यत् निवेदनं विलिख्य गौडज्जस्य हस्ते दत्त्वा 'अन्तः गत्वा देहि' इत्युक्ते सः भयेन 'न गच्छामि' इत्युक्तवान्।

'तथा वदति चेत् कथं स्यात् ? गोचरभूमेः रक्षणं न भवेद्वा ? सः कुत्रत्योऽपि शिरस्तोदी अमल्दारश्चेत् सर्वेऽपि तथा भवन्ति किम् ? त्वम् अन्तः गच्छ' इति धैर्योपदेशानन्तरं गौडज्जः अन्तः गत्वा निवेदनम् उत्पीठिकायाः उपरि संस्थाप्य दण्डप्रणामं

कृतवान् ।

अभियन्ता निवेदनम् अपठत् । तेन उक्तं श्रुतवान् । नाक्रोशत् । 'अस्तु, अहं विचारयमि' इत्यवदत् । अधिकं भाषितुं भीतः वृद्धः मौनेन बहिः आगतः । वेङ्कटरमणः कार्यालयस्य लिपिकारान् दृष्ट्वा 'कार्यं कृतं चेत् स्वयं गौडात् सम्भावनां दापयिष्यामि' इति, 'अहमपि सर्वकारीयकर्मचारी अस्मि, प्रथमदिनाङ्के वेतनाय आयातः पुनरपि द्रक्ष्यामि' इति च उक्त्वा आगतः ।

द्वयोरपि अधुना ईषत् विश्वासः समजनि । 'निश्चयेन देवः शुभं करोति' इति परस्परं समाधानं वदन्तौ शकटे उपविश्य ग्रामं प्रस्थितौ । 'तेषां मुखं कियदपि धनं क्षिप्यते चेत् सिध्यति । पञ्चाशतः शतस्य वा व्ययः स्यात्' इति वेङ्कटरमणेन उक्तस्य 'कियानपि व्ययो भवतु नाम, केदारं स्ववशे भवति चेत् वरम्' इति गौडज्जः अवदत् ।

## 2

गौडज्जीस्थितिः इतोऽपि निकृष्टा आसीत् । सा न जीविष्यति इति सर्वेषां निश्चितम् अभवत् । किन्तु कदा निधनं याति इत्येतन्मात्रं न कोऽपि वदेत् । सदा सुदीर्घं शयितायाः अपि प्रज्ञा तु भवत्येव । यः कोऽपि यत् किमपि वदति चेत् अर्थबोधः भवतीति भावः मुखे भासते स्म । कदाचित् सामर्थ्ये सति अस्पष्टतमा एकैकं शब्दं म्लानात् ओष्ठात् बहिः निःसारयति स्म । नो चेत् दक्षिणहस्तस्य अङ्गुलिं किञ्चित् चालयन्ती किमपि वक्तुकामा भवति । एषा संज्ञा तायव्वया शीघ्रं ज्ञायते स्म । सा तद्वत् श्वश्र्वाः मुखे क्षीरं जलं वा पूरयति स्म । अथवा पार्श्वपरिवर्तनं कारयति स्म । जातुचित् नेत्रम् उन्मीलयति चेत् स्नुषया कृता संज्ञा तया ज्ञायते स्म ।

वेङ्कटरमणेन साकं ताल्लूककेन्द्रं गत्वा प्रत्यागतस्य गौडज्जस्य पञ्चदशाधिकानि दिनानि यातानि । पत्न्याः अवसानकालः समीपे अस्ति इति सः अधुना कुत्रापि बहिः न गच्छति । गोभिः सहः भृत्याः एव गच्छन्ति । वेङ्कटरमणस्तु सायङ्काले आगत्य घटिकां यावत् सम्भाषमाणः तिष्ठति ।

एकदा मध्याह्नसमये गृहभृत्यः निङ्गः आगत्य अवदत् – 'तात, कट्टेकासाराय काताळेवनाय गतः ततः आगमनावसरे मार्गे दृष्टवान् – अस्माकं केदारस्य उपरि

विस्तरण–मार्गं भेदयितुं प्रारब्धवन्तः । ततः इतः भेदयन्तः सन्ति । कनीयान् गौडः यत्र निखातः तदुपरि एव मार्गः निर्मीयमाणः अस्ति ।'

श्रवणात् तत्क्षणं गौडज्जस्य अतङ्कः सन्निहितः इव जातम् । 'किं तावत् तत् ?' – इति भृत्ये पृष्टे पुनरपि तदेव उक्तमिति श्रुत्वा स्वयमेव स्वात्मानं समाधाय हस्तेन दण्डं गृहीत्वा 'चल, गत्वा आगच्छाम' इति तमपि सहैव नीत्वा गोचरभूमिं प्रस्थितः । शिरसः उपरि तप्ते आतपे पद्भ्यामेव तटाकं तीर्त्वा उपरि लब्धायां वाटिकायाम् अपसार्य बोरेसिकतराशिः यदा आरूढः तदा गोचरभूमौ शताधिकाः कर्मकराः कर्म कुर्वन्तः दृष्टाः । डबडबायमानेन हृदयेन इतोऽपि समीपं गत्वा पश्यति चेत् तत्र कर्मकरेषु यः कोऽपि समन्तात् वासिनः ग्रामीणाः इव न दृश्यन्ते । 'रे अत्र कुतः छेदयत' इति पृष्टे तेषां मध्ये एकः तस्य भाषा न ज्ञायते इति हस्तम् उल्लासयामास ।

ते कर्मकराः सर्वे तमिळुभाषिकाः आसन् । किन्तु तेषां मुख्यः कर्मकारकः स्वामी कन्नडं जानाति स्म । गौडज्जेन सम्भाषितवान् सः अवदत् – 'अत्र कर्म आरब्धवतां त्रीणि दिनानि अतीतानि । सर्वकारीयाः अर्धार्धमैल्मध्ये एकैकस्य सामयिकं कर्म अददुः । तथा तत्र दृश्यमानाशिला अस्ति खलु ततः अत्र देशे दृश्यमानस्य वटवृक्षस्य पर्यन्तम् अस्माभिः प्राप्तम् ।'

'मम गोचरभूमौ मार्गं मा कुरुत इति निवेदनं दत्तं खलु मया ?'

'तत् अहं न जानामि गौड !'

गौडज्जस्य भृत्यः निङ्गः अदर्शयत् – 'तत्र पश्य तात, कनीयसः गौडस्य समाधिरेव भञ्जितः ।'

गौडः समीपं गत्वा अपश्यत् । तस्य पुत्रः कृष्णः, तदनन्तरं मृता पुण्यकोटिश्च द्वावपि परस्परं पार्श्वे निखातौ यत्र तत्र ईषत् भूमिम् उन्नतां विधाय तस्याः उपरि शिलाशय्या स्थापिता आसीत् । अश्मफलकं विहाय अन्यत्र सर्वत्र तृणानि प्रवृद्धानि । सम्प्रति कर्मकराः फलकम् उन्नीय एकत्र क्षिप्तवन्तः, किञ्च उद्भूमिमपि खनित्वा भूतलसमां कृतवन्तः । अन्यस्थलेषु आयामे यथाकृतं तथा अत्र भूमिम् एकहस्तखातं कृत्वा मृत्तिकां तत्रैव त्यक्तवन्तः । खनितायाः मृत्तिकायाः उपरि अनन्तरम् उपलखण्डान् संस्थाप्य मार्गयानेन चालनम् अग्रिमं कार्यम् आसीत् ।

एतत् दृश्यं दृष्टवान् गौडज्जः तत्रैव मौनम् उपविष्टः । केनापि सह किं सम्भाषितव्यम्

इत्येव नावगतं तेन । कृष्णः तस्य मातुः पुण्यकोटेः गोः पार्श्वे अद्यावधि विना कोलाहलं शयितः आसीत् । गतेभ्यः विंशतेः पञ्चविंशतेः वा वर्षेभ्यः अत्र आगते सैव भावना भवति स्म । गां रक्षितुं त्यक्तप्राणः पुरुषः कृष्णः, तस्य शवोऽपि अत्रैव केदारे निखातः आसीत् । सः अत्र यावत्तिष्ठति तावद्वा व्याघ्रः, तरक्षुर्वा कथम् आगच्छेत् ? यथोक्तं, कृष्णस्य मरणानन्तरं तत् परितः तरक्षुः मुखमेव नादर्शयत् । अधुना एते तस्य समाधिमेव खातयित्वा तदुपरि यानं चालयन्ति । एकं निमेषं यावत् शिरो भ्रमतीव अनुभूय गौडज्जः हस्तं शिरसि आधारं कृतवान् । अनन्तरं समाधाय उत्थाय कर्मकरमुख्यसमीपं गत्वा न्यवेदयत् । 'तात, तत्र मम पुत्रः, मम गौश्च निखातौ, एते तदेव खानितवन्तः । ईषत् तं मार्गं वक्रं कर्तुं न शक्यते वा ? मम केदारं तु भग्नमेव । एतत् स्थलं यथावशिष्टं तथा कुरु ।'

मेस्त्री सहानुभूत्या अवदत् – 'गौड, मार्गः कुत्र कुत्र, कथं कथं कर्तव्यः इति पूर्वमेव प्रथमतः मापनं कृत्वा योजना कृता अस्ति । सर्वमपि उपरिवर्तिनः कृतवन्तः । वयं किमपि कुर्मश्चेदपि तत् न परिवर्तते । भवान् प्रथमतः मुख्यविभागाधिकरिणां सविधं गत्वा निर्बन्धाज्ञाम् आनयेत् । तदनन्तरं कार्यकारिणम् अभियन्तारं दृष्ट्वा मार्गस्य योजनां परिवर्तयतु । तत् ते कुर्वन्ति उत इतोऽपि उपरिष्टात् आगन्तव्यं वा इति न ज्ञायते । परन्तु इतः द्वयोः मासयोः मार्गः यानसञ्चाराय सिद्धः भवेत् इति आदेशः प्राप्तः इति एतत् ते न परिवर्तयेयुः ।'

गौडज्जः न पुनः अभाषत । पुनः भाषणं निष्प्रयोजकमिति सः बुद्धवान् उत भाषण-शक्तिरेव अन्तर्गता, अथवा निर्वेदः आवृतो वा, मौनेन स्वदण्डं हस्तेन गृहीत्वा प्रतिनिवृत्तः । भृत्यः निङ्गः स्वामिनम् अनुसृतवान् ।

तौ उद्भूमिम् अवतीर्य वाटिकामपि उत्तीर्य यदा आगतौ तदा एतौ एव अन्विष्य प्रत्युद्गतः अन्यः भृत्यः गोरवः, नेत्रे उन्मार्ज्य अवदत् – 'अम्बा निधनं याता ।'

गौडज्जः मौनेन मुखम् उन्नमय्य तम् अपश्यत् । निङ्गः एव किं तदभवत् इति यदा पृष्टवान् तदा गोरवः अवदत् – 'कनीयसः गौडस्य समाधेः उपरि मार्गं कुर्वन्तः सन्ति खलु, इति त्वया यदा उक्तम्, तदा अहं तत्रैव आसम् । त्वं तातश्च यदा गतौ तदा अम्बा मन्दं 'किम् ?' इत्यवदत् । अहमेव गत्वा तस्याः कर्णान्तिके 'कृष्णस्य समाधिं भङ्क्त्वा मार्गं कुर्वन्तः सन्ति इति । तेन सह शयितायाः पुण्यकोटेः समाधिमपि भञ्जयन्तः सन्ति इति' इत्यवदम् । ततः परं सा किमपि न अवदत् । नेत्राभ्याम् बिन्दुमितं जलम्

अपतत् । अहमेव 'मा रुदिहि अम्ब, द्रष्टुमेव गौडज्जः गतः' इत्युक्तवान् । ततः अहं द्रोण्यां जलम् उन्नीय स्थापयितुं गतः । किञ्चित्समयानन्तरं तायव्वा आगत्य आक्रन्दत् । अहं गत्वा पश्यामि अम्बायाः जीवाः गताः आसन् ।'

भृत्यः निङ्गः नेत्रे अमार्जयत् । किन्तु गौडज्जः एकमपि न भाषितवान् । मौनेन अग्रे अग्रे गतः । तस्य गमनावसरे गृहे ग्रामजनाः सम्मिलिताः आसन् । अस्थिपञ्जरं भूत्वा अद्यावधि निश्चेष्टितं शयित्वा, अधुना प्राणपक्षिणा मुक्तायाः श्वश्र्वाः शवं द्वाभ्यामपि हस्ताभ्यां गृहीत्वा तायव्वा मूकं रुदती आसीत् । एतद् दृश्यं दृष्ट्वा गोरवः अपि अश्रु मुञ्चन् 'अहं न तथा वदेयं चेत् अम्बा न मृता स्यात् ननु ? अहमेव उक्त्वा व्यापादितवान् इति अभवत्' इति नेत्रे उन्मार्जितवान् ।

गौडज्जस्तु एकमपि शब्दं नावदत् । स्तम्भम् अवलम्ब्य दशनिमेषान् समाहितवान् । तं परितः जनाः सम्मिल्य भाषयन्ति चेदपि स्वयं मूकवत् मौनम् अतिष्ठत् । अनन्तरं तथैव उत्थाय 'किमिदम् एवम् उपविष्टाः स्थ ? उत्थाय चितां न रचयत किम् ? शवं कियत्पर्यन्तं गृहे संस्थाप्य स्थातुं शक्यते ? गताः जीवाः पुनरागच्छन्ति किम् ?' इत्यवदत् ।

समीपे एव स्थितेन चिण्णय्यस्य पुत्रेण वेङ्कटेन 'बान्धवाः न अगच्छेयुः किम् ? कस्मै कस्मै ग्रामाय सन्देशः प्रेषणीयः वदतु' इत्युक्ते 'कोऽपि बन्धुः मास्तु, शीघ्रं शवं मृद्गतं कुरुत, उत्तिष्ठत' इत्यवदत् ।

वेणुनिर्मितं यानं सिद्धमभवत् । गौडज्जः एव 'रे सुमङ्गली एव मृता । हरिद्राकुङ्कुमं लेपयत । किञ्चित् पुष्पम् आनीय आरोपयत । नूतना शाटिका कुत्रास्तीति पश्यत' – इत्यवदत् ।

शवशरीरम् उद्वर्त्य नूतनां शाटिकां धारयित्वा, उद्गतं यथा दृश्यते तथा कपोले हरिद्रां विलिप्य, ललाटे कुङ्कुमं लगयित्वा, मस्तके कुन्तलमिव अवशिष्टेषु केशेषु कतिपय-पुष्पाणि आरोपयन् । चितावहनावसरे निस्सत्त्वतया पतितां स्नुषां समाधातुं तत्रत्याः वनिताः उक्त्वा गौडज्जः शवस्य पश्चात् गतः । गोचरभूमिं विहाय तस्य आदेशानुसारेण अस्मिन्नवसरे वाटिकायां खातं कृतमासीत् । सह आगतैः सर्वैः तण्डुलधानानां प्रक्षेपणानन्तरं शवस्य उपरि मृत्तिकाम् आच्छादयन् ।

## 3

सायङ्काले समीपस्थाः, दूरस्थाः चेति कियन्तोऽपि जनाः बान्धवाः आगताः। वार्तां प्राप्य तत्क्षणमेव वेङ्कटरमणः शालाम् अर्धे एव परित्यज्य धावम् आगतः। गौडज्ज्याः मरणरीतिं गौडज्जः स्वयं तं नावदत्। अन्यैः उक्ते अनन्तरं वेङ्कटरमणः 'वयम् अधुनापि जनपदकेन्द्रं गत्वा आगच्छाम किम् ? भवान् मास्तु। अहम् एकः एव गत्वा आगच्छामि। गोचरभूमिस्तु भिन्ना जाता। किन्तु एतं समाधिं विहाय ईषत् वक्रं मार्गं निर्मान्तु इति प्रार्थ्यते चेत् कुर्युः इति भाति' इत्यवदत्।

'त्वं मा गच्छ। तूष्णीं तिष्ठ' – गौडज्जः अवदत्।

'तथा न। अस्माकं प्रयत्नः भवेदेव। ताल्लूकस्य अभियन्तुः कायस्थोऽपि किमपि न कृतवान्। तं तु गृहीत्वा एतावद्वा कारयितुं शक्येत।'

'वत्स, तव भ्रान्तिः। तूष्णीं तिष्ठ' एतावदेव उत्तरमासीत् गौडज्जस्य।

वेङ्कटरमणः तं विषयं तत्रैव अत्यजत्। इतः मृतायाः पितामह्याः तिथिः भवेत्। पुत्रः अस्ति चेत् शिरोमुण्डनं विधाय कर्मणि अधिकारी स एव भवति। अधुना पौत्रः तत्कर्म कुर्यात्। 'काळिङ्गाय तन्त्रीसन्देशं प्रेषयामि किम् ?' वेङ्कटरमणः अपृच्छत्।

'तथोक्ते किम् ?'

'तन्त्र्या पत्रलेखनम्। एवम् अभवत् इति अत्र उक्तं चेत् ते तद्वसतिस्थलस्य पत्रालयाय एकेनैव निमेषेण निवेदयन्ति। अहं ताल्लूककेन्द्रं गत्वा धनं दत्त्वा विलिख्य ददामि चेत् पर्याप्तम्। श्वः प्रातः प्रागेव तेन प्राप्यते। व्योमयानेन सः तत्क्षणम् आगतश्चेत् दिनद्वये एव आगन्तुं शक्नोति। एकादशदिनात्पूर्वम् आगमिष्यति चेदपि सः पितामह्याः तिथिं कर्तुं शक्नुयात्।'

एकनिमेषम् आलोच्य गौडज्जः उक्तवान् – 'सः दासीपुत्रः नागतश्चेत् मास्तु। तिथ्याचरणम् अस्मत्कर्मक्षालनाय। तस्य आगमनेन किं स्यात् ?'

'तथा न, बोधनम् अस्मत्कर्तव्यम्। विषयबोधानन्तरं सः निश्चयेन आगमिष्यति।'

'अस्तु, तथा चेत् तन्त्रीपत्रं प्रेषय। धनं कियत् भवति ?'

'मयापि सम्यक् न ज्ञायते।' ऊहया शतं रूप्यकाणि स्वीकृत्य गौडज्जगृहस्य शकटेन वेङ्कटरमणः तस्यां रात्रौ एव ताल्लूकस्य तन्त्रीकेन्द्रं गतः।

किन्तु एकादशदिने सन्निहितेऽपि कालिङ्गः अमेरिकातः नागतः । तिथये आगताः बन्धुबान्धवाः तमेव विषयं संलपितवन्तः । बन्धुषु अन्यतमः शिरोमुण्डनं विधाय नवग्रहाणां पुरतः उपविश्य शास्त्रविधिम् आचरत् । रात्रेः भोजनाय पञ्चसहस्रं जनाः सम्मिलिताः । कुत्रापि न्यूनतां विना गौडज्जः पत्न्याः अन्त्यकर्म आचरितवान् ।

## 4

गोचरभूमिं गत्वा कृष्णपुण्यकोट्योः समाधेरुपरि मार्गं जायमानं दृष्ट्वा आगतं यत् तद्दिनात् गौडज्जः केनापि सह न सम्भाषिष्ये इति सङ्कल्पं कृतवान् इव अन्तर्मुखी आसीत् । पाणिपादस्य शक्तिरपि अन्तर्गता इव अनुभूयते । पत्न्याः तिथिसमापनपर्यन्तं बलात् यावच्चेष्टितं तदेव । तिथेः रात्रौ बन्धूनां गमनानन्तरं कम्बलम् आस्तीर्य मौनेन शयितः । तदा तदा समीपम् आगत्य तिष्ठन्तीं स्नुषां द्वित्रैः वचनैः समादधाति । अन्यसमये तूष्णीं शयितः आसीत् । ज्वरः नास्ति, शैत्यं नास्ति । एष एव इति उच्यमानः रोगः अपि नास्ति । किं स्यात् मम ? – इति स एव कदाचित् आलोचयति स्म ।

गौडज्जस्य मनःस्थितिः वेङ्कटरमणेन सम्यक् ज्ञाता । प्रतिदिनं सायं तत्र आगच्छता तेन किमपि वेदान्तवचनम् उच्यते । गौडज्जीमरणेन न शोचितव्यम्, जीर्णवस्त्रम् इव आत्मा शरीरं विहाय देहान्तरं धरति – इति वाक्यमेव वक्तुम् आरभते । अधुना कालः परिवर्तितः अस्ति । इदं कलियुगं खलु ? एतस्य समाप्त्यनन्तरं प्रलयो भविष्यति । पुनः सत्ययुगं प्रारभते । तदा सर्वत्र गोपूजा प्रचलति । किञ्च जनेषु गोः विषये भक्तिः उदेष्यति – इत्यादि वदति स्म । तेन उक्तं शान्ततया गौडज्जः शृणोति । किन्तु स्वेन अनवगतं विषयं पूर्वं यथा प्रश्नेन अवगच्छति स्म तथा अधुना न पृच्छति ।

मम किं जातम् ? इति गौडज्जः कदाचित् स्वयम् आलोचयति स्म । भोजने इच्छा नास्ति । गृहं क्षेत्रम् इत्यादिषु आस्था न विद्यते । स्वगोष्ठस्य गोषु अपि संलग्नता नासीत् । पुरा न कदाचित् प्रत्यहं चतुर्वारं गोः स्थालीं द्रोणीम् अपरीक्ष्य गच्छति स्म । सम्प्रति गोष्ठं गत्वा आगन्तुम् अपि उत्साहः न विद्यते । मुखे स्वैनैव यथा भासेत तथा आतङ्कच्छाया दृश्यते । स्नुषया बलात् आनीय गङ्गास्थाल्यां वितीर्यमाणं पिण्डं, दालं च खादति स्म । अनन्तरं अर्धप्रस्थमितं तक्रं पीत्वा शेते स्म । जठरे आहारः गतश्चेदपि तस्य दिनात् दिनं ह्रासस्थितिः नावरुद्धा ।

कृष्णपुण्यकोट्योः समाधेः उपरि मार्गं रचितम् आलोचयतः गौडस्य एकस्मिन् दिने पुण्यकोटेः मरणरीतिः स्मृतौ आगता। तस्य मुखे तरक्षोः नखाघातः लग्नः आसीत्। ततः गृहागमनानन्तरं स्वस्य औषधविलेपनेन क्षतम् उपशान्तं चेदपि तस्य आतङ्कच्छाया न न्यूना जाता। बलात् सम्प्रति स्नुषा स्वं यथा भोजयति तथा तण्डुलं नारिकेलं च सम्पेष्य वितरणेनापि तस्याः शक्तिः न वर्धिता। मुखे आत्मनः यथा तथा गृहीता आतङ्कच्छाया संलिप्ता आसीत्। तस्याः नेत्रयोः चैतन्यमेव नासीत्। अधुना स्वात्मनः अपि तथैव अभूत्। पुण्यकोटिस्तु तरक्षुणा आक्रान्ता इति आतङ्किता तथा जाता इति वक्तुं शक्यते। किन्तु स्वस्य किम् अभवत् ? अहं किम् आलोक्य आतङ्कितः अभवम् ? अथवा भीतः ? माम् आक्रान्तवत् किम् ?

गौः मनुष्यश्च इति द्वयोरपि बुद्धिः समाना ननु ? इति जातुचित् पृच्छति स्म। स एव उत्तरमपि वदति स्म। गोः बुद्धिः मनुष्यापेक्षया उत्तमा एव। ताः देवजातयः। मनुष्याः दुष्टजातयः।

सम्प्रति एकवर्षात् पूर्वं चिण्णय्यः मृतः आसीत्। तस्य पुत्रः वेङ्कटगौडः अधुना तद्गृहस्य स्वामी। एकस्मिन् दिने गौडज्जः वेङ्कटाय सन्दिष्टवान्। तस्मै निवेद्य शकटं निबध्य सः स्ववाटिकां गतः। तत्र वृतौ, कुल्यासमीपे च प्रवृद्धानि पर्णानि, मूलानि एकैकमपि तस्मै प्रदर्शयन् गवाम् आपद्यमानानां केषां केषां रोगाणां का का मूलिका औषधरूपेण दातव्या, तस्य कथम् उपयोगः, तेन साकम् उपयोज्यानि इतरवस्तूनि कानि, रोगस्य लक्षणानि कानि इत्यादि शिक्षितवान्। अन्ते 'कस्याः अपि गोः अस्वास्थ्यं भवति चेत् त्वया गत्वा औषधं देयम्। तव अहितस्यापि गौः चेदपि औषधं न ददामि इति न वक्तव्यम्। औषधस्य दत्तस्य धनं, मूल्यं न स्वीकर्तव्यम्। स्वीकृतं चेत् तव वशे न तिष्ठेत्' इत्युक्त्वा तेन हस्तस्पर्शपूर्वकं शपथं स्वीकृतवान्। अनन्तरं शकटे उपविश्य गृहम् आगत्य पुनः कम्बलस्य उपरि लुठितवान्। स्वल्पसमये समाहितः सन् अनन्तरं वेङ्कटम् उद्दिश्य 'सः दासीपुत्रः कदा आगच्छेत् वा ? स आगमिष्यति चेदपि गृहे एव वसति वा न वा ? त्वम् ईषत् मम गोष्ठे लक्ष्यं वह' इति अवदत्। 'तत् किमर्थम् असत् वचनं वदसि ? चिन्तां त्यज' इति उक्त्वा वेङ्कटः पुनरपि गौडज्जस्य हस्तं गृहीत्वा शपथम् अकरोत्।

एतदनन्तरं त्रिषु दिनेषु अतीतेषु गौडज्जः वेङ्कटरमणम् अवदत् – 'वत्स ! श्वः परश्वः वा दिनं शुभम् अस्ति चेत् पश्य, अहं गोदानं करिष्यामि।'

'अधुना कः विशेषः, गौडज्जीतिथौ तावत् गोदानं कृतं खलु ?'

'गोदानं कर्तुं विशेषः आवश्यकः किम् ?' सुदीर्घं निःश्वस्य सावकाशम् अवदत् – 'यथार्थं वदामि शृणु। एतावन्ति दिनानि अभवन् स्वामित्वाधिगमानन्तरम्, मया विंशतिः, पञ्चविंशतिः वा गोदानानि कृतानि स्युः । किन्तु एकामपि पुण्यकोटिगां न दत्तवानेव। मन्दिरे विग्रहपूजावसरे गोदानद्वयं कृतवान् खलु ? तदा एव पुण्यकोटिधेनुः दातव्या इति मनः आसीत्। लोभः झटिति त्यजति किम् ? तदा अन्या एव गौः दत्ता। इतःपरम् अहं न भविष्यामि। मरणात्पूर्वं पुण्यकोटिगां दत्त्वैव म्रिये।'

वेङ्कटरमणः तिथिनक्षत्राणि गणयित्वा 'परश्वः प्रातः शुभमुहूर्तः अस्ति' इत्यवदत्। तद्दिने प्रातः गौडज्जः शकटे शयित्वा, तायव्वाम् अपि सहैव नीत्वा पुण्यकोटिदेवस्थानं गतः। दोहनशीले द्वे पुण्यकोटिगावौ शकटात् पश्चादेव स्ववत्ससहिते आगते। देवस्थाने पूजासमाप्त्यनन्तरं कल्याण्याः जलम् आदाय वेङ्कटरमणेन उच्यमानैः मन्त्रैः सह द्वयोरपि धेन्वोः पूजां विधाय ते वेङ्कटरमणाय दानरूपेण दत्तवान्। अनन्तरं गोः, ब्राह्मणस्य च पादौ स्पृष्ट्वा तायव्वा नेत्रे उपस्पृष्टवती। गौडज्जः अवदत् – 'मनसि कश्चन चोरः उपविष्टः आसीत्। सः इदानीं गतः। अत्यन्तं प्रियस्यैव दानं कर्तव्यं खलु ?'

वेङ्कटरमणः गावौ स्वीकृत्य स्वग्रामं गतः। गौडज्जः स्नुषया सह शकटेन गृहम् आगतः। गृहे इतोऽपि षट् पुण्यकोटिगावः आसन्। सः स्नुषाम् अवदत् – 'वत्से, यज्जातीया अपि गौः पुण्यकोटिरेव। तथापि एषा जातिः अस्मद्वंशीया। एषा सलक्ष्यं सम्यक् पालनीया, जानीहि।'

तायव्वा भक्त्या शिरः श्लाघितवती। अनन्तरदिने तं ग्रामं कोलेवृषभजनाः आगताः। गौडगृहस्य पुरतः एव सीताकल्याणम् अभिनीतवन्तः। 'सीताम्बायाः विवाहं कारयसि वा रामण्ण ?' इति पृष्टे वृषभः उत्साहेन वक्षःस्थलम् उन्नतं कृत्वा कण्ठं प्रदर्शयति। 'तुभ्यं वधूं न ददाति कच्चित्' इत्युक्ते कोपेन पश्चात् गच्छति। अनन्तरं शिवधनुः नतवानिव पादान् अकरोत्। स्वयमेव गत्वा सीतायाः सविधे अतिष्ठत्। 'रामचन्द्रं परिणयसि किं सीताम्ब ?' इति पृष्टे सीताम्बा स्त्रीसहजया लज्जया मौनेन मस्तकम् अधः नीतवती। शोभनरागं वाद्ये वादयन्तः कोलवृषभगणीयाः सीतारामकल्याणं निरवहन्। अनन्तरं सर्वेषां गृहाणां पुरतः अपि शोभायात्रायां गतायां पूर्ववत् ग्रामीणाः सर्वे शूर्पे रागिधान्यम् अवरेदलानि वा दत्तवन्तः। वनिताः सीतारामयोः हरिद्राकुङ्कुमं लिप्तवत्यः।

ग्रामस्य सर्वेष्वपि गृहेषु भिक्षाटनानन्तरं कोलवृषभीयाः गौडज्जगृहम् आगत्य न्यवेदयन् ।'अस्मत्परिवारे एकः विवाहः करणीयः अस्ति । वधूवरौ अत्रैव स्तः । किन्तु विवाहव्ययाय धनं नास्ति अस्माकं हस्ते । यदि भवान् पञ्चाशत् रूप्यकाणि ऋणं ददाति तर्हि इतः वर्षद्वयाभ्यन्तरे धनं प्रत्यर्पयिष्यामः । भवान् महान् गोपगौडः, यजमानः इति निवेद्यते । कल्याणकार्यम् इदम् । साहाय्यं कृत्वा पुण्यं सम्पादय गौडज्ज' इति गणनायकः अवदत् ।

'किं तावत् रे, युष्माकं ग्रामः अग्रहारः वा कः इति केन ज्ञायेत ? दत्तं धनं मम हस्ते पुनरायाति इति कः निश्चयः ?' इति गौडज्जेन पृष्टे यजमानः नोत्तरयत् । सः तेषां मध्यतः एकं बालकम् एकां बालिकां च समीपम् आह्वयत् । कोलेबसवस्य सीताम्बाम् अन्तः आनीय ताभ्यां तस्याः पुच्छम् अग्राहयत् । अनन्तरम् अवदत् – 'गौडज्ज, एतयोरेव विवाहं कारयामः । तौ एतस्याः सीताम्बायाः नाम्ना शपतः, पश्य । भवतः धनमानीय न दीयेत चेत् तौ न जीवेताम् ।'

गौडज्जः अनन्तरं न किमपि अभाषत । स्नुषाम् आहूय 'अन्तर्गृहात् पञ्चाशत् रूप्यकाणि आनय' इत्यवदत् । तया आनीतानि स एव पुनरपि शयितः एव गणयित्वा तेभ्यः अदात् । 'एतस्य गृहस्य शुभं भवतु । अत्र पूर्णतया सुवर्णानि रोहन्तु । भवतः गोष्ठे सहस्रं धेनवः जायन्ताम्' इत्यादि शुभकामनां वदन्तः ते सर्वे गताः ।

तद्दिने एव रात्रौ गौडज्जः वेङ्कटाय सन्दिष्टवान् । तस्य आगमनानन्तरं 'वत्स, वंशिकारवः श्रोतव्यः इति आशा भवति । तव वंशिकाम् आनय' इति अवदत् । वेङ्कटेन आनयनानन्तरं तस्य स्कन्धे स्वबाहुं न्यस्य मन्दं गच्छन् गृहस्य पश्चात् गोष्ठं गतः । प्रत्येकं भाण्डे द्रोण्यां वा तृणानि जलं च विद्यते किमिति वेङ्कटेन परीक्ष्य दर्शनान्तरं सः गोष्ठस्य मध्ये बद्धस्य अट्टस्य उपरि कम्बलम् आस्तीर्य शयितः । गोष्ठस्य समस्तगावोऽपि तृणानि खादित्वा शयिताः रोमन्थं कुर्वन्ति स्म । दक्षिणभागस्य कुब्जभित्तेः अनन्तरभागे बद्धाः वृषभास्तु इतोऽपि भक्षयन्तः आसन् । आवरणात् बहिः स्थितम् उद्यानं चन्द्रिका आर्द्रम् अकरोत् । गौडज्जस्य वचनानुसारेण वेङ्कटः तस्यैव अट्टस्य एकस्मिन् कोणे उपविश्य वंशिकां वादयितुम् आरब्धवान् ।

स्वश्वासे शक्तिः यावदासीत् तावत् गौडज्जः समन्तात् येन केनापि वादयितुम् अशक्यरीत्या सुष्ठुतया वंशिकां वादयति स्म । अनन्तरं तस्य पुत्रः कृष्णः तस्य नाम्नः सार्थकतां नयन् सुष्ठु वादयति स्म । ओष्ठाभ्यां ताम्बूलरसः यथा स्रुतः स्यात् तावत्

क्रमुकताम्बूलं चर्वित्वा वंशिकायां तन्मयश्चेत् तस्य दर्शनमेव एकं रमणीयमासीत्। तद्वादनं नाम तस्य न केवलम् अस्य जगतः, स्वस्मिन्नपि प्रज्ञा न तिष्ठति स्म। अधुना तु विद्यमानेषु वेङ्कटः सुष्ठु वादयति।

अर्धघण्टां यावत् वादनेऽपि तस्य वंशिकायाः रञ्जनं नावर्धत। गौडज्जः एव 'किमिदम्, क्रमुकताम्बूलं नास्वादितं किम् ?' इति अवदत्। वेङ्कटेन 'न' इति उक्ते 'अन्तः गत्वा आनीय आस्वादय' इति अवदत्। गौडज्जस्य गृहे ताम्बूलदलमेव नासीत्। वेङ्कटः स्वगृहं गत्वा एककवलिकाम् आनीय पूर्णवदनं पूरयामास। स्वल्पे एव समये तस्य कण्ठनाड्यः उच्छूनाः अभवन्। शरीरम् उष्णम् अभवत्। अनन्तरं वंशिकारन्ध्रे ओष्ठं लगितवान्। अधुना नादस्य शक्तिरायाता।

शान्तायां निशायां तावत्काले वृषभाः अपि तृणभक्षणं तत्यजुः। ज्वलिते लघुनि मृद्दीपे तायव्वा तदा तदा नीपतैलम् आपूर्य वर्त्तिकां नोदयति स्म। वंशिकानादः तारतरं स्तरम् आरोहति स्म। तेषां गानस्य शास्त्रसम्बन्धः यः कोऽपि नासीत्। श्रीकृष्णः बाल्ये वंशिकया एव मायां यथा रचयति स्म तथा तेषां वंशिकापि मायां रचयति स्म। मायया असृष्टं जगत् किमस्ति ? श्रीकृष्णकृता माया एव सत्या। अन्यत् सत्यं सर्वं मिथ्या भवति स्म।

नदीतीरस्य चन्द्रिकायां गावः शयिताः रोमन्थं कुर्वन्ति स्म। बालवत्साः समीपे एव कूर्दनेन क्रीडन्ति स्म। वातावरणं प्रशान्तं विद्यते। किन्तु तावता एव कालेन दुष्चेष्टाः वृषभाः तत्र पुरो गच्छन्ति। परस्परं तुदन्तः शृङ्गैः घट्टयन्तः युध्यन्ते स्म। पादखुरेषु लग्नाः भुवः उद्गताः अरुणधूलयः चन्द्रिकायाः श्वैत्यम् आवृण्वन्ति। युध्यमानानां वृषभाणां शरीरतः रक्तं स्रवति, केषाञ्चन शृङ्गान्येव भग्नानि। तथापि ते युद्धं न त्यजन्ति। भीत्या धेनवः स्ववत्सैः साकं प्रधाव्य, आगत्य गोपालं श्रीकृष्णं शरणं गच्छन्ति।

सस्मितः श्रीकृष्णः स्ववंशिकां बहिः निःसारयति। तस्याम् ओष्ठं लगयित्वा एकवारम् उच्चैः वादयति। नादश्रवणसमनन्तरमेव वृषभाः युद्धं स्थगयन्ति। स्थिताः एव वादकपार्श्वं परिवर्तन्ते। अन्यस्य अन्यविषये विद्यमानः कोपः स्वयं शान्तो भवति। अरुणधूलिं विहाय भूमिः स्वच्छा भवति। सर्वत्र वंशिकानादस्यैव शब्दः। सर्वाः अपि धेनवः नेत्रे निमील्य कर्णम् उन्नमय्य शेरते। नदी अपि नादस्य अन्तरायः न कर्तव्यः इति स्वयमपि प्रवहणं निवार्य जुळु जुळु नादं निःशब्दयति। जलं घनीभूतमिव तिष्ठति। चन्द्रिका पुञ्जीभूय घनतामेति। वंशिका तु निर्वातप्रदेशे दीपशिखा इव ध्वनिम् अचलं मृदुं च

स्थापयति । श्रीकृष्णः तदन्तः श्वासं पूरयति, उत निःश्वासं नयति वा !

गौडज्जः नेत्रे निमील्य शृण्वन् सुप्तः ।

वेङ्कटः मध्येरात्रं समाप्य आकाशे यावत् मञ्चस्य पादः दृश्यते तावत् वादयामास । अद्य तस्यापि कापि अविद्यमाना तन्मयता आगता । कालिङ्गगौडस्य गोष्ठे गौडज्जस्य कामनायै वादनं नाम कस्य वा तन्मयता नागच्छेत् ! तस्य वादनसमाप्त्यवसरे गौडज्जस्य शान्ता निद्रा आरूढा । तायव्वा तु तावत्पर्यन्तं कर्णद्वयमपि पूरयित्वा यथा निःसरेत् तावन्तं नादं शृण्वती उपविष्टा । किञ्चित्समयानन्तरं वेङ्कटः एव 'गौडज्जम् उत्थाप्य अन्तः नयाम किम् ?' इति तायव्वाम् अपृच्छत् । मास्तु, तत्रैव शयितो भवतु इतिवत् सा हस्तं चलितवती । 'अहं गृहं गृच्छामि, त्वम् अत्र तिष्ठसि ?' इति पृष्टे तं गन्तुम् इव उक्तवती । गृहस्य पुरतः अङ्गणे भृत्यः निङ्गः सुप्तः आसीत् । तायव्वा तं नोदयित्वा उत्थाप्य, गोष्ठे अट्टस्य समीपे शयितुं संज्ञां कृतवती । सः निद्रितनेत्रः एव उत्थाय स्वकम्बलम् अकर्षयन् गत्वा अट्टसमीपे भूतले स्थापिते शिलातले शयितः ।

नीपतैलदीपः शान्ततया ज्वलति स्म । तायव्वा पुनरपि मृद्दीपपूर्णं तैलं पूरितवती । किन्तु वर्तिकाम् उत्सार्य ज्वालाम् अधिकां नाकरोत् । गौडज्जः शान्ततया शयितः । तायव्वा स्वयं शयितव्यमिति अन्तः गता । वंशिकानादश्रवणावसरे सर्वदा तस्याः पतिस्मरणं भवति स्म । स इव सुष्ठु वंशिकावादकः अन्यः यः कोऽपि नासीत् । सः वादयति चेत् दुश्चेष्टाः गावः अपि मन्दम् आगत्य तं परितः शयिताः भवन्ति स्म । तस्याः पुत्रस्तु वंशिकायाम् ओष्ठलगनमेव नाभ्यसितवान् ।

पञ्चषवारं तत् पार्श्वम् एतत्पार्श्वम् इति लुठनानन्तरम् उत्थाय सा पुनः गोष्ठं गता । मृद्दीपस्य तैलं वीतं सत् अत्यन्तं सूक्ष्मतां गता ज्वाला । किन्तु शान्ततया विद्योतते स्म । तस्याः प्रकाशे गौडज्जस्य मुखं दृष्टम् । इतोऽपि वंशिकागानं श्वृण्वन् तन्मयताम् आपन्नः इति भासयति स्म । अधः शिलास्तरणे शयितः निङ्गः घोरिकां कुर्वन् आसीत् । पुनरपि मृद्दीपे तैलं संस्थाप्य सा अन्तरागत्य शयिता । पञ्चषवारं लुठनानन्तरं निद्रा प्राप्ता ।

## 5

प्रातः रविरुदितश्चेदपि तायव्वा न उत्थिता आसीत् । किन्तु अन्तः आगत्य 'तायव्वे,

तायव्वे' इति नाम उच्चैः अहूय उत्थापितवान् निङ्गः आतङ्केन अवदत् । 'पश्य, आगत्य, गौडज्जः मृतोऽस्ति । रात्रौ शयितः एव मृतः स्यात् ।'

हृदयं भग्नमिव अभवत् तस्याः । तत्रैव शयिता घटिकां यावत् निश्चेष्टा अभवत् । अनन्तरं निङ्गेन उच्चैः आह्वाने कृते मन्दम् उत्थाय गोष्ठं गत्वा पश्यति – धेनूः वृषभांश्च बन्धात् विमोच्य निङ्गः बहिः बद्धवानासीत् । गौडज्जस्तु अट्टे ह्यः रात्रौ इव शयितः आसीत् । तस्य मुखम् इतोऽपि वंशिकावादनं शृण्वत् इव आसीत् । सः कदा मृतः ? स्वयं रात्रौ यदा दृष्टः तदैव मृतः शयितः आसीत् किम् ? निद्रायां प्राणाः गताः किन्तु इति सा न जानाति । मृतः एव न स्यात् । निङ्गः मिथ्या वदेत् – इति सन्देहोऽपि अभवत् । समीपं गत्वा देहं स्पृष्ट्वा अपश्यत् – पाणिपादं शीत सत् घनीभूतम् आसीत् ।

## अष्टमः अध्यायः

### 1

गौडज्जीतिथ्यन्तरम् आगताः सर्वेऽपि बान्धवाः गौडज्जस्य तिथयेऽपि आगताः । किन्तु तदा सर्वेषां निर्वहणाय गौडज्जः आसीत् । अधुना मूकां तायव्वां विहाय आधिपत्यं कुर्वाणः शिशुरपि नासीत् । वेङ्कटरमणः प्रातः सायं विद्यमानोऽपि आर्थिकव्यवहारः इति स्वातन्त्र्येण किमपि कर्तुं पृष्ठतः तिष्ठति स्म । तायव्वा अन्तर्गृहात् एकस्थालीपूर्णानि रूप्यकाणि आनीय तस्य पुरतः स्थापितवती । सः गणयामास । विंशत्यधिकाष्टशतं रूप्यकाणि आसन् । एतावता एव धनेन तिथिः समापनीया । विद्यमानम् एतावत् तिथ्यर्थं व्ययितं चेत् अग्रे कृषिधान्यप्राप्तिपर्यन्तं कुटुम्बनिर्वहणं कथम् ? – इत्येतदपि आलोचितं तेन । किन्तु एतावत् गौरवयुतं जीवनं यापयित्वा जीवितस्य गौडज्जस्य तिथिः कार्पण्य-युततया न विधेया । अष्ट-दश-सहस्रजनानामपि अन्नदानं न कार्यं किम् ? किन्तु देवस्थानस्य निर्माणं, प्रतिष्ठापनं, गौडज्जीतिथिः – इत्येतेषु वीतम् इति सम्प्रति कुसूले रागिधान्यं, व्रीहयो वा न सन्ति ।

परिस्थितिम् अवगन्तारः आप्तेष्टबान्धवाः तेषां तेषां ग्रामात् रागिचूर्णं, तण्डुलान्, गुडं, दालानि च आनीतवन्तः । समन्तात् सर्वत्र ग्रामेषु भोजनाय पटहं वादयित्वा एकादशे दिने महद्रूपेण तिथ्याचरणाय सज्जता अभूत् । 'स तावत् सामान्यः गौडः किम् ? मन्दिरस्य निर्माता' इत्यभिमानः न केवलम् आप्तेष्टेषु, ग्रामस्य इतरेष्वपि उद्गतः आसीत् ।

दशमे दिनस्य मध्याह्ने गृहं समग्रम् आप्तेष्टैः परिपूर्णम् आसीत् । अनन्तरदिने सम्पत्स्यमानाय महासन्तर्पणाय गृहस्य अग्रे विद्यमानस्य शाद्वलस्य अङ्गणे चुल्ली-निर्माणात् आरभ्य बृहत्पात्रस्थालीनां क्षालनपर्यन्तं कर्म संवृत्तम् । तावता कालेन मुखशरीरयोः धूलिमयं किञ्चन कार्यानं तत्रागतम् । जनेषु सर्वेषु विस्मयेन तन्मार्गं

पश्यत्सु ततः कश्चन उन्नतः धूम्रवर्णः स्वामी अवतीर्णः । युतकं प्रावारकं शिरस्त्रं पादत्राणे च धृतवान् सः साक्षात् गौडज्जगृहस्य अन्तः गतः । बन्धुषु येन केनचिदपि सः न परिचितः अभवत् । किन्तु तायव्वा तत्क्षणमेव विज्ञाय हसन्मुखम् अकरोत् । किन्तु सः कः इति मुखेन वक्तुं सा नाशक्नोत् । आगतः एव 'तातः कुत्र अम्ब ?' इत्यपृच्छत् । अधुना सर्वैरपि ज्ञातम्, सः अरुणदेशं गतः काळिङ्गः !

काळिङ्गः कार्यानस्य पश्चाद्भागे विद्यमानां शय्यां पेटिकां च अन्तः प्रापय्य कार्चालकाय धनं दत्तवान् । यानं गतम् । स्वस्य युतकं प्रावारकं शिरस्त्रं पादत्राणे च उन्मोच्य सः अन्तः स्थितं सरेखं पादांशुकं श्वेतयुतकं च धारयित्वा मञ्चस्य उपरि उपविष्टः । तेन सह संलपितुं बन्धूनाम् आसीत् सङ्कोचः, भयं च । तावता वेङ्कटः तत्र आगतः । स एव 'कदा आगतोऽसि भ्रातः ?' इत्यपृच्छत् ।

काळिङ्गेन 'पितामह्याः तिथिः अधुनावधि न सम्पन्ना किम् ?' इति पृष्टे वेङ्कटः संवृत्तं सर्वं विवृतवान् । पितामह्याः तिथेः पञ्चविंशतिः दिनानि गतानि । श्वः भविष्यन्ती तु पितामहस्य तिथिः ।

पुत्रस्य गृहागमनेन तायव्वायाः समाधानम् अभवत् । तम् अन्तः आगन्तव्यमिति संज्ञया अहूय, पात्रे विद्यमानं धनं तस्य पुरतः संस्थाप्य, अङ्गुलिसंज्ञया षट्शतं रूप्यकाणि सन्तीति उक्तवती । तावत् स्वस्य दायित्वम् अवसितमिति तस्याः भावना स्यात् । काळिङ्गः पुनरपि गत्वा मञ्चे शयित्वा विश्रान्तः अभूत् । वेङ्कटः अधः भूतले उपविश्य भाषमाणः एव आसीत् । अर्धघण्टायामेव तायव्वा तप्तम् अन्नं विधाय तौ भोजनाय उत्थाप्य स्थाल्यां परिवेषितवती । पाकः तस्य बहुकटुः स्यात् । पदे पदे जलं पीत्वा मिश्रितम् अन्नम् अर्धे एव परित्यज्य, दधि मिश्रीकृत्य भुक्त्वा उत्थितः ।

तावता वेङ्कटरमणः आगतः । आप्तेष्टबान्धवाः, ग्रामीणाश्च कियतापि उत्साहेन कुर्वन्तः सन्त्यपि तेषाम् आवश्यकसूचनादानं तु तस्य कर्म आसीत् । काळिङ्गस्य दर्शनेन तस्य आश्चर्येण साकं समाधानमपि अभवत् । 'कदा आगतोऽसि ? मया प्रेषिता तन्त्री प्राप्ता वा ?'

'प्राप्ता । अतः एव त्यक्तं त्यक्तमेवेति तथैव आगतोऽस्मि ।'

'एतावन्ति दिनानि कुतः अभूवन् ?'

'तन्त्र्यागमनावसरे अहं ग्रामे नासम् । अहं यत्रासं तत्रागमने विलम्बः अभवत् ।'

'दिष्ट्या अधुना वा आगतः खलु ? इतःपरम् अस्माकं लघु सर्वम्। श्वस्तनदिनस्य कर्मकरणाय सर्वं सज्जमस्ति। एतावन्तः जनाः मिलित्वा प्रत्येकं कुर्वन्तः सन्ति। त्वया किमपि नालोचनीयमस्ति । श्वः शास्त्रविधये कः उपविशेत् इति चिन्तयन्नासम् । अधिकारी त्वमेव आगतोऽसि खलु, निश्चिन्तोऽस्मि ।'

तौ परस्परं बहु भाषमाणौ आस्ताम्। काळिङ्गस्य अमेरिकागमनानन्तरम् अत्र घटितं सर्वं वृत्तम् अस्मिन्नवसरे यावच्छक्यं तावद्दीर्घं न्यरूपयत् वेङ्कटरमणः। देवस्थाननिर्माणात् आरभ्य पितामह्याः पितामहस्य च मरणपर्यन्तं सर्वं व्यवृणोत्। अमेरिकाजीवनविषये यदा पृष्टं तदा अधिकं वक्तुं काळिङ्गस्य उत्साहः नासीत्। अत्र घटितानाम् अवगमने तस्य मनः लग्नम् आसीत्।

'वर्षद्वये आगमिष्यामि इत्युक्तमासीत् त्वया। माकिं चत्वारि वर्षाण्येव अतीतानि खलु, कुतः ?' इति पृष्टे 'प्रथमतः कृषिविद्या अधीता। तत्समाप्त्यनन्तरम् अन्यत् फेलोशिप् प्राप्तम्, अनिमल् हस्बन्ड्रि नाम पशूनां रक्षा, तेषां रोगाः, तैः प्राप्यं प्रयोजनम् – एतत् पठनीयमिति। एकस्मिन् वर्षे अधीत्य तत्र डिप्लोमापदवीं प्राप्तवान्। एतावत्सु दिनेषु एकस्मिन् क्षेत्रे प्रायोगिकप्रशिक्षणं प्राप्नुवन्नासम्' इति काळिङ्गः अवदत्।

वेङ्कटरमणः सायङ्कालानन्तरम् अग्रहारं प्रतिगतः।

## 2

अनन्तरदिने प्रातः सप्तवादनात् प्रागेव वेङ्कटरमणः दर्भगुच्छसहितः आगतः। तावता गृहं सम्मार्ज्य गोमयेन लिप्तमासीत्। अन्तः अङ्गणे नवग्रहधान्यानि, कदलीदलं, चूतपर्णानि, दानाय वस्त्रं, कलशः, स्थाली इत्यादीनि कतिपयपात्राणि सिद्धान्यासन्। तायव्या दोग्ध्रीं काञ्चन पुण्यकोटिगां देहमार्जनेन गोदानाय वत्सेन साकं द्वारसमीपे बद्धवती।

वेङ्कटरमणः बृहत्पात्रे क्षीरं दधि घृतं गोमूत्रं गोमयम् – इत्येतैः पञ्चगव्यस्य सिद्धतां विधाय, तत् दर्भैः आलोड्य स्थापितवान्। तावता कालेन विभिन्नेभ्यः ग्रामेभ्यः सप्ताष्टाः जनाः ब्राह्मणाः आगत्य सङ्गताः। आगतानां बान्धवेष्टानां सर्वेषां स्नानम् अभवत्। आदौ पञ्चगव्यप्राशनं समाप्य नवग्रहधान्यदानानन्तरं सर्वेऽपि गत्वा शवनिक्षेपस्थले

क्षीरघृतयोः क्षारणं कुर्वन्ति इत्येषा पद्धतिरासीत्। वेङ्कटरमणः कदलीपर्णम् आस्तीर्य धान्यानि तेषां स्थाने स्थापयन्नासीत्। तदा काळिङ्गः स्नानं कृत्वा आगतः। तत्र उपविश्य नवग्रहधान्यानि पर्णस्य उपरि स्थापयन्तं वेङ्कटं वेङ्कटरमणः अपृच्छत् – 'क्षौरिकस्य आनयनं विस्मृतं किम् ?'

'आहूत एव सः। आगत्य वेदिकायां स्तम्भसमीपे उपविष्टोऽस्ति।'

'तर्हि काळिङ्गगौड, त्वं गत्वा पूर्णतया शिरोमुण्डनं सम्पाद्य आगच्छ' इति पुरोहितेन वेङ्कटरमणेन उक्ते काळिङ्गः न प्रत्युत्तरम् उवाच। पञ्चनिमेषानन्तरं वेङ्कटरमणेन पुनरपि उक्ते सः 'केशमुण्डनं विना कर्म न भवेत् किम् ?' इत्यपृच्छत्। तत्र सङ्गताः सर्वेऽपि ब्राह्मणाः 'अस्ति किम् ? अस्ति किम् ? शिरोमुण्डनानन्तरं खलु कर्त्रा श्राद्धकर्म कर्तव्यम्' इत्यवदन्।

अवशिष्टेषु बान्धवेषु ज्येष्ठः गौडः 'तत् कथं भवेत् भ्रातः ? शिरः मुण्डयितव्यमेव' इति ध्वनिम् अयोजयत्।

वेङ्कटरमणः 'मम पितरि मृते मया शिरोमुण्डनं विहितं त्वम् अपश्यः खलु ? तथैव एतत्। त्वं विदेशं गत्वा आगतोऽसि। पूर्णतया मुण्डनं मास्तु चेत् मास्तु। अग्रभागे एतावदायतं धनुरिव मुण्डनं विधेहि। अनन्तरं तस्य वर्धनपर्यन्तं शिरस्त्रं धर्तुं शक्नोषि।' काळिङ्गः क्षणकालम् आलोचितवान्। अनन्तरम् अवदत् – 'मम तत्र विश्वासः नास्ति। यूयम् अन्यत् सर्वं कर्म कारयत।'

'शिरोमुण्डनं विना अन्यत् कर्म कथं शक्येत ?' इति इतरे ब्राह्मणाः अवदन्। बान्धवेषु काचन ज्येष्ठा वृद्धा 'वत्स, कीदृशी बुद्धिरागता एवं वक्तुम् ?' इति अपृच्छदेव। काळिङ्गस्य मुखं मलीमसम् अभवत्। तथापि सः तन्नाङ्गीकृतवान्।

अन्ते वेङ्कटः 'जोयिसमहोदय, मम शिरोमुण्डनं युज्यते किम् ?' इति अपृच्छत्। वेङ्कटरमणजोयिसः 'तथैव भवतु। त्वं गौडज्जस्य पुत्रसमानः। त्वमेव कारय। किन्तु नवग्रहाणां पुरतः उपविश्य अन्यत् कर्म अपि त्वमेव कुर्याः। भवतु किं काळिङ्गगौड ?' इति पृष्टे काळिङ्गः 'अस्तु' इति अवदत्। समस्या तु परिहृता। किन्तु न कस्यापि सन्तोषः अभवत्। तायव्वायाः अपि अतीव दुःखम् अभवत्। तत् वक्तुं सा न जानाति। अन्यच्च तावतां जनानां पुरतः पुत्रं सा कथं वा वक्तुं शक्नुयात् ?

वेङ्कटः पूर्णतया शिरोमुण्डनं प्राप्य जानुपर्यन्तलम्बितया श्वेतां नूतनां वेष्टीं परिधाय दक्षिणतर्जन्यां जोयिसकृतं दर्भपवित्रं धृत्वा, उपविश्य, तस्य मन्त्रवचनानुसारेण गोमयस्य

धूर्वायाश्च गणपतेः, कलशस्य, नवग्रहाणां च पूजाम् अकरोत्। सहिततया पञ्चगव्य-पूजापि निर्व्यूढा। तत् काळिङ्गः, तायव्वा च प्रथमतः स्वीकुर्याताम्। वेङ्कटः यद्यपि कर्तृस्थाने उपविश्य कर्म करोति तथापि सूतकात्ययः न तस्य। अतः वेङ्कटरमणः काळिङ्गम् उच्चैः आह्वयत्। तेन आगत्य हस्ते प्रसारिते चूतपर्णमेकम् उद्धरणमिव कृत्वा एकवारं पञ्चगव्यं प्रपूर्य, पुनरपि पूरयितुं प्रवृत्ते काळिङ्गः 'न, एकवारमेव पर्याप्तं तावत्' इत्यवदत्। अनन्तरं स्तम्भेन अन्तरितः तत् पातुं प्रयत्य, किन्तु तत्रत्येन गोमय-गोमूत्रगन्धेन असह्यताम् अनुभवन् स्तम्भे तत् मार्जितवान्। अन्यैः न दृष्टमपि, वेङ्कटरमणेन तु अपाङ्गेन तत् दृष्टमेव। स्तम्भसमीपे स्थिता तायव्वा अपि ज्ञातवती।

अनन्तरं वेङ्कटरमणजोयिसः तायव्वाम् आहूतवान्। सा गत्वा नता दक्षिणहस्तं वामहस्तस्य उपरि संस्थाप्य प्रसारिवती। त्रिवारं प्रपूर्य स्थापितं पञ्चगव्यं चुलुकपूर्णम् अभवत्। भक्त्या नेत्रे निमील्य तत्रैव तत्पानानन्तरं स्वशिरसि सम्मार्ज्य प्रदक्षिणं विधाय नवग्रहान् अनमत्। अनन्तरम् अन्ये बान्धवेष्टाः, अन्ये च ग्रामीणाः स्त्रियः बालकाश्च स्व्यकुर्वन्।

तदनु कतिपयमन्त्रतन्त्रानुष्ठानानन्तरं तत्र सम्मिलितेभ्यः ब्राह्मणेभ्यः दानदक्षिणाः दत्ताः। तायव्वा गां तु वेङ्कटरमणाय दापितवती। तावता अग्रहारात् वेङ्कटरमणस्य माता, पत्नी एकवर्षीयया पुत्र्या साकम् आगते। आगतेभ्यः ब्राह्मणेभ्यः पाककरणं तयोः कार्यमासीत्। सुब्बम्मा काळिङ्गाय अन्नं परिवेष्य पाठितवती आसीत्। 'कुशली खलु वत्स ?' इति तया उक्ते काळिङ्गः तां कराभ्याम् अभिवन्द्य सौजन्येन संलापितवान्। वेङ्कटरमणस्य पत्नीं मीनाक्षीमपि कराभ्यां नमस्कृत्य कुशलं विचारितवान्।

समाधौ क्षीरघृतक्षरणानन्तरं बान्धवाः सर्वे पुण्यकोटिदेवस्थानं गताः। तावता कालेन वेङ्कटरमणः तत्र गत्वा कल्याण्यां स्नात्वा विशेषपूजाम् अकरोत्। तत्र आगतेषु एकैकोऽपि तदा तदा मन्दिरघण्टां नादयन्तीति तस्याः नादः समन्तात् ग्रामेषु सर्वत्र प्रपूर्य प्रतिध्वनति स्म।

सायङ्काले भोजनाय असंख्याः जनाः सम्मिलिताः। मन्दिरनिर्मातुः गौडस्य तिथिरिति कारणेन एतैः अनुक्तेभ्यः अपि ग्रामेभ्यः जनाः आगत्य पूर्णाः। सर्वदायित्वधारिणः वेङ्कटस्य ईषत् भयं जातम्। किन्तु तत्रैव अवस्थितः वेङ्कटरमणः तस्मै धैर्यम् अवदत्। 'देवस्य समाराधने यावदपि अन्नम् अपर्याप्तम् इति न भवति।

काळिङ्गज्जस्य तिथिः नाम देवकार्यम् इव भवति । त्वं किमपि भयं न वह ।'

वस्तुतः सर्वेषां पर्याप्तिं प्राप्य सारः चूर्णपिण्डं पायसम् अन्नं च इतोऽपि अवशिष्टानि आसन् । अन्ते अन्ते ताम्बूलदलानि अपर्याप्तानि इति यदा अभासत तथा प्रत्येकं जनाय कवलिकां विहाय षट् सप्त वा दलानि प्रदाय पर्याप्तता नीता ।

### 3

पूर्वरात्रौ शयनं विलम्बेनाभवदिति काळिङ्गः विलम्बेन प्रातरुत्थितः । तिथये आगताः बान्धवाः भोजनानन्तरम् आपृच्छनोपचारं विना स्वयमेव गच्छन्ति इत्येतां पद्धतिम् अनुसृत्य सर्वेऽपि ह्यः रात्रावेव गताः आसन् । गृहे मातापुत्रौ द्वावेव अवशिष्टौ । काळिङ्गेन त्वरया कानिचन पत्राणि लेख्यानि आसन् । इदानीं नूतनतया अग्रहारे पत्रालयः प्राप्तः इति ज्ञात्वा स युतकं धृत्वा तत्र गतः । किन्तु तत्र लघुपत्रालये विदेशप्रेष्याणि पत्राणि नासन् । ततः वेङ्कटरमणस्य गृहगमनावसरे सः तदा एव देवस्थाने पूजां समाप्य आगतः गृहे उपविश्य आङ्ग्लपत्रिकां पठन् आसीत् । तत् दृष्ट्वा काळिङ्गः अपृच्छत् – 'किमेतत्, भवानपि आङ्ग्लपत्रिकां पठति किम् ?'

'अस्माकं शालाम् आगच्छति । वर्षद्वयात् पठन्नस्मि । सम्यक् अर्थबोधः भवति । आगच्छ, उपविश ।'

अग्रवेदिकायां काळिङ्गः उपविष्टः । सुब्बम्मा उप्पुमाखाद्यं विधाय तस्मै अदात् । तस्य आवश्यकानि विदेशीयप्रेष्यपत्राणि पत्रालयाधिकारिणम् उक्त्वा श्वः आनाय्य स्थापयामीति वेङ्कटरमणः अवदत् ।

अनन्तरं तौ कानिचन व्यवहारस्य वचनानि अवदताम् । काळिङ्गः अपृच्छत् – 'माता मां गृहे केवलं षट्शतं रूप्यकाणि सन्तीति अवदत् । गृहम् एतावन्तः बान्धवेष्टजनाः आगत्य पूर्णाः । कापि न्यूनाधिकता आभवदिति वदसि किम् ?'

'छे, छे, तथा किमपि नाभूत् । गौडज्जस्य मरणावसरे विंशत्यधिकाष्टशतं रूप्यकाणि आसन् । ह्यस्तनतिथये बान्धवाः एव धानधान्यानि तत्तेषां ग्रामतः संवाह्य, आगत्य कर्म अकुर्वन् ।'

'पितामहस्य हस्ते कियत् धनम् आसीदिति अहं कदापि न ज्ञातवान् । किन्तु एतावन्ति

क्षेत्राणि, गोष्ठं यत्र सन्ति तस्मिन् गृहे केवलं विंशत्युत्तराष्टशतं रूप्यकाणि अवशिष्टानि इति चेत् कथं स्यात् ?'

'कालिङ्ग, तव यस्य कस्यापि विषये सन्देहोऽस्ति किम् ? साक्षात् वद । त्वमपि गृहे नासीः । पितामहस्य मरणानन्तरं मया दिने द्विवारं गृहं गत्वा तव मात्रे समाधानम् उक्त्वा 'एवं न, एवं खलु' इति बोधनं कृतमस्ति । तव गृहस्य एकं नाणकमपि चोरयित्वा, तिरोधाय उपभुक्तवान् अहं चेत् मदीयः वंशः न अवशिष्येत ।'

'वेङ्कटरमण, अन्यथा मा भावय । अहं त्वयि न सन्देहं वहामि । तव पितुः गुणं तव गुणं सर्वमपि जानामि । सत्यं वदामि । गृहसम्बन्धिविषयाः मया अधुना ज्ञेयाः भवेयुः । मम माता वक्तुं न शक्नोति । एतन्मध्ये किं किं संवृत्तमिति त्वां विना कः मां बोधयेत् ?'

वेङ्कटरमणः व्यवहारे संवृत्तम् एकैकमपि अंशं तस्मै अवदत् । तस्य गमनानन्तरं देवस्थानं निर्माय विग्रहप्रतिष्ठापनाय पञ्चदशसहस्राणां व्ययः अभवत् । 'गौडज्जः कदापि एतं व्ययं न मुखतः उक्तवानेव । धर्मार्थं जातः व्ययः न वक्तव्यः इति शास्त्रमेव अस्ति । किन्तु सर्वमपि दृष्टवतः मम तस्य ऊहः अस्ति' इत्युक्त्वा अनन्तरं होन्नस्य विवाहस्य, अनन्तरं प्राप्तायाः गौडज्जीतिथेः व्ययमपि अवदत् । 'गृहे स्थितं सुवर्णं तथैव अस्ति । किन्तु तव गृहे आरम्भादेव नाधिकं स्वर्णमासीत् । 'गोप्याः कुतः स्वर्णशृङ्खला ?' इति गौडज्जः एव वदति स्म । तथापि गौडज्ज्याः नागरं, सेवन्तिकापुष्पं, अङ्गिका, गुटिकामाला इति सर्वम् अस्ति । तव मातुः अपि अस्ति । तव पित्रा धार्यमाणं स्वर्णधनपदकं हस्ताङ्गदम् अपि सन्ति । गौडज्जस्य हस्ते यत् द्वादशगुञ्जाकेयूरम् आसीत्, यच्च सः अन्ते अन्ते न धरति स्म तदपि गृहे एव अस्ति ।'

देवस्थाननिर्माणानन्तरं गौडज्जः दिनपूजां स्वात्मने प्रदाय, तदर्थं दत्तिलेखनविवरणमपि वेङ्कटरमणः न्यवेदयत् । अनन्तरं कालिङ्गः अपृच्छत् – 'अस्माकं गोचरभूमेः उपरि मार्गः गतः खलु ? तदर्थं सर्वकारेण काम्पन्सेशन् किमपि न दीयते किम् ?'

'देयमेव । दीयते इति मया श्रुतम् । त्वं प्रयतस्व । कस्मिंश्चित् दिने अमल्दारकार्यालयम् उत जनपदाधिकारिकार्यालयं गत्वा आगच्छाम ।'

सार्धैकादशवादनपर्यन्तं तौ भाषमाणौ आस्ताम् । वेङ्कटरमणेन शाला गन्तव्या आसीत् । कालिङ्गः ग्रामं गतः । गृहे वेङ्कटः कुतश्चित् ह्यस्तनकार्याय आनीतानि पात्रभाजनानि क्षालयित्वा प्रेषणे मग्नः आसीत् । तायव्वा पुत्राय अन्नम् सारं च विधाय स्थापितवती । 'इतःपरम् साराय तावत् कटु न मिश्रयतु' इति ताम् उक्त्वा सः भोजनम्

अकरोत् । सा द्वित्रवारं हस्तसंज्ञया कतिपयप्रश्नान् अपृच्छत् । किन्तु ते न ज्ञाताः तेन ।

तस्याः हस्तात् कुञ्चिकाम् आदाय सः अन्तः तमोमयप्रकोष्ठे काष्ठपेटिकायां स्थापितानि भूसम्बन्धिकागदपत्राणि बहिरादाय सर्वाणि सावकाशं पठितवान् । इतः पञ्चविंशतेः षड्विंशतेः वा वर्षेभ्यः पूर्वं स्वगोचरः केदाररूपेण परिवर्तित इति विषयः सर्वकारेण उल्लिखितः इति, तदनुसारं करः अपि निर्णीतः इति च पत्रं प्राप्तम् । तत् पृथक्तया स्वचर्मपेटिकायां स्थापितवान् ।

अनन्तरदिने प्रातः उत्थाय गोचरभूमिं गत्वा मध्ये कृतं यानमार्गम् अवलोकितवान् । मार्गः शाद्वलमध्ये एव लम्बितः गतः आसीत् । श्वेतशिलाखण्डान् यन्त्रज्ञद्वारा संस्थाप्य, उपरि ग्रावेल् संयोज्य पुनः समतलं कृतमासीत् । मार्गस्य उभयोः पार्श्वयोः वटसस्यानि आरोपयितुम् अधुना खातं कुर्वन्तः सन्ति । दक्षिणपार्श्वे मैल् फर्लाङ्ग्शिलाः स्थापिताः आसन् । तदनुसारं तालूककेन्द्रात् षोडशमैल् दूरं भवति । युतकं पादरक्षां शिरस्त्रं च धृत्वा आगतम् एतं दृष्ट्वा शाखारोपणाय गर्तखनननिरताः कार्यं स्थगयित्वा अञ्जलिना नमस्कृतवन्तः । तत्रैव एकस्मिन् पार्श्वे स्थितः कर्मनिरीक्षकः धावनेन आगत्य 'नमस्ते श्रीमन्' इत्यवदत् । इतः पञ्चदशदिनेषु नाम प्रथमदिनाङ्के मार्गे यानसेवा प्रारप्स्यते इति तन्मुखात् ज्ञातम् ।

'भवतः हस्ते मापकपट्टी अस्ति किम् ?' काळिङ्गः अपृच्छत् ।

'आम्, अस्ति श्रीमन् ।'

काळिङ्गः तस्य साह्येन मार्गस्य आयतम् मापितवान् । उभयोः पार्श्वयोः स्थापितानि वटसस्यानि अग्रे बृहद्वृक्षाः यदा भविष्यन्ति तदा तैः आक्रम्यमाणस्य प्रदेशस्य आयतमपि गणितं तेन । स्वगोमाले गतस्य यानमार्गस्य आयतं यथावत् मापयित्वा निरीक्षकात् एकं लघुपत्रं, तस्य कर्णे लग्नाम् अङ्कनीं च परिगृह्य अङ्कनं कृतवान् । ततः प्रस्थाय गिरिभुजम् आरुह्य देवस्थानं गतः । गिरेः आरोहणावसरे देवालयस्य बृहद्घण्टा गिरेः आसमन्तात् अनुरणन्ती नादम् अकरोत् ।

तस्य गमनावसरे देवालयस्य द्वारम् उद्घाटितम् आसीत् । वेङ्कटरमणः द्वारमुद्घाट्य कणगिले–होनावरकादिसस्येषु पुत्रपुष्पाणि अवचिन्वन् आसीत् । एतस्य दर्शनेन तस्य सन्तोषः अभवत् । 'एहि, पूजासमये एव आगतोऽसि' इत्यवदत् । सः जलम् आनेतुम् अवतीर्य कल्याणीगमनावसरे काळिङ्गोऽपि गतः । विशालायाः कल्याण्याः पादोनभागः अगाधः जलेन पूर्णः आसीत् । जलं लघु शुभ्रं च आसीत् । कल्याण्याः सोपानानि

दृढान्यासन् । कालिङ्गः किमपि आलोचयन्नासीत् । वेङ्कटरमणः देवस्थानं गत्वा गन्धपुष्पधूपदीपनैवेद्यसहितायां पूजायां निरतः अभवत् ।

पूजावसानसमये कालिङ्गः देवस्थानम् आगतः । तावता कालेन वेङ्कटरमणः नीराजनाय वर्तिकां दीपयन्नासीत् । तस्य वामहस्ते लघुघण्टा आसीत् । कालिङ्गं पश्यन् सः 'समये आगतोऽसि । अहं नीराजनं करिष्यामि । बहिः अङ्गणे विद्यमानां घण्टां वादय त्वम्' इत्यवदत् । घण्टा बृहद्गात्रा । तस्याः जिह्वायां बद्धां रज्जुं गृहीत्वा अग्रे सन्ताड्य वादनं किञ्चिद्विनोदानुभवं जनयति । वेङ्कटरमणेन स्थगनोपदेशं यावत् कालिङ्गः अतिबलेन वादितवान् । अन्ते तेन वितीर्णं नीराजनम् आदाय पुष्पं हस्ते गृहीतवान् । वेङ्कटरमणः अन्तर्गृहात् एकं पात्रम् आनीय 'प्रसादः स्वीक्रियताम् । बहिः गत्वा एकं पलाशपर्णम् अवचित्य आनय' इत्यवदत् ।

'किं तत् ?'

'मुद्गमिश्रितं कृशरान्नं सूपः नारिकेलचूर्णं गुडश्च ।'

कालिङ्गः बहिः गत्वा समीपे एव स्थितात् पलाशसस्यात् एकं सुष्ठु पत्रम् अवचित्य, तत् कल्याणीजलेन प्राक्षाल्य करवस्त्रेण सम्मार्ज्य आनीतवान् । वेङ्कटरमणः प्रथमं तत् पूर्णं कृशरान्नं वितीर्य तस्य उपरि नारिकेलचूर्णं गुडं च व्यावितवान् । केवलं कृशरान्नमेव मुखे न्यस्यन् कालिङ्गः अपृच्छत् – 'एतस्मिन् मरीचः योजितः खलु ?'

'आम् ।'

'पश्य, बहु स्वादिष्टम् अस्ति । पश्चिमदेशे वयमिव न मरीचिकां खादन्ति । प्रत्युत मरीचं खादन्ति । मरीचिका न सौख्यकरी । मम मात्रा ह्यः वितीर्णं सारं खादितुं न शक्तवानेव । इतःपरं मरीचं संयोज्य करणीयमिति वदेयम् ।'

'तद्देशे भोजनं कृत्वा अभ्यस्तवतः तव अत्र अभिरुचिं समानेतुं द्वित्राः मासाः आवश्यकाः ।'

तस्य कृशरान्नभक्षणानन्तरं वेङ्कटरमणः इतोऽपि परिवेषितवान् ।

'प्रत्यहम् एवमेव विधाय आनयसि किम् ?' कालिङ्गः अपृच्छत् ।

'प्रतिदिनं कृशरान्नम् इत्येव न भवति । चणकाः स्युः, आम्लान्नं, दध्यन्नं वा भवेत् । गृहे कोऽपि अन्तरायश्चेत् तद्दिने केवलं नारिकेलफलम् आनयामि ।'

'प्रतिदिनम् आनीतं नैवेद्यं किं करोषि ?'

सामान्यतः पूजासमये यः कोऽपि फलसमर्पणार्थं प्रदक्षिणार्थं वा आगच्छति । तादृशाय दीयते । नो चेत् पक्षिणां कृते इति पुरतः वृषभसमीपे किञ्चित् संस्थाप्य, अहमपि ग्रासमितं प्रसादं स्वीकृत्य शेषं गृहं नयामि ।'

अनन्तरं वेङ्कटरमणः देवस्थानस्य द्वारं पिधाय गृहं गतः । काळिङ्गः कल्याण्याः वामपार्श्वे अवतरणेन लभ्ये गिरिसानौ अटित्वा भूतलं परिवीक्षते स्म । तस्य गृहगमनावसरे मध्याह्नः अभवत् ।

## 4

काळिङ्गः सायङ्काले अग्रहारं गत्वा शानुभोगात् काळेनपल्ल्याः गिरेः सानुप्रदेशानां च रेखाचित्रम् आदाय परीक्षितवान् । अन्येद्युः शकटम् अधिरुह्य तालूकुकेन्द्रं गत्वा तत्रत्येन लोकयानेन जिल्लामुख्यस्थलं गतः । मध्याह्ने एकवादनसमये उपायुक्तस्य कार्यालयं गतः । तेन बहिः तिष्ठता प्रेषिते सन्दर्शनपत्रे के. काळिङ्गः बि.एस्.सि., एम्.एस् (कृषिः) औहैवो डि.ए.एच्. (यु.एस्.ए.) इत्येतत् दृष्ट्वा सः तस्मै तत्क्षणमेव सन्दर्शनम् अदात् । काळिङ्गः पूर्णतया सूट्वस्त्रं धृत्वा, कण्ठपट्टिकां लगयित्वा शिरसि शिरस्त्रं धृतवान् आसीत्।

औपचारिकतया किञ्चित् सम्भाष्य, स्वामिना साकं धूमवर्तिकाम् अपि संसेव्य अनन्तरं काळिङ्गः स्वहस्ते विद्यमानं रेखाचित्रं तस्य उत्पीठिकायाः उपरि विमोच्य, प्रासार्य तस्मै सविस्तरं वदन् 'एतत् वस्तुतः कृषियोग्यं क्षेत्रम् । अहं यदा विदेशे आसम् तदा प्रबन्धकाभावात् अस्मत्पितामहः फलम् अनासाद्य तथैव त्यक्तवान् । तत् गतेभ्यः पञ्चविंशतिवर्षेभ्यः क्षेत्रम् आसीत् इत्यत्र करप्राप्तिपत्राणि एव साक्षिभूतानि । कृषियोग्यायां भूमौ मध्ये यानमार्गः गतः इति मम महती हानिः जाता ।

'कियती हानिः ऊह्यते ?'

'अग्रे मार्गस्य उभयोः पार्श्वयोः आक्रान्तं स्थलमपि संयोज्य गण्यते चेत् षड्विंशति-एकरेमिता भूमिः नष्टा । केवलं न भूमिः गणनीया । एकत्र कृषियोग्या भूमिः अधुना द्विधा विभागं प्राप्ता । सम्प्रति मध्ये सार्वजनिकमार्गः प्राप्तः इति उभयपार्श्वयोः कृषेः सुरक्षितता अपि विनष्टा ।'

'तथा चेत् भवता अपेक्ष्यमाणः परिहारः कियान् ?'

'अहं कृषिकः, भूपुत्रः । परिहारः इति धनदानमात्रेण कापि सार्थकता न स्यात् । प्रत्युत सर्वकरेण भूमिः दीयते चेत् कृष्या फलं प्राप्नोमि । ममापि हानिपरिहारः, देशस्यापि आहारोत्पत्तिः शक्या ।'

एतद्वचनं श्रुत्वा उपायुक्तस्य महान् सन्तोषः अभूत् । कालिङ्गः अवदत् – 'वैज्ञानिक–रीत्या कृषिव्यवसायक्रमः अध्येतव्यः इत्यनेन कारणेन एव अहम् अमेरिकां गतः । चतुर्वर्षमितेन ममाध्ययनेन न केवलं कृषिव्यवसायः, पशुसङ्गोपनम् अपि अधीत्य आगतः । किन्तु प्रत्यागमनावसरे कृषिभूमिरेव विभक्ता इति नष्टम् अभवत् । किं करवाणि ?'

'भवादृशाः विद्यावन्तः कृषिव्यवसायं कुर्वन्तीति देशस्य शुभलक्षणम् । अस्तु, दातुं भवताम् अनुकूला भूमिः अन्या विद्यते किम् ?'

भूरेखाचित्रं प्रदर्शयन् कालिङ्गः अवदत् – 'पश्यन्तु, अस्यां गिरिसानौ दृश्यते खलु, एतत् मम केदारस्य पश्चिमभागे लग्नम् । न केवलं सा व्यवसायस्यापि अनुकूला भूमिः । एतस्य विस्तीर्णता सामान्यतः सप्तति–एकरेमिता भवति । एषः समग्रः भूविस्तरः दीयते चेत् आनुकूल्याय भवति । तथापि तस्य अभिवृद्धिकरणार्थं मया विंशतिसहस्रं रूप्यकाणि विनियोक्तव्यानि भवेयुः ।'

सा भूमिः दाप्यते इति तस्य निवेदनम् आवेदनरूपेण लिखित्वा टङ्कणं कृत्वापि देयम् इति च उक्त्वा उपायुक्तः अवदत् – 'पश्यतु, कृषिभूम्यभिवृद्ध्यर्थम् अधुना सर्वकारः नानविधस्य ऋणस्य व्यवस्थाम् अकरोत् । वृद्धिरपि न्यूना । एतत्क्षेत्रस्य प्राप्त्यनन्तरं ऋणप्राप्त्यै भवता आवेदनम् अर्पणीयम् । सुखेन लभ्यते ।'

अनन्तरं सः अमेरिकाजीवनविधानादि विचारितवान् । तस्य अनुजेन केनचित् तृतीये मासे अमेरिकादेशः गन्तव्यः आसीत् । तत्र अशनवसनादिविषये केचन प्रश्नाः पृष्टाः । सोऽपि ओहैवोविश्वविद्यालयं गमिष्यति इति ।

'भवद्भिः चिन्तनीयं किमपि नास्ति । तत्र मम वयस्याः पर्याप्ताः सन्ति । मम सम्बन्धिनः एव सन्ति । अहं पूर्वमेव तेभ्यः पत्रं प्रेषयामि । भवताम् अनुजाय सर्वम् आनुकूल्यं विधास्यन्ति' इति कालिङ्गेन आश्वस्तम् ।

'भवान् क्षेत्रप्राप्त्यर्थम् अद्यैव आवेदनं ददातु । अपेक्ष्यते चेत् तदहम् लेखयित्वा

ददामि। अनन्तरं तत् अमल्दाराय शेकदाराय च स्थलपरीक्षणाय गत्वा, तयोः प्रणिगदनप्राप्त्यनन्तरं मया आदेशः दास्यते। एकस्मिन् मासे सर्वं भवति' इति उपायुक्तः आश्वासनं दत्तवान्।

## 5

काळिङ्गः स्वगोष्ठस्य धेनूनां विषये विचारणं कृतवान्। आहत्य षष्टिः धेनवः आसन्। किन्तु दोग्ध्रीधेनवः द्वादश एव। दश गर्भिण्यः। इतः त्रयोदश वृषभसङ्गमनेन गर्भं धारयितुं शक्नुवन्ति। अवशिष्टाः त्रयोविंशतिः धेनवः वत्सान् प्रसूय, दुग्धमपि दत्त्वा वार्धकं प्राप्तवत्यः।

विद्यमानेषु वृषभेषु वस्तुतः श्रमशीलाः अष्टयुगलानि एव। इतोऽपि प्रौढतां न गताः त्रयोदश एकाकिनः चतुर्दन्तिनः आसन्। शिष्टाः द्वात्रिंशत् तथा वृद्धत्वं गताः यत् इतःपरं श्रमं कर्तुं सर्वथा न शक्नुयुः। वृद्धाः एताः त्रयोविंशतिः धेनवः, द्वात्रिंशत् वृषभाः इति पञ्चपञ्चाशता गोभिः निष्प्रयोजकतया गृहे खाद्यमानानां तृणानां परिमाणं कियत् स्यात्? तेषां निरीक्षणाय सम्पद्यमानं भृत्यकर्म कियत्? अग्रिमदिने तालूकुकेन्द्रं गतः काळिङ्गः कञ्चन मुसलमानगोवणिजम् आमन्त्र्य पञ्चपञ्चाशतमपि गाः प्रत्येकं पञ्चदश रूप्यकाणि स्वीकृत्य विक्रीतवान्।

गोविक्रयः तस्य कुले न नूतनोपक्रमः। गौडतातस्य कालादपि, ततोऽपि पूर्वजाः अपि धेनुं वृषभं बलीवर्दं च विक्रीणते स्म। वाटिकासु तुषारयवान् आरोप्य पुष्टतया प्रवृद्धान् मृदुयवान् बालवृषान् भक्षयित्वा तेषां शरीरं पुष्टं कृत्वा अनन्तरं तेषां गोयात्रोत्सवे विक्रयणं तेषां पद्धतिः आसीत्। दोग्ध्रीं धेनुमपि समुचितमूल्येन विक्रीणते। किन्तु अतीतवयसां धेनूनां वृषभाणां वा विक्रयणं तस्मिन् ग्रामे यः कोऽपि न करोति स्म। परञ्च अकर्मण्याम् अदोग्ध्रीं वा गां कोऽपि किमर्थं वा क्रीणीयात्? प्राप्तवयसि कर्मणे उपयोज्य अतः पयःपायी एव ताः जराजीर्णाः पालयेत्। जन्मदायिनः पालकांश्च मातापितॄन् जरदवस्थायां यथा पालयन्ति तथा पालयेत्। किन्तु अधुनातनदिनेषु केषुचित् ग्रामेषु जरद्धेनूः मुसलमानेभ्यः विक्रेतुम् आरब्धवन्तः। क्रेतारः तान् संहृत्य मासचर्माणि विक्रीय लाभं प्राप्नुवन्ति स्म।

काळिङ्गः पञ्चपञ्चाशतं गाः एकस्मिन् दिने एव यावत् दत्तवान् तत्तु किमपि न

ज्ञातं तायव्वया। किन्तु सायं गोष्ठस्य अर्धभागः यदा रिक्तः आसीत् तदा तस्याः संशयः अभवत्। कुतः ? इति संज्ञया पुत्रं पृष्टवती। सः तया एव संज्ञया 'किमपि नाभूत्, त्वम् अन्तः गच्छ' इत्यवदत्। तायव्वा न सोढवती। संज्ञया एव किमपि किमपि अवदत्। किन्तु काळिङ्गः न भाषितवान्। सा न तूर्णी स्थिता। साक्षात् वेङ्कटस्य गृहं गत्वा संज्ञाम् अकरोत्। वेङ्कटेन सर्वं ज्ञातम्। किञ्च मुसल्मानाः गौडज्जस्य गोष्ठात् एकं बृहद्यूथमेव सञ्चोद्य गताः इति सः मध्याह्ने एव स्वगृहस्य बालकात् श्रुतवानासीत्।

सम्प्रति वेङ्कटः काळिङ्गगृहम् आगत्य अपृच्छत् – 'भ्रातः, एतत् किं संवृत्तम् ? कोऽपि वधकाराय गां ददाति किम् ?'

'सः वधकारः इति कथं त्वं वदसि ?'

'जरद्धेनूः वधकं विना अन्यः को वा नयेत् ?'

काळिङ्गः विषयम् अनवगतवान् इति न। किन्तु एतं विषयम् अन्यगृहवासिनः आगत्य एवं पृच्छेयुरिति तेन न निरीक्षितम्। किञ्च स्वमाता एवंरीत्या गत्वा अन्यान् आनीय न्यायं पृच्छतीति तस्य कोपोऽभवत्। किन्तु कोपम् अप्रदर्शयता तेन उक्तम् – 'अधुना गच्छतु नाम, तत् परित्यजतु।'

'गच्छतु इत्युक्ते कथं भवति' वेङ्कटेन वादः कृतः। 'तेन दीयमानानां त्रिचतुर-नाणकानां कृते गोष्ठे स्थिताः गावः वधकाय दीयन्ते किम् ? गौडज्जः विद्येत चेत् तूर्णीं तिष्ठेत् किम् ?'

'केवलं तस्य मूल्यं न मुख्यम्। प्रत्यहं तैः विना श्रमं खाद्यमानानां तृणानां मूल्यं कियत् ?'

वेङ्कटः एकं क्षणम् उत्तरं न ज्ञातवान्। अदोग्ध्री धेनुः, उतः जरन्ती धेनुः स्यात्, तया भुज्यमानानां तृणानां गणनं न कदापि विहितम्। गृहे कः कियत् भोजनं कुर्यात् इति को वा गणनं कुर्यात् ? तेन उक्तम् – 'त्वया पृष्टं सुष्ठु जातम्। तव माता इतःपरं वृद्धा भविष्यति। इतः कति दिनानि इत्युक्ते सा कुट्टनमपि कर्तुं न शक्नोति। तया भुज्यमानाः अन्नग्रासाः कियन्तः इति गण्यते किम् ?'

अधुना काळिङ्गेन उत्तरं न ज्ञातम्। धेनुविषये प्रत्येकं ग्रामीणेन उपस्थाप्यमानः अयं वादः तेन अश्रुतः न। बाल्यवयसि स्वस्यापि गृहे बहिश्च, यत्र तेन भोजनं कृतं तत्र जोयिसगृहेऽपि एतत् वचनं श्रुतमेव। किन्तु अमेरिकागमनानन्तरं तस्य विचारः परिवर्तितः अभवत्। स्वविचारः उक्तश्चेद् ग्रामीणानां बोधः न स्यादिति आलोचयन्नपि मुक्तकण्ठेन

अवदत् – 'मनुष्याणां धेनोश्च समानं वचनम् उच्यते किम् ? गावः किमर्थं भवन्ति, मनुष्याणाम् उपयोगाय न किं नु ?'

एतत् वचनं वेङ्कटस्य आश्चर्यम् अजनयत् । गावः मनुष्याणाम् उपयोगाय सन्ति, उत मनुष्याः गवाम् उपयोगाय जायन्ते ? कः कस्य उपयोगाय इति प्रश्नः एव तेन कदापि नालोचितः । गृहे जातः पुत्रः क्षेत्रे श्रमकर्म यथा करोति तथा गोवत्सः कर्म करोति, माता स्वापत्याय यथा स्तन्यं ददाति तथा धेनुः मनुष्याय ददाति । माता, पुत्रश्च – उभावपि यथा भोजनं कुरुतः तथा वृषभः धेनुश्च तृणानि खादतः । अत्र कस्य प्रयोजनं कस्मै ? इतोऽपि अधिकं विश्लेषणं तेन न ज्ञातम् । अवदत् – 'त्वं विद्यावान् । अस्मादृशेभ्यः ग्रामबालेभ्यः त्वया धर्मकर्मणी वक्तव्ये । तद् विहाय त्वमेव एवं करोषि चेत् वंशः न स्थास्यत्येव । किञ्चित् स्थिरः तिष्ठ ।'

एतद्वचनेन क्रोधे जातेऽपि काळिङ्गः तं वचनेन न प्रकाशितवान् । ग्रामीणाः एव तादृशाः । तेषां विचारशक्तिरेव न विद्यते । तेषां विश्वासस्य विरुद्धं किमपि उच्यते चेत् यद्वा तद्वा भाषन्ते । सः एतावत् एव अवदत् – 'भवतु वेङ्कटण्ण, तव गृहव्यवहारं त्वं प्रतिपालय । मम गृहस्य कष्टं सुखम् अहं पश्यामि ।'

'अहं किं तव गृहात् अपहृत्य नेतुम् आगतः ? हितवचनं वक्तुम् आगतश्चेत् तव गृहम् मम गृहम् इति भेदबुद्धिं जनयसि । किं तत् तव गृहम् ? धेनुवृषभान् आदाय वधकाय दत्तवान् इति ग्रामे उक्त्वा तव गृहं यः कोऽपि यथा नागच्छेत् तथा करोमि, पश्यसि किम् ? गौडज्जस्य गृहम् इति अहं तूर्णीं स्थितोऽस्मि, जानीहि । त्वं विद्यावान् इति कोऽपि मत्पत्नीपुत्रः न बिभियात्'– इति उक्त्वा वेङ्कटः कोपेन प्रस्थितवान् । तस्य पञ्चाशत्समीपं वयः । गौडज्जस्य मरणानन्तरं ग्रामे ततोऽपि ज्येष्ठाः त्रयः यद्यपि आसन् तथापि सः इव ज्ञानवन्तः नासन् । अन्यच्च गौडज्जात् अनन्तरं वेङ्कटस्य एव गोष्ठं ग्रामे बृहत्तमम् । स्वभावतः ग्रामगतं याजमान्यं तस्यैव भवेत् । काळिङ्गस्य तु किं वयः ? अष्टाविंशतिः वर्षाणि स्युः । वेङ्कटस्य तु अष्टाविंशतिवर्षीयः कश्चन पुत्रोऽस्ति ।

काळिङ्गः म्लानमुखः जातः । किन्तु सः केनचित् श्रद्धाबलेन स्वमनसि समाधानम् आहितवान् । तायव्वा गोष्ठं गत्वा प्रत्येकं गां परीक्षितवती । अद्य प्रातः दत्तेषु पुण्यकोटि-सन्तानस्य त्रयः जरद्धेनवः आसन् । ताः अपि काळिङ्गः घातकेभ्यः विक्रीतवान् आसीत् । तस्याः न केवलं दुःखेन नेत्रयोः अश्रु जातम्, अपि तु एतेन किमपि दुरितं स्यादिति व्यग्रता अपि जाता । यत्र पुत्रः उपविष्टः तस्य मञ्चस्य पुरतः गत्वा स्थित्वा

संज्ञया स्वकीयाः भावनाः व्यञ्जितवती। वेङ्कटेन उक्तात् अधिकं किं नु सा वदेत् ? इति काळिङ्गः तत्र लक्ष्यमेव न दत्तवान्। सा एव खलु अन्यगृहवासिनं वेङ्कटम् आनीय आत्मानं निन्दितवती इति असमाधानमपि असीत्।

## 6

एकस्मिन्नेव मासे गिरेः सानौ सप्तति-एकरेभूमिः काळिङ्गस्य नाम्नि अभवत्। यानमार्गस्य पश्चिमभागे न्यूनान्यूनं षष्टि-एकरेप्रदेशम् अपि अभिव्याप्य तत् त्रिंशदधिक-शत-एकरेमिता फलवती कृषिभूमिरेव सञ्जाता। सः यदा कार्यार्थं ताल्लूकुकार्यालयं जनपदकार्यालयं गतः तदा पितामहेन निर्मितस्य देवस्थानस्य कल्याण्याश्च स्थलस्य पञ्जीकृतपत्रं न निर्णीतं तथैवावशिष्टमिति तस्य लक्ष्ये आगतम्। पितामहः न्यायावगतेः अभावात् सर्वकारस्य भूमौ देवस्थानं कल्याणीं च निर्माय समन्तात् वृक्षान् आरोपितवान्। तत् सर्वकारस्य लक्ष्ये आगतं सत् विचारणाय प्राप्तमासीत्। शेकदारः गौडज्जात् लञ्चं स्वाहाकृत्य पञ्जीकरणं बद्धवान् केवलम्, निर्णयं न कारितवान्।

संवृत्तं शुभाय इति आलोचयन् काळिङ्गः, देवस्थानकल्याणीप्रदेशः स्वाधीने दातव्यः इति सर्वकारं न्यवेदयत्। स्वपरिचितम् उपायुक्तम् अवदत् - 'मम तातेन धर्माय निर्मितं देवस्थानम्। तस्य समस्तव्ययः अस्माभिरेव निरूढः अस्ति। अर्चकाय अपि वयमेव केदारम् अर्पितवन्तः। तां भूमिम् अस्मन्नाम्नि अधीनां कारयित्वा ददातु।'

स्वाधीनतायाः द्विशतरूप्यकाणां मूल्यं सर्वकाराय दत्त्वा तां भूमिं स्वायत्तां कारितवान्। प्राक्तनस्य आक्षेपस्य परिहारोऽपि अभवत्। अन्यच्च नूतनतया प्राप्तायाः सानुभूमेः लग्नतया एषा भूमिरपि अस्ति।

अनन्तरं स्वस्य प्राचीनं केदारं सर्वं सर्वकारस्य आधारतया भूमेः अभिवृद्ध्ययर्थं पञ्चविंशतिसहस्ररूप्यकाणाम् ऋणं स्वीकृतवान्। गिरेः सानुभूमेः मध्ये सामान्यप्रमाणेन एकं गृहमपि निर्माय तस्य जिङ्क्शीट्छदिमपि निर्मितवान्। गृहस्य वातायनं, द्वारं संयोज्य सर्वकार्यसमाप्त्यनन्तरं त्रिचतुरदिनेषु नगरं गत्वा आगमिष्यामि इत्युक्त्वा प्रस्थितः।

कुलानुगतं कर्म सर्वं प्रागिव प्रवर्तते स्म। कर्मकराः क्षेत्रकेदारेषु कृषिं विधाय यथापूर्वं वर्षाग्रस्य यवान् आरोपितवन्तः। वाटिकासु कर्षणं वर्षान्ते भवेत्। सद्यःकाले वर्षारम्भः अभवत्। काळिङ्गः एकस्मिन्नपि दिने तूष्णीं न उपविशति। केदारं परिभ्रमति। गोमालं

सञ्चरति । तालूकुकेन्द्रं गच्छति । गतमासात् ग्रामसमीपे निर्मितेन यानमार्गेण प्रतिदिनं लोकयानं गच्छति । सः यानमार्गः काळिङ्गस्य कृते निर्मितः, लोकयानमपि तदर्थमेव चलति किमु – इतिवत् सः तेन यानेन द्वित्रदिनेषु एकवारमिव गत्वा आगच्छति । सूट्ह्याट्धारी सः हस्तप्रदर्शनेन यानं स्थगयित्वा, तदन्तःस्थितेन काखिवस्त्रधारिणा स्वामिना अग्रिमासने उपवेशितः भवति । ग्रामीणानां सर्वेषां काळिङ्गस्य विषये न आश्चर्यमात्रम्, भयं गौरवं चापि भवति । सर्वकारात् गिरेः समग्रपूर्वसानुमेव स्वाधीनां नीतवानिति अवगमनानन्तरं तु तस्य विषये आश्चर्यं जातम् । सः गच्छति चेत् तं जिल्लाधिकारी आसन्दे उपवेशयति इति अग्रहारस्य शानुभोगः एव अवदत् ।

काळिङ्गः चतुर्षु दिनेषु ट्र्याक्टर् एकम् आनीतवान् । प्रथमतः द्वित्रदिनेषु सः एव तत् चालयित्वा सानुप्रदेशम्, अन्यत्र स्थितं गोमालं च संयोज्य कर्षति स्म । अनन्तरं कश्चन चालकः आगत्य तत्र सङ्गतः । बड्बड्बड्बड् इति समग्रां सानुम् अभिव्याप्य समन्तात् ग्रामेषु अपि यथा श्रूयते तावत् तुमुलं कुर्वत् तत् ट्र्याक्टर् कर्षकवृषभं विनापि कर्षणं करोति स्म । तस्य बृहदाकाराः अयोदन्ताः पुरुषपरिमाणकं मृत्पिण्डम् उन्नीय भूतलं तक्षति स्म । यावदपि कृते कर्षणे तस्य आयासः एव नास्ति । तस्य चालकः अपि सुखेन रक्तासने उपविश्यैव चक्रं चालयति । शिरसः उपरि आतपनिवारणाय त्वग्वस्त्रस्य छादनमपि विद्यते ।

प्रथमदिने काळिङ्गेन तस्य चालने आरब्धे तस्य गोष्ठस्य धेनवः यानमार्गस्य पूर्वभागे गोमाले चरन्ति स्म । ट्र्याक्टर्यानात् निर्गतात् असामान्यात् अनभ्यस्तात् च ध्वनेः भीताः दिक्च्युताः ताः धावितुम् आरब्धवत्यः । धेनूनां चारकेन निङ्गेन कृतेऽपि यावति यत्ने तासां ग्रहणं न शक्यमासीत् । किन्तु भीताः ताः धेनवः कुत्र गच्छेयुः ? गोमाले दिशि दिशि विक्षिप्य, अन्ते क्षेत्रपल्वलानि अतिक्रम्य उल्लङ्घ्य, धावित्वा आगत्य गोष्ठं प्रविष्टाः । इतोऽपि मध्याह्ने एव गृहमागताः धेनूः दृष्ट्वा तायव्वायाः अपि आश्चर्यम् । एतम् असामान्यध्वनिं सापि श्रुतवती । किन्तु सः मार्गे आगतस्य नूतनमोटर्यानस्य स्यादिति सा ऊहितवती । मोटर्यानमपि द्रष्टुं सा एकस्मिन् दिने यानमार्गसमीपं गता आसीत् । तस्य रणितं श्रुतवत्या तया एतदपि बृहद्रणितेन तुल्यं भासितम् । धेनुभिः एतत् ज्ञातं स्यादिति सा भावितवती । तथापि तत्क्षणं तस्याः मनः अन्यरीत्या आलोचयितुं प्रारभत । धेनुना न ज्ञातम्, मया कथं ज्ञातुं शक्येत ? ताः देवताः इव । अग्रे जायमानं ताभिः ज्ञायते इति । किन्तु अग्रे किं भवेत् ? इति तां वक्तुं

ताः न शक्नुवन्ति ।

केवलं भयमेव नेत्राभ्यां दर्शयन्त्यः दूरं धावित्वा स्थितासु तासु कासाञ्चन देहः पादाश्च कम्पन्ते स्म । अग्रे स्वात्मनां किमपि अनिष्टं स्यादिति ताः तद्द्वारा सूचयन्त्यः सन्ति किम्, अथवा केवलेन भयेन कम्पन्ते इति तायव्वया न ज्ञातम् ।

ट्र्याक्टर्चालकस्य नाम जमालः । तस्मै भोजनं भृत्यहस्तात् प्रेषणीयम् आसीत् । दिवा ट्र्याक्टर् चालयित्वा, तत् नूतनतया निर्मितस्य गृहस्य पार्श्वे कुट्यां स्थापयित्वा सः तद्गृहे एव स्वपिति स्म । कदाचित् अपूर्वतया ग्रामस्यान्तः अपि आगच्छति स्म । ग्रामे तस्य स्थानं गौरवार्हं दृश्यते स्म । हलं स्कन्धे आरोप्य वृषभयुगलस्य पृष्ठतः दिवा समग्रदिने भ्रमित्वा पादोन–एकरेमितां भूमिं कर्षन्तः ग्रामीणाः क्व ? बडबडध्वनिं कुर्वतः मृन्मण्डमेव उत्खातयतः अग्रे सरतः राक्षसदण्ष्ट्रावतश्च यन्त्रस्य उपरि पादत्राणे धृत्वा उपविशन् चालयन् सारथिः क्व ! गृहे स्वेन भुक्तां स्थालिकां सः उन्नीय न क्षालयति । हलेन कर्षन्तः इतरे भृत्याः तत्कार्यं कुर्युः ।

सप्ताष्टदिनेषु अन्यत् यन्त्रम् आगतम् । तेन साकं काखिवस्त्रधारिणः कर्मकराः अपि आगताः । तावता एव काळिङ्गः देवस्थानस्य समीपे कल्याण्याः पार्श्वे एव इष्टिकाभिः एकं गृहं निर्मितवान् । तस्य अन्तः यन्त्रं प्रतिष्ठाप्य तस्मात् एकां स्थूलां नलिकां कल्याण्याः जले निमज्जितवन्तः । यन्त्रचालने आरब्धे तदपि ट्र्याक्टर् इव बडबडध्वनिम् अकरोत् । तत्क्षणं कल्याण्याः जलम् उपरि आगत्य बृहन्नलिकातः दबदबध्वनिना बहिः पतितुम् आरब्धम् । तस्य यन्त्रस्य इरिगेशन्पम्प् इति नाम इति श्रुतम् । तन्नाम उच्चारयितुं तस्मिन् ग्रामे न केनापि शक्यम् आसीत् । पम्पु इत्येव सर्वेऽपि तस्य नाम स्थिरम् अकुर्वन् ।

काळिङ्गः प्रतिदिनं कर्मकरैः भृत्यैः नूतनायां बृहद्भूमौ कर्म कारयति स्म । जल–प्रवहणाय कुल्याः अभूवन् । कुत्रचित् भूमेः अन्तः एव अयोनलिकाः प्रवेशितवन्तः । यानमार्गपार्श्वात् गावः यथा नागच्छेयुः तथा तन्त्रीभिः कण्टकयुता वृतिः निर्मिता । नूतनतया निर्मिते यानमार्गे केवलं स्यूतैरेव पूर्णानि मोटर्यानानि आगच्छन्ति । तेषां नाम 'लारि' इति श्रूयते । गोष्ठस्य गोमयं विहाय वस्तुयानेषु गोणीस्यूतेषु पूरिताः वर्णयुताः विदेशीयोर्वरस्य स्यूतबन्धाः आगताः । अयं किम् आरोपयति ? रागी, व्रीहिः उत विदेशीयसस्यानि इति ग्रामजनाः आश्चर्यचकिताः अभवन् । यः कोऽपि पृच्छति चेत् 'यूयमेव पश्यत' इति काळिङ्गः वदति स्म । तेन अधुना कृतस्य बृहत्केदारस्य नाम 'फार्म्' इति । ग्रामस्य इतरे अपि तत् 'पारम्' इति यथाशक्ति सम्यक् उच्चारयन्ति स्म ।

# नवमः अध्यायः

## 1

अग्रहारमाध्यमिकशालां प्रविष्टवतः वेङ्कटरमणस्य वर्षत्रयम् अतीतम् । एतन्मध्ये तस्य श्वशुरः ताल्लूकान्तरं स्थानान्तरितः । सम्प्रति एकस्मिन् मासे तस्यापि स्थानान्तरादेशः प्राप्तः आसीत् । सर्वकारोद्योगी एकस्मिन् एव ग्रामे, तत्रापि जन्मग्रामे कथं वर्तितुं शक्नुयात् ? किन्तु ग्रामं परित्यज्य गच्छति चेत् पुण्यकोटिदेवस्थाने पूजायाः का गतिः ? तथा आलोच्यते चेत् तेन शालोद्योगं कृत्वा जीवितव्यम् इति नास्त्यपेक्षा । एकः कुटुम्बः सुखेन भोक्तुं यथा शक्येत तावत् क्षेत्रं गौडज्जस्य तस्मै दत्तिरूपेण दानस्य उद्देश्यं किं वा स्यात् ?

तथापि वेङ्कटरमणः निरीक्षकस्य कार्यालये कर्तव्यं कृत्वा स्वस्थानान्तरम् अग्रहार-पार्श्वस्थं बसवनपुरम् इति विहितवान् । बसवनपुरात् अग्रहारस्य एकमैल्मितमेव दूरम् । अग्रहारस्य अधुना शुद्धा माध्यमिकशाला विद्यते । बसवनपुरे सद्यः एव नूतनादर्शशाला प्रारब्धा । गमनागमनाय आनुकूल्यं भवतु इति एका द्विचक्रिका तेन क्रीता । कच्छवसनम् जानुनोः उपरि बद्ध्वा तटाकपार्श्वे सकृत् पतित्वा क्षतितो भूत्वा अन्ते द्विचक्रिकाचालनम् अभ्यस्तवान् ।

सः प्रतिदिनमिव प्रातः पूजार्थं गच्छति स्म । देवस्थानस्य द्वारोद्घाटनात् पूर्वं 'नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः' इति वदन् अग्रिमाङ्गणस्थां बृहद्घण्टाम् उच्चैः दशवारं विंशतिवारं वा वादयति स्म । तस्याः ध्वनिः गिरेः तम् उत्तरभागं प्रपूर्य समन्तात् ग्रामान् यावत् प्रसरति तावत् सः देवस्थानस्य द्वारम् उद्घाट्य अन्तः बहिश्च अवकरान् सम्मार्जयितुम् आरभते स्म । किन्तु काळिङ्गेन आनीतं यन्त्रद्वयं तस्मिन् एव काले सकृदेव बडबडबडबड इति परस्परं स्पर्धया इव ध्वनिं

करोति । ट्र्याक्टर् देवस्थानस्य अधः सानौ सदा लीनं मौनं नाशयति, कल्याणीपार्श्वे एव स्थापितस्य डीसेल्तैलयन्त्रस्य कोलाहलश्च साक्षात् देवस्थानस्य अन्तः प्रविश्य वादयति स्म । देवालयस्य घण्टा डीसेल्यन्त्रयोः शब्देन साकं स्पर्धमाना जीवेत् इत्ययं कालः समागतः । तस्मिन् ध्वनौ भावपूर्णतया मन्त्रमुच्चार्य पूजयितुं सः न शक्नोति स्म ।

काळिङ्गस्य फार्म्नामके क्षेत्रे यद्यद् कार्यं प्रवर्तते तस्य प्रतिस्तरं वेङ्कटरमणेन ज्ञातम् आसीत् । गिरेः सानुः काळिङ्गेन सम्पादिता इति वार्ताश्रवणेन तस्य सन्तोषः अभवत् । तावतः बृहद्गोष्ठस्य फलवत्सानोः तृणानि लभ्यन्ते इति कस्यापि सन्तोषस्य विषयः । किन्तु काळिङ्गः तस्याः भूम्याः ट्र्याक्टर्द्वारा यदा कर्षणम् आरब्धवान् तदा तस्य महान् खेदः जातः । स एव काळिङ्गम् अपृच्छत् – 'भृत्यान् सेवकान् पालयित्वा इतःपरं कुटुम्बचतुष्टयं जीविष्यति चेदपि समृद्धतया भोजनं कर्तुं पर्याप्तानि केदाराणि भवतः ग्रामसमीपे एव सन्ति । एतां गोभूमिं कुतः कर्षयसि ?'

'कुतः इत्युक्ते धान्यानि वर्धयितुम् ।'

'गोमातुः अन्नम् अपहृत्य सस्यवर्धनेन किं करोषि ? गौः उदरपूर्णं भक्षयति चेत्, तदनु अस्माभिः अन्नं प्राप्यते खलु ?'

'वेङ्कटरमण, त्वमिदानीमपि अस्मत्प्रपितामहकाले असि । गौः न भक्षयति चेदपि अस्माकम् उदरं पूर्यते । एतत् ट्र्याक्टर् पश्य । वृषभं विना भूमिकर्षणं न भवति किम् ? तथैव गोसारं विनैव इतोऽपि अधिकं सस्यफलं प्राप्तुं शक्यते । मया आनीतस्य विदेशीयोर्वरस्य परिणामं त्वमेव पश्यसि ननु, कथं भवेदिति ।'

वेङ्कटरमणेन उत्तरं न ज्ञातम् । 'केवलं सस्यवर्धनाय गौः भवेत् किम् ? तन्न भवति चेत् गौः नावश्यिका इति वदसि खलु ?'

काळिङ्गः मनस्यैव हसित्वा अवदत् – 'तथैव, किन्तु क्षीरार्थं गौः आवश्यकी एव । ताः इतोऽपि सम्यक् पालनीयाः । अहं कथं पालयामि इति त्वमेव पश्यसि, तूष्णीं तिष्ठ ।'

एतेन उत्तरेण वेङ्कटरमणस्य समाधानम् अभवत् । काळिङ्गः गाः इतोऽपि सम्यक् पालयामि इति उक्तवान् किल । तावता अलम् ।

परन्तु काळिङ्गः गोष्ठस्य पञ्चपञ्चाशतं गाः मुसल्मानघातकाय विक्रीतवान् इति एतावता तेन यदा ज्ञातं तदा मनसि अतीव दुःखम् अभवत् । एतस्य एतादृशी बुद्धिः

कथम् आगता ? देवः एतस्मै कस्मिन् विषये न्यूनतां कृतवान् ? इति सः चिन्तयति स्म । एतस्मिन् विषये भाषितव्यम् इति उभयोः दिनयोः काळेनपल्लीं गतः चेदपि तेन काळिङ्गः न प्राप्तः आसीत् ।

## 2

एकस्मिन् प्रातःकाले वेङ्कटरमणः नववादनसमये पूजार्थम् आगतः । भानुवासरः इति शालाकार्यं नासीत् । देवस्थानस्य अन्तः सर्वत्र अवकरान् सम्मार्ज्य, जलं संसिच्य, स्थलं प्रक्षाल्य, गन्धं सङ्घर्ष्य, पूजारम्भावसरे बहिः 'ढम्' इति भुषुण्डिकाशब्दः उद्गतः । सः गिरेः पार्श्वकुहरेषु व्याप्तः । काळिङ्गः नूतनतया भुषुण्डिकाम् आनीतवान् स्यादिति तस्य मनसि झटिति अभासत । पम्पूयन्त्रस्य बडबडशब्देन तस्य मनः मन्त्रभावमपश्यत् कतिपयदिनेभ्यः क्लेशम् अनुभवति स्म । अधुना इयं भुषुण्डिका आगता । इतः किं सः आखेटनं करोति ? देवस्थानस्य समीपे कीदृशम् आखेटनम् ? किं पक्षिवधः, उत प्राणिवधः – इति चिन्तयन् यान्त्रिकतया मन्त्रं जपन् पूजां समापितवान् ।

मङ्गलनीराजनसमये काळिङ्गः देवस्थानम् आगतः । तस्य हस्ते भुषुण्डिका नासीत् । अर्धबाहुकं युतकं सः धृतवान् आसीत् यच्च काखि–अर्धोरुकेण आवृतम् आसीत् । कटौ स्थूलां चर्मपट्टिकां बद्धवान् आसीत् । शिरसः उपरि आतपाय ह्याट् । वेङ्कटरमणः मङ्गलनीराजनस्य स्थालिकाम् आनीय तस्य पुरः यदा गृहीतवान् तदा सः तस्य घृतवर्तिकायाः उपरि हस्तं चालितवान् । अनन्तरं दत्तस्य पुष्पस्य स्वीकारानन्तरं सः एव – 'वेङ्कटरमण, प्रसादं ददासि किम् ?' इत्यपृच्छत् ।

'किमिदम् एवं पृच्छसि ? पूजावसरे आगतेभ्यः भक्तेभ्यः प्रसादं ददाम्येव ।'

'न केवलं प्रसादः, अहं क्षुधितोऽस्मि । किं कृतमस्ति ?'

'दध्यन्नम् । एकं पत्रम् अवचित्य आनय ।'

तेन बाह्यतः आनीतं बृहत् पलाशदलम् आपूर्य वेङ्कटरमणः द्विवारं बृहच्चुलुकेन दध्यन्नं वितीर्णवान् । धेनोः दधि सम्मिश्र्य आर्द्रमरीचस्य व्याघरणेन, कृष्णनिम्बदलेन, नारिकेलचूर्णेन च मिश्रितं तत् घमघम गन्धं सारयति स्म । काळिङ्गस्य उदरपूर्त्यनन्तरम् इतोऽपि द्वयोः जनयोः पर्याप्तम् अन्नम् अवशिष्टम् । वेङ्कटरमणः केवलं प्रसादरूपेण एकं ग्रासं स्वीकृतवान् । बहिः गत्वा हस्तं प्रक्षाल्य आगमनानन्तरं काळिङ्गः अपृच्छत् –

'पश्य, एतावन्ति दिनान्यभूवन्। मया नूतनतया निर्मितं फार्म्गृहं भवान् एकदापि आगत्य न दृष्टवान् एव। कुतः ?'

'प्रतिदिनं पूजानन्तरं शालागमनत्वरा विद्यते।'

'सायङ्कालसमये आगन्तुं शक्येत खलु ? त्वं यावत्सु दिनेषु सायङ्काले ग्रामे गृहम् आगत्य मम मातुः सकाशे भाषसे इति श्रूयते। तथैव अत्र कुतः नागतः ?'

'तत्र दर्शनीयं किमस्ति ? विदेशीयोर्वरस्य बन्धाः, कृष्युपकरणानि, तान्येव खलु ?'

काळिङ्गः एकं क्षणं किमपि उत्तरं न दत्तवान्। स्वस्मिन्नेव आलोचयति स्म। अनन्तरम् अवदत् – 'पश्य, अहं तव बाल्यमित्रम्। अहं किं किं नूतनं कुर्वन्नस्मि इति द्रष्टुं कुतूहलमपि नास्ति किम् ? मयि तव उपेक्षा कुतः ?'

'उपेक्षावचनं न, विद्यमानः विषयोऽयम्।'

'तथा चेत् अद्य कथमपि भानुवासरः। विलम्बेन गृहं गन्तुं शक्यते। अधः अवतीर्य मया साकम् आगच्छ।'

वेङ्कटरमणः प्रसादपात्रं चतुरस्रवस्त्रे निबध्य देवस्थानद्वारस्य तालिकां लगयित्वा कुञ्चिकां स्वजघनस्य कटिदेशे लगयित्वा स्कन्धे विद्यमानं चतुरस्रं शिरसि यथा गच्छेत् तथा आच्छाद्य प्रस्थितः। तस्य पादयोः पादरक्षा नासीत्। काळिङ्गः देवस्थानात् बहिः स्थापितं पादत्राणयुगलं धृतवान्। कल्याण्याः समीपतः अपसर्प्य तौ जलनलिका-गमनमार्गेण अधः अवतीर्णौ। समग्रायां सानौ आरोपितानि आलुकसस्यानि सम्प्रति भूतले पल्लवितानि सन्ति। तत्रैकः अत्रैकः इव कर्मकराः तस्मिन् बृहत्फार्म्मध्ये सस्येभ्यः जलसेकं कुर्वन्ति स्म। पार्श्वे चलद्भ्यां ताभ्यां यदा फार्म्गृहं गतं तावता वेङ्कटरमणेन आन्तरभागः सर्वः ईक्षितः।

तत् केवलकृषिसामग्रीणां पूरणभण्डारकुटी नासीत्। देवस्थानवतः गिरेः औन्नत्यात् यथा दृष्टं तथा लघु अपि नासीत्। एकस्मिन् पार्श्वे ट्र्याक्टर्स्थापनाय अपरा कुटी। अपरस्मिन् पार्श्वे कृषिसामग्रीणां बृहद्भण्डारः। तस्य पार्श्वे एव विद्यमानः भागः वासाय सुसज्जितः आसीत्। उपरिच्छदेः अन्तर्भागे श्लक्ष्णानि काष्ठफलकानि आच्छादिनानि। वास्तव्यभागे एकः महाप्रकोष्ठः, त्रयः लघुप्रकोष्ठाः पश्चाद्भागे पाकगृहं, स्नानगृहं च। गृहे जलनलिका, जलसञ्चयिनी अपि आसीत्। प्रावारे सोफा, आसन्दाः प्रकोष्ठे च स्प्रिङ्ग्मञ्चाः। सर्वमपि एकैकशः काळिङ्गेन दर्शनानन्तरं वेङ्कटरमणः अपृच्छत् –

'इतःपरं कुटुम्बं ग्रामात् अत्रैव आनयसि किम् ? तव तु युज्यते । किन्तु तायव्वायाः एकस्याः नीरसता न भवेत् किम् ?'

'उपविश, संलपाव'– इति काळिङ्गः तं सोफाम् अदर्शयत् । किन्तु शुद्धः सन् देवप्रसादं हस्ते गृह्णन् वेङ्कटरमणः काष्ठमये आसन्दे उपविष्टः । तस्य अग्रे भित्तौ एका भुषुण्डिका लम्बिता आसीत् । स्वस्य पूजावसरे श्रुतं शब्दं स्मरन् वेङ्कटरमणः अपृच्छत् – 'किम् आखेटनाय भुषुण्डिका आनीता ? पुरातनकाले अत्र गिरौ व्याघ्रः तरक्षुः आसीदिति श्रुतम् । तव पितुः मरणानन्तरम् अत्र पार्श्वे कोऽपि वन्यमृगः नागतः इति च । प्रतिदिनं पूजार्थम् अहम् एकाकी आगच्छामि खलु ? एकोऽपि मृगः न दृष्टिगोचरः आसीत् । एषा कुतः आनीता ?'

'आखेटनार्थं न । अत्रैव वस्तव्यम् । अहर्निशम् एकाकी कुटुम्बः अस्तीति चोर-तस्कराणां भयम् अस्ति खलु ? रक्षणार्थम् आनीतास्ति ।'

'तायव्या....' वेङ्कटरमणेन वचनावसरे मध्ये एव काळिङ्गः अवदत् – 'अधुनापि त्वं न जानासि । अहमपि कमपि नोक्तवान् । मम अमेरिकादेशे विवाहः संवृत्तः । अधुना अष्टमासीयं पुमपत्यमपि अस्ति । पत्नी पुत्रश्च इतः पञ्चदिनेषु विमानेन मुम्बयीनगरम् आगमिष्यतः । अहं तत्र गत्वा आनेष्यामि ।'

'वयं न केऽपि जानीमः खलु ?' इति किमपि वक्तुम् आरभमाणः वेङ्कटरमणः तत्रैव तूष्णीं स्थितः । काळिङ्गेन दशनिमेषेषु दृश्यमानोऽपि सः अग्रे किमपि न अभाषत ।

अनन्तरं काळिङ्गः एव अपृच्छत् – 'किमिति तूष्णीं स्थितोऽसि ? मम विवाह-विषयेण तव सन्तोषः नाभूत् किमु ?'

'कथं न भवेत् ? तव विवाहेन काळिङ्गगौडज्जस्य वंशपरम्परावर्धनं भवति चेत् मम सन्तोषः न स्यात् किम् ?'

'किन्तु, कुतः तूष्णीकः संवृत्तोऽसि ?'

'किमपि न' इति सः पुनरपि तूष्णीं स्थितः । किं वक्तव्यम् इति न ज्ञातम् । अथवा अस्मिन् विषये भाषितुम् अधिकारः स्वस्य नास्ति इति परिभावितवान् किम् ? तथापि किमपि वक्तव्यम् इति यत्नेन आलोचनेनापि मनसि किमपि न भासितम् ।

काळिङ्गः एव अवदत् – 'ग्रामजनाः एतत् नाङ्गीकुर्वन्ति इति अहमपि जानामि । त्वं शुद्धः, अन्यच्च ग्रामपुरोहितः । किन्तु तथापि मम मित्रम् । विषये ज्ञाते तत्क्षणम्

अभिनन्दनं वदेः इति मया भावितम् आसीत् ।'

'मम शुभेच्छा सदा वर्तते एव । अहं सर्वदापि देवस्थाने पूजावसरे काळिङ्गज्जस्य गृहं समृद्धं वर्धेत इत्येव प्रार्थये । किन्तु त्वं त्वज्जातीयामेव अनुरूपां कन्याम् अन्वेक्ष्य सम्बन्धं कर्तुम् अशक्ष्यः । त्वं विद्यावान् । अस्मिन् ग्रामभागे तु स्वल्पतयापि विद्याभ्यासवती कन्या दुर्लभा स्यात् । किन्तु मैसूरुनगरे तव जातावपि शिक्षणमवाप्ताः कन्याः लभ्यन्ते एव । अपेक्ष्यते चेत् अहमेव गत्वा तादृशे सदृशे गृहे प्रस्तावं कृत्वा कन्यां निश्चिताम् अकरिष्यम् ।'

'वेङ्कटरमण, कस्यापि विवाहः सम्पद्यते चेत् अमेरिकायां कोऽपि कन्यायाः कुलं, गोत्रं वा न पृच्छति । तत्क्षणं 'कङ्ग्राजुलेशन्स्' इति मुक्तमनसा वदन्ति । अस्मिन्नेव देशे तत्सर्वं पुराणम् आलोचयन्ति । प्रतिदिनम् आङ्ग्लपत्रिकामपि पठसि । त्वं तु किञ्चिदग्रे न गच्छेः किम् ?'

'केवलं मम एकस्य विषयः मास्तु । मया किमुच्यते इति चेत् स्वस्वकुलाचारवत्यः कन्याः परिगृह्यन्ते चेत् ताः कुलपरम्परायाः आचारः, विचारः, धर्मः, कर्म इति सर्वम् आनुष्ठाय पुरःसरन्ति । उदाहरणार्थम् अग्रिमवासरे आगामिनि सङ्क्रान्तिपर्वदिने पुण्यकोटि–देवस्थाने यात्रोत्सवः भविष्यति । त्वज्जातीया एव कन्या चेत् सा वधूः तद्दिने उपवासं कृत्वा पञ्चगव्यं स्वीकृत्य, पूजापुरस्कारादिकम् अकरिष्यत् स्म । गोमातुः पूजां पुरुषापेक्षया प्रायः स्त्री एव कुर्यात् । तथा तव रक्तदेशीया पत्नी कुर्यात् वा न वा इति न जाने । तस्याः जातिः का ? तद्देशीयाः सर्वे क्रिस्तजनाः खलु ?'

काळिङ्गः उपहस्य अवदत् – 'तेषामपि कृषिकजातिरेव । कन्या मया सह एव विश्वविद्यालये कृषिविज्ञानम् अधीतवती । तस्याः पितुरपि बृहत् फार्म् अस्ति । तत्र श्रमकर्म विधाय तस्याः अभ्यासः अस्ति । ट्र्याक्टर्यन्त्रस्य उपरि उपविश्य कस्मादपि पुरुषात् अन्यूनतया प्रातरारभ्य सायङ्कालपर्यन्तं श्रमं वहति । तस्याः श्रमं पश्यन्ति चेत् अस्मद्देशीयाः स्त्रियः लज्जां वहेयुः ।'

'भवेत् । किन्तु त्वद्ग्रामे एव यावन्तः स्त्रीजनाः हलेन न कर्षन्ति किम् ? शकट–चालिन्यः स्त्रियः न सन्ति किम् ? कुतृणानाम् उन्मूलनं सस्यारोपणं च स्त्रीः विहाय पुरुषाः कुर्वन्ति किम् ? अहं किं वक्तुं प्रवृत्तश्चेत् तेषां देशस्य कृषिपद्धतिं तव पत्नी अभ्यस्तवती । अस्मत्पद्धतिम् अस्मत्स्त्रियः अनुतिष्ठन्ति । शकटचालनं हलेन कर्षणं च कुर्वत्यः अस्मत्स्त्रियः एव बोध्यन्ते चेत् ट्र्याक्टर्यन्त्रमपि चालयेयुः । सहिततया अस्माकम्

आचारः, व्यवहारः, धर्मः, कर्म इत्येतानि अस्मत्स्त्रियः जानन्ति ।

अस्य वचनस्य उत्तरं दातुं काळिङ्गः न ज्ञातवान् । किन्तु किमपि अनुक्त्वा वेङ्कट-रमणस्य वचनं मौनेन अङ्गीकर्तुमपि न शक्यं तेन । अवदत् – 'यु नो, अवर् पायिण्ट्स् आफ् व्यू डिफर् । नाम स्वस्वदृष्टौ भेदः विद्यते । आल् रैट् ।'

काळिङ्गस्य वचनस्य अर्थः वेङ्कटरमणेन न ज्ञातः । आल् रैट् इत्युक्ते 'इतःपरं वदनं पर्याप्तम्' इति सान्दर्भिकः अर्थः माध्यमिकशालायाः उपाध्यायेन एतेन संस्कृतशास्त्रिणा नावगतः । स वचनम् अनुसरन् अवदत् – 'पश्य, अहमेव त्वां वदेयम् । त्वं न मिलितः एव । देवस्य कल्याण्यां त्वया पम्प्योजनेन तस्याः जलं कृषये नोपयोक्तव्यम् आसीत् ।'

'कुतः ? त्वं न जानासि इति मन्ये । सर्वकारीयभूमौ अनुमतिं विना देवस्थाननिर्माणेन अस्मत्पितामहस्य उपरि प्रकरणं प्रवृत्तं खलु ? तत्र अहम् समुचितरीत्या सम्प्रति तां भूमिं मम नाम्नि कृतवानस्मि । देवस्थानं, कल्याणी, समन्ततः तरुलतासस्यभूमिः सर्वा मम स्वायत्ता भूमिः । अस्याः सानोः फार्म्संलग्नः एकः भागः सः । कल्याण्याः जलस्य उपयोगाय कोऽपि न्यायनिर्बन्धः नास्त्येव मम ।'

वेङ्कटरमणेन नूतनो विषयः ज्ञातः इवाभवत् । सः अवदत् – 'न्यायविषयः नोक्तः । एषा भूमिः त्वदीया जाता इति कयापि रीत्या सन्तोषः एव । किन्तु कोऽपि किमपि देवस्थानं वा भवतु, 'एतत् मदीयम्' इति न वदेत् । केनापि निर्मितं भवतु देवस्थानं तत्तु दशजनभक्तानां सम्बद्धम् ।'

'अस्तु । तस्याः पम्प्योजनम् अनुचितम् इति वदसि खलु ? कुतः ?'

'तत् देवतीर्थम्, देवस्नानाय इति निर्मितम् । भक्तादिभिः, गोभिः पातुं केवलं तस्य उपयोगः भवेत् । तत् कोऽपि पिबति चेत् तीर्थम् इत्येव पिबेत् । तत्र त्वया पम्प्योजनेन स्वकेदारेषु कृष्यर्थं न उपयोक्तव्यमासीत् । अधुनापि अहं वदामि । अस्यामेव सानौ आवश्यकं चेत् जलनेत्रवतीं भूमिं संशोध्य ददामि । त्वं तत्र कूपं खानय । समृद्धजलम् आयाति । तदेव पम्प् उत्पाट्य अत्र योजय ।'

'तस्याः कल्याण्याः जलं कृषिकर्मणि उपयुज्यते चेत् का हानिः स्यात् ?'

'हानेः प्रश्नः न । देवस्य कृते निर्मितं देवकर्मणि केवलम् उपयोज्यम्, अन्यत्र उपयोगः न भवेत् । तव पितामहः धर्मकर्म इति कृतवान् । तस्याः उपयोगं त्वं स्वीकरोषि चेत्

तस्य धर्मः एव प्रत्यादत्तः इव भवेत् । अन्यच्च गिरिपर्वताः, नदीतटम् इत्यादिस्थले मन्दिरं निर्मितं चेत् तत्र मनुष्योपयोगि किमपि कर्म न भवेदेव । भक्तिपूजादिपुरस्काराय केवलं तत् स्थलं विशेषतः संस्थाप्यम् ।'

'एतानि वचनानि मयापि श्रुतानि । किन्तु वद' – काळिङ्गः रभसेन सोफायाम् उपविशन् अपृच्छत् – 'तस्याः कल्याण्याः निर्माणाय कियान् व्ययः जातः ?'

'तस्य गणनं कियत् ? नियमवाचा अहं न जानामि । गौडज्जः कदापि धर्माय विहितस्य व्ययस्य गणनं न करोति स्म । स्वयं जानाति चेदपि अन्येषु न वदति स्म । देवस्थानं, कल्याणी – इति द्वयं संहत्य, तक्षकाय त्वष्ट्रे च दत्तं धनम् अहं जानामि । वृषभाः, शकटानि, कर्मकर्यः, कर्मकराश्च भृत्यं विना कर्म कृतवन्तः । एतत् सर्वं गण्यते चेत् मम ऊहे केवलं कल्याण्याः अष्ट सहस्राणि भवेयुः ।'

'अष्टसहस्रस्य वृद्धिः वर्षस्य कियती स्यात् ? वित्तकोशे एव अष्टशतं भवेत् खलु ?'

'देवकर्मणि धनव्ययस्य गणनमेव न कृतं चेत् वृद्धेः गणनं कुतः स्यात् ?'

'ते न गणितवन्तः । त्वं मया कृतं व्यवहारमपि न जानासि । तस्य प्रतिशतं द्वादशवृद्धिः देया अस्ति । एतावतीं भूमिं समीकर्तुम्, ट्र्याक्टर्‌यन्त्राय, पम्प्‌क्रयणाय फार्म्‌गृहाय, उर्वराय बीजाय वा धनं कुत्र आसीत् ? ट्र्याक्टर्, पम्प् उपर्यपि दशसहस्राणाम् ऋणम् अस्ति । स्थितं धनं सर्वं पितामहः दानरूपेण दत्त्वा गृहं रिक्तं कृत्वा मृतः । मम गृहागमनदिने षट्शतं रूप्यकाणि अवशिष्टान्यासन् । अधुना त्वदुक्तरीत्या अन्यं कूपं खानितुम् अष्टसहस्रं दशसहस्रं वा रूप्यकाणि आवश्यकानि भवेयुः । अन्यच्च अस्माभिः खाते भूतले जलम् उपलभ्यते इत्यत्र प्रमाणं किं स्यात् ? तदर्थं धनं कुतः स्यात् ?'

वेङ्कटरमणेन न भाषितम् । उत्तरं न जानाति इति न । किन्तु तत्क्षणं मनसि भासितस्य वचनरीतिं निरीक्षते स्म । तावता काळिङ्गः एव अनुवर्तितवान् – 'देवस्थानस्य जलं देवकार्यार्थं केवलम्, अन्यत्र कुत्रापि उपयोगो न स्यादिति वदसि खलु ? एषः तु पुरातनकालस्य विश्वासः । मया प्रतिदिनम् उन्नीतं चेदपि इयं कल्याणी प्रातःकाले पुनः जलेन पूर्णा भवति । तत् तथैव स्थातव्यम् इति नाम एकया रीत्या लग्शुरि । अस्माकम् अस्मिन् दुर्गतदेशे एवंरीत्या वैभवं न शक्यम् । तव कथनबिन्दुः कः ? स्फिरिच्चुयालिटि उत परमार्थः, जीवनोपयोगश्च उभौ भिन्नौ भवेताम् इति । तथा स्थितिः अनुचिता । परमार्थाय यत् अस्ति तत् जीवनस्यापि उपयोगि भवेदेव ।'

तस्य वचनं निवार्य वेङ्कटरमणः अवदत् – 'तत् तिष्ठतु । त्वम् इदानीम् एव अवदः

खलु ? गृहागमनावसरे केवलं षट्शतरूप्यकाणि आसन्निति । एतत् सर्वं साधयितुं पञ्चविंशतिसहस्रम् ऋणम् आनीतम्, उपरि दशसहस्रम् ऋणं विद्यते इति । नानीतं चेत् किं भवेत् तव ? पूर्वजानां सम्पत्तिः न्यूना अस्ति किं तव ? गृहोपयोगाय जातम् उत्पन्नं विहाय अवशिष्टं धान्यं विक्रीयते चेत् द्वित्रसहस्राधिकं हस्तगतं भवेत् । एषः सर्वः व्यवहारः कुतः अपेक्षितः ? एतस्यां नूतनभूमौ गावः सुखेन अचरिष्यन् ।'

काळिङ्गः एतत् वचनम् उपहसितवान् । 'एतादृशमनोभावेन एव अस्माकं देशः पृष्ठतः स्थितः । अस्मिन् देशे स्थितानां जनानाम् अत्र प्रवर्धितः आहारः न पर्याप्तः इति त्वया न ज्ञायते किम् ? स्थितमेव पर्याप्तम् इति अल्पतृप्तिः यावन्न गच्छेत् तावत् अस्मद्देशः पुरोगामी न स्यात् ...।'

तावता ट्र्याक्टर्चालकः जमालः अन्तः आगतः । काखि–ऊरुकं युतकं च धृतवतः तस्य मुखं स्विन्नम् आसीत् । काळिङ्गं सलामेन नत्वा सः अवदत् – 'द्वादशवादनम् अभूत् । उपाहारोऽपि न प्राप्तः । अद्य उदरं ताडनमनुभवतीव ।'

कदाचित् तथा भवति स्म । काले काले सर्वं सज्जीकृत्य प्रेषणं तायव्वया न शक्यते स्म । अन्यच्च जमालः इतरे इव रागिरोटिकाः न खादति । तस्मै भोजनस्य खाद्यस्य अत्र आनयनं गृहस्य इतरभृत्यानां कार्यम् आसीत् । ते कतिपयदिनेषु बुद्ध्या एतस्मै शून्यं कुर्वन्ति । काळिङ्गः वेङ्कटरमणं निवेदितवान् – 'सम्प्रति तावत् द्वादशवादनम् अभूत् । तव हस्ते स्थितं प्रसादं त्वमेव भक्षय ।'

'न, अहं गृहं गत्वा भोजनं करोमि ।'

'तर्हि तत् जमालाय देहि । दध्यन्नम् उभाभ्यां भक्षितुम् अलम् । अतीव रुचिकरतया व्याघरणमपि योजितमस्ति । भक्षय जमाल !'

वेङ्कटरमणः आतङ्कितः इव अवदत् – 'एषः मुसल्मानः खलु ?'

'कुतः ?'

'एषः देवस्य प्रसादः ।'

'देवप्रसादः मुसल्मानाय न देयः इति शास्त्रं विद्यते किम् ?'

'न तथा । यः देवस्थानम् आगत्य कराभ्यां नमस्कृत्य तीर्थं न स्वीकुर्यात् तस्मै प्रसादोऽपि न देयः । सः अस्माकं देवं न कराभ्यां नमति खलु ?'

'वेङ्कटरमण, त्वम् एवंविधं भेदं किमर्थं करोषि ? तव हस्ते स्थितम् एकं ग्रासान्नं

बभुक्षिताय दातुम् एतत् शास्त्रं कुतः ?'

'केवलम् अन्नं चेत् कस्मैचिदपि दातुं शक्यम्। बभुक्षिताय तत्क्षणं देयमिति शास्त्रमेव अस्ति। किन्तु एतत् केवलं नान्नम्। त्वं स्मरसि किम् ? त्वं यदा प्राथमिकशालायां पठन् अस्माकं गृहे मध्याह्ने भोजनं कृतवान् खलु ? तदा अस्माकं पितामहस्य, पितामह्याः वा श्राद्धदिने तुभ्यं भोजनं न वितीर्यते स्म। तस्य उद्देश्यं किमिति चेत् अस्मत्पितरः अस्माकं तावत् देवाः। बाह्यानां ते देवाः न भवेयुः। नाम बाह्याः तान् देवाः इति न मन्यन्ते। तेषां तस्य देवस्य प्रसादभक्षणे अधिकारोऽपि न विद्यते। श्राद्धदिने अस्मज्जातीयाः अपि अस्मत्कुटुम्बस्य असम्बन्धिनः भोजनं न कुर्वन्ति। तथैव एतदपि। पुण्यकोटिदेवस्थाने गां देवं भावयति चेत् जमालः तस्य अत्र प्रसादे अधिकारोऽस्ति। नो चेत् कथं दातुं शक्येत ?'

'वेङ्कटरमण, किञ्चित् अन्नम् अवशिष्टं वर्तते खलु इति उच्यते चेत् त्वं पितृ-पितामह-प्रपितामहानां तिथिशास्त्रं सर्वं वदसि' इति वदन् काळिङ्गः जमालाभिमुखं परिवर्त्य 'गच्छ, पाकगृहे स्वल्पं सुपिष्टकं स्यात्, स्वीकृत्य खाद। अद्य मध्याह्नानन्तरं ट्र्याक्टर्कार्यं किमपि न विद्यते। ग्रामं गत्वा भोजनं कृत्वा मह्यमपि किञ्चित् आनय।'

जमालस्य पञ्चत्रिंशत् चत्वारिंशत् वा वर्षाणि स्युः। स्वच्छतया मुखक्षौरं विधाय श्मश्रु धरति। इतःपूर्वं लारीचालकः आसीत्। अधुना काळिङ्गगृहे भृत्यतां न वहति। किन्तु मासिकवेतनधारी कर्मचारी अस्ति। वेङ्कटरमणजोयिसस्य वचनेन तस्य आत्माभिमानस्य घातः इव जातः। एतं जोयिसम् अपाङ्गेन पश्यन् सः पादत्राणसहिताभ्यां पद्भ्यां पाकगृहं गतः। एकक्षणानन्तरं काळिङ्गः वेङ्कटरमणम् अपृच्छत् – 'एतादृशः भेदः केवलम् अस्माकं धर्मे एव खलु ?'

'अस्मद्धर्मे केवलम् उत अन्यधर्मेषु विद्यते इति कथमहं जानामि ? अरुणदेशस्य द्रष्टा त्वमेव वद।'

काळिङ्गस्य स्वात्मन्येव आलोचयतः स्मृतिपथे आगतम्, क्रैस्तदेवालयाय यं कमपि प्रवेशयन्ति। किन्तु होलिकम्युनियन् इत्यत्र तु क्रैस्तभिन्नान् न प्रवेशयन्ति। तत्र दीयमानं ब्रेड् वैन्रसं च न ददति। एतच्च अमेरिकायां तस्य अनुभवे आगतम्। मुसल्मानाः अपि तादृशीमेव पद्धतिम् अनुसरन्ति इति कुत्रचित् श्रुतम्। किन्तु तस्य विवरणं स्मृतौ नागतम्। तावता जमालः पाकगृहात् बहिरागतः – 'साहब्, ब्रेड् शुष्कम् अभवत्। अहं ग्रामं गत्वा भोजनं करोमि। तथैव अग्रहारसकाशमपि गत्वा सायम् आगमिष्यामि। व्यर्थं

मह्यम् एकं रूप्यकं दीयताम् ।'

काळिङ्गात् धनं प्राप्य सः प्रस्थितः । वेङ्कटरमणः अवदत् – 'नाम अधुना तवापि भोजनं नास्ति इत्युक्तं भवति । अहं ग्रामं गच्छामि । एतं प्रसादं त्वं स्वीकुरु । एकं पात्रम् अस्ति चेत् आनय ।'

'कथमपि द्वाभ्यां पर्याप्तम् अस्ति । त्वमपि भक्षय, सहैव खादावः । अन्तः तु नलिका विद्यते । कल्याण्याः जलं तत्र आगच्छति ।'

'अस्तु, किन्तु तत् नलिकाजलं मह्यं मास्तु । चल, द्वावपि कल्याणीं गच्छाव । तत्रैव तटे उपविश्य खादाव ।'

काळिङ्गः गृहस्य तालिकां योजितवान् । द्वावपि पार्श्वेषु गच्छन्तौ नलिकासमीपे एव पुलिनराशिम् आरुह्य आगमनावसरे पम्प्यन्त्रम् इतोऽपि चलत् आसीत् । 'तत् किञ्चित् स्थगय । देवकल्याण्याः समीपे प्रसादभक्षणावसरे तु शान्तता भवेत्' इति वेङ्कटरमणेन उक्ते काळिङ्गः तत् स्थगितवान् । तेन अवचित्य आनीतयोः बृहत्पलाशदलयोः वेङ्कट-रमणः दध्यन्नं परिवेषितवान् । द्वावपि सकृत् भक्षयित्वा, पुनरपि वितीर्य समापितवन्तौ ।

अन्तिमभक्षणावसरे काळिङ्गः अपृच्छत् – 'वेङ्कटरमण, तव पर्णे स्थितम् अन्नं स्पृशामि चेत् त्वं भक्षयसि किम् ?'

'अमेरिकां गत्वा आगतः इति तु सत्यम् । किन्तु कुतः स्प्रष्टव्यं वद । स्पर्शेन विना तव हस्तः दशति किम् ? एषा तु बालचेष्टा ।'

काळिङ्गः तावता मौनी अभवत् । द्वयोरपि उदरं पूर्णं जातम् । उभावपि कल्याणीम् अवतीर्य अञ्जलौ उन्नीय जलं पीतवन्तौ । कथमपि पुनरपि आगतमेव इति वेङ्कटरमणः देवस्थानं गत्वा अग्रिमाङ्गणस्य बृहद्घण्टां सुष्ठु वादयित्वा, मन्दिरस्य द्वारम् उद्घाट्य, इतोऽपि ज्वलति बृहद्दीपे नीपतैलं प्रपूर्य, देवं कराभ्यां प्रणम्य, द्वारस्य तालिकां संयोज्य आगतः । तावता काळिङ्गः फार्म्प्रदेशे अवतीर्य आलुककन्दं परीक्षमाणः आसीत् । प्रसादपात्रे बद्धं चतुरस्रवस्त्रं जले आर्द्रं कृत्वा तत् शिरसि आच्छाद्य वेङ्कटरमणः ग्रामाभिमुखः अवतरितुम् प्रारभत ।

## 3

स्वस्य विवाहः संवृत्तः इति काळिङ्गः एतावद्दिनेष्वपि नावदत् इति वेङ्कटरमणस्य असमाधानम् इव अभवत् । अमेरिकातः आगमनानन्तरं तस्य योजनासु या कापि केनचिदपि न ज्ञायते एव । तेन क्रियमाणं कार्यमनुसृत्य ताः इतरैः अवगन्तव्याः भवेयुः । तस्य मनोभावः पूर्वं यथा तथा न विद्यते । पूर्वम् अन्ये इव विद्यमानः अधुना एवं कथं जातः ? इति आलोचनया सह वेङ्कटरमणस्य मनसि इतोऽपि कुतूहलम् उद्गतम् । विवाहविषयं गृहे मात्रे निवेदितवान् वा न वा ? काळेनपल्लीं गतवतः तस्य तावता एव पञ्चदश दिनानि गतानि । उक्तमपि स्यात् । किन्तु तायव्वया किमिति भावितं स्यात् इति तस्य मनः कल्पयितुम् आरभत । अनन्तरदिने सायं सः काळेनपल्लीं गतः । तायव्वा आसनपीठं कल्पितवती । योगक्षेमं विचार्य सः अवदत् – 'पुत्रस्य विवाहः न विधीयते किं तायव्वे ?'

उत्तररूपेण सा ललाटं संस्पृश्य उभावपि करौ चालितवती । तस्य अर्थम् सुष्ठु अजानन् 'कुतः, सः तव वचनं न शृणोति इति किम् ?' इत्युक्ते सा 'आम् आम्' इति शिरः कम्पितवती । विषयः तया न ज्ञातः इति सः अजानात् । वक्तव्यम् इति जिह्वा प्रवृत्तापि किमपि अनुक्त्वा मौनी अभवत् । तायव्वा स्वश्वश्रूश्वशुरयोः मरणं स्मरन्ती दुःखम् आवेदयामास । काळिङ्गेन गोष्ठगताः गावः विक्रीताः इति पुनरपि निवेदितवती । एतस्मिन् विषये काळिङ्गः प्रष्टव्यः इत्यासीद् चेदपि वेङ्कटरमणेन ह्यस्तनदिने तेन सह संलापावसरे न स्मृतम् । अन्यस्मिन् दिने प्रष्टव्यम् इति निर्धारितवान् ।

तायव्वया साकं संलापानन्तरं बहिः आगमनावसरे वीथ्यां वेङ्कटगौडः प्राप्तः । 'बहूनि दिनानि व्यतीतानि आगतस्य भवतः । आगच्छतु स्वामिन्' इति गृहं नीतवान् । तस्मिन् वर्षे इतोऽपि अवशिष्टान् वृष्टियोगान् विचार्य, सस्यस्थितिनिवेदनानन्तरम् अपृच्छत् – 'तस्य कार्यभारः दृष्टः किम् ?'

'आम्, पश्यन्नेवास्मि खलु तावत् ?'

'देवस्य कल्याण्यां पम्प्नियोजनेन जलं प्राप्नुवन्नस्ति इति । मन्दिरं कल्याणी – सर्वमपि स्वनाम्नि कृतवानिति ।'

'हुम्, मया ह्यः ज्ञातम् । अहमपि तस्मै तत् अनुचितम्, तथा न कार्यम् इत्युक्तवान् ।'

'धर्मार्थं तस्य पितामहः निर्मितवान् । ग्रामीणाः सर्वे तदर्थं स्वल्पतया श्रमकर्म

कृतवन्तः खलु ? गत्वा तस्य मत्पत्नीपुत्रस्य कपालं ताडयित्वा तत् यन्त्रं न उद्यच्छेत् किम् ?'

एवं बलप्रयोगेण कलहः कार्यः इति वेङ्कटरमणेन नालोचितम् । किन्तु जलस्य पम्प् अपनेतव्यम् इति तस्य स्पष्टः अभिप्रायः अपि आसीत् । ग्रामस्थाः सवे सम्मिल्य काळिङ्गं वदेयुः इति आलोचनायाम् एव वेङ्कटेगौडः अवदत् – दासीपुत्रः भुषुण्डिकाम् आनीय स्थापितवान् इति, सत्यं किम् ?'

'आम्, अहमेव दृष्टवान् ।'

'उपायुक्तस्वामिना सह आसन्दे उपविशति इति सत्यं किम् ?'

'आम्, शानुभोगेन तथोक्तं श्रुतम् ।'

'एतादृशं दासीपुत्रं किं कर्तुं शक्यते स्वामिन् ?' इति सः काळिङ्गस्य निन्दया केवलं समाहितः अभवत् । अग्रे किमपि कर्तव्यमिति किमपि वचनं तस्य मुखात् न उद्गतम् ।

वेङ्कटरमणः एव 'ग्रामस्थाः सर्वे मिलित्वा तस्मै किञ्चित् सरभसम् उक्त्वा पश्यन्तु, दश जनान् अग्रे कर्तुं सोऽपि बिभियात्' इत्यवदत् ।

'ग्रामजनाः सर्वे तस्मात् बिभ्यति स्वामिन्, भवान् न जानाति ।'

'कुतः बिभियुः ?'

'तस्य वेषः, तस्य सकाशे विद्यमानं कर्षणयन्त्रम्, भुषुण्डिका, उपायुक्तस्वामिना साकम् उपवेशनम् इत्यादि श्रुत्वा एव बिभ्यति ।'

वेङ्कटरमणस्य आश्चर्यम् अभवत् । किन्तु सः यथार्थः विषयः अपि आसीत् ।

तथा पश्यति चेत् काळेनपल्लीजनाः सर्वे पुरुषहृदयाः भृत्याः । तेषां गृहाणाम् एकापि सन्तानपराम्परा एकं व्याघ्रम् उत एकं तरक्षुं कुन्तेन मारितवन्तः एव तत्र ग्रामे स्थिताः । एषः वेङ्कटेगौडः अपि अल्पधैर्यवान् पुरुषः नासीत् । पञ्चाशत्तमे वर्षे वयस्यपि अधुनपि यावत्यामपि कालरात्रौ एकाकी एव कियदपि मैल्दूरं पद्भ्यां गच्छेत् । दीर्घदीर्घतरानपि नागसर्पान् सकृदेव ताडनेन शाययति । यावत्सु प्रसङ्गेषु जीवत्सर्पस्य पृच्छं गृहीत्वा रजकाः यथा वस्त्रं ताडयन्ति तथैव उन्नीय ताडितवान् अस्ति । 'एतादृशः पुरुषजातीयः भवान् काळिङ्गस्य भुषुण्डिकायै कुतः बिभियात् ? भुषुण्डिका अस्तीति यं कमपि घातयति चेत् सर्वकारीयाः तमेव शूलम् आरोपयेयुः । भुषुण्डिका इत्येतत्

व्याघ्रात् उत नागसर्पादपि क्रूरं किम् ? भवान् यादृशव्याघ्राणां तरक्षूणाम् उपरि वा पतित्वा ताडितवतां वंशे स्थितः ।'

'तस्य आधीन्ये यादृशं यन्त्रमेव विद्यते स्वामिन् ! बडबडबड इति भूतलमेव उत्पाट्य कर्षति तावत् ।'

'भूकर्षकयन्त्रम् अस्तीति भवान् कुतः बिभियात् ।'

'वयमपि न जानीमः स्वामिन् ! अस्मद्ग्रामसमीपात् मोटर्यानस्य गमनम् आरब्धं पश्यतु । ग्रामपुरुषाः एकदा तदुपरि उपविश्य विपणिसमीपं गत्वा आगताः । तद्दिनात् आरभ्य तेषां मोटर् इत्यपि भयम्, काळिङ्गः इत्यपि भयम् ।'

वेङ्कटरमणस्य एतस्य अर्थबोधः न जातः । किन्तु यथार्थम् आसीत् । ग्रामपुरुषाः सर्वे संहत्य काळिङ्गं ताडयेयुः इति तस्य चिन्तनं नासीत् । ग्रामजनसंहतिपुरतः तम् आहूय, देवस्थानस्य कल्याण्यां योजिता जलोन्नयनी निष्कासितव्या, घातकेभ्यः गोविक्रयणम् अपराधाय इति अभ्युपगम्य इतःपरं तथा न क्रियते इति भाषा देया इति कृतं चेत् पर्याप्तम् । ग्रामसंहतेः पुरतः यः कोऽपि बिभियात् एव । एषः अपि बिभेति इत्यस्मिन् विषये तस्य विश्वासः आसीत् । किन्तु काळिङ्गेन ग्रामात् सार्धैकमैल्दूरे खलु फार्म्गृहं निर्मितम् ? तत्रत्यां सोफां पश्यति चेत् सः अरुणपत्न्या साकं तत्रैव वासं कुर्यात् इति भासते । ग्रामाद् बहिः स्थितस्य ग्रामसंहतिस्थाः किं कर्तुं शक्नुयुः ? ग्रामः येन नापेक्षितः तस्य ग्रामभयम् अपि नास्ति ।

सद्यः किं कर्तव्यम् इति तेन न ज्ञातम् । वेङ्कटेगौडाय द्वित्राणि धैर्यवचनानि उक्त्वा स्वग्रामं गतः ।

# दशमः अध्यायः

## 1

यानमार्गस्य तटे लोकयानात् अवतरणानन्तरं काळिङ्गः शिशुम् उन्नीतवान्। तस्य पत्नी हिल्डा एकं स्यूतं हस्तेन गृहीतवती । मार्गसमीपे आगतः जमालः चर्ममञ्जूषां भृत्यस्य निङ्गस्य शिरसि आरोपितवान्। मञ्जूषावाहिनः निङ्गस्य आश्चर्यम्। एतादृशीम् अरुणवर्णां स्त्रियं स स्वजन्मनि एव न दृष्टवान् आसीत्। मनुष्याः एतावदरुणाः भवेयुः इति कल्पना अपि यथा आगच्छेत् तादृशप्रसङ्गः अपि एतावत्पर्यन्तं नागतः । तस्याः दर्शनात् तत्क्षणं तस्य भयं गौरवं च अभवत्। किन्तु सा न शाटिकां धृतवती, अपि तु भुजात् जानुपर्यन्तम् एकमेव युतकं – तत् किमिति वक्तव्यम् ? सः न जानाति – किमर्थं धृतवती इत्यत्रापि आश्चर्यम् अभवत्। तस्याः पादौ अपि कीदृशारुणौ । काळिङ्गस्य बाहुगतः शिशुः अपि कियान् अरुणः ? 'नाटके इन्द्रकुमारः अपि एवं न स्यात्। रम्भा अपि एवम् अरुणा न स्यात् !' इति विस्मयम् आवहन् पेटिकां सन्धार्य सः पृष्ठतः पृष्ठतः गतः ।

'फार्मगृहस्य पुरतः स्थित्वा एकदा सावकाशं परिभ्रम्य दृष्ट्वा एकवारम् उच्छ्वसन्ती सा काळिङ्गम् अवदत् – 'डियर्, हौ एग्सैटिङ्ग् !'

'रियलि ?' – इत्यपृच्छत् सः ।

'यु आर् सो ब्याड्। यु डिण्ट् टेल् मि इट् वास् सो एग्सैटिङ्ग् !' इति वदन्ती सा उभावपि हस्तौ शब्दायमानौ ताडयित्वा तथैव गृहीत्वा स्थिता ।

अन्तः गत्वा सा गृहे एकवारं परिभ्रम्य अवलोक्य 'नैस्' इत्यवदत्। काळिङ्गः धन्यताभावम् अनुभवन्नासीत्। सा स्नात्वा अन्यत् स्कर्ट् यावत् धरति तावत् स्वसहितम् आनीतं सुपिष्टकं काळिङ्गः एव छुरिकया कर्तयित्वा तदुपरि जेल्ली प्रसार्य सज्जम्

अकरोत् । अनन्तरं चुल्लिं ज्वालयित्वा क्षीरं तापयितुं स्थापितवान् । शिशवे कूपीं दत्त्वा उभावपि उपाहारं स्वीकृतवन्तौ । क्षीरपानानन्तरं हिल्डा बहिः आगता । सा द्रष्टव्या इति तावदेव कर्मकराः सप्ताष्टजनाः भृत्याः बहिः सङ्गताः । हिल्डा तत्र दृष्टिं न प्रसारितवती । वामपार्श्वे कुट्यां स्थापितस्य ट्र्याक्टर्‌यन्त्रस्य समीपं गता । शिशुः मञ्चे शयित्वा कूपीं पिबति स्म । कालिङ्गः ताम् अनुसरन्नासीत् । 'वाट् मेक् ईस् दिस्' इत्युक्त्वा सा ट्र्याक्टर् आरुह्य चालितवती । तत् बडबडबड इति ध्वनत् चलितुम् आरभत । सा तत् किञ्चित् दूरम् अग्रे चालितवती । तत्रत्यानां सर्वेषां भृत्यानां न केवलम् आश्चर्यम्, अपि तु तस्याः अग्रतः तेषां नतभावः जातः । समीपे एव एकं भ्रमणं विधाय ट्र्याक्टर्‌यानं पुनः कुटीम् आनयन्ती सा तस्मात् अधः उत्प्लुत्य अवतीर्णा ।

समीपे आगतस्य कालिङ्गस्य हस्तं परिगृह्य 'तत्र दृश्यते खलु, तदेव किं देवस्थानम् इति ? आगच्छ, लेट्स् ह्याव् ए लुक्' इत्यवदत् ।

'सम्प्रति विश्रान्तिं स्वीकुरु । श्वः पश्याम' इति तेन उक्ते न निरुद्ध्य 'इट्स् सो एग्सैटिङ्ग् ! रोमाञ्चनं भवति । अधुना एव पश्याव, आगच्छ' इति तस्य हस्तं गृहीत्वा आकृष्य प्रस्थिता । 'मञ्चस्य उपरि शिशुः अस्ति । रोदिति चेत् पश्यत' इति भृत्यान् उक्त्वा कालिङ्गः तस्याः पश्चात् प्रस्थितः । एताभ्याम् उभाभ्यामपि आङ्ग्लभाषया भाष्यते इति भृत्याः जानन्ति । किन्तु तस्याः भाषायाः विषयेऽपि अर्थो न बुध्यते इति विस्मयश्च ।

तौ उभावपि सहितौ कल्याण्याः पुलिनाभिमुखं गतौ । सा अरुणकन्या कालिङ्ग-समाना उन्नता आसीत् । भृत्येषु एकः अपृच्छत् – 'किं पश्यसि, कथमस्ति कन्या ?'

'बिम्बफलमिव विद्यते तावत् । सा यन्त्रं कथं चालयति, दृष्टं किम् ?'

पृष्ठत एव स्थितः जमालः तान् तर्जयन् अवदत् – 'हे, सा एषा इति वक्तुं युष्मद्गृहस्य भृत्या इति भावयत किम् ? तस्याः नाम युरोपियन् लेडी इति । 'मेडम्' इति सम्बोधनीया । भुषुण्डिकां गृहीत्वा गम्यम् अनुलक्ष्य स्फोटयितुं जानाति सा, जानीत किम् ?'

तत् वचनं तेषु इतोऽपि अधिकं भयं विस्मयं च अजनयत् । जमालः अवदत् – 'मेडंसाब्स्वामिन्याः इङ्ग्लिष्भाषाम् अहमपि जानामि । अहं पूर्वं युरोपियन्स्वामिनां गृहे चालकः आसम् ।'

एतया मेडंस्वामिन्या जमालस्य अधिकारः इतोऽपि आधिक्यं प्राप्नोति इति सर्वैरपि ज्ञातम् । किन्तु तं ते न सहन्ते स्म । तेषु बुद्धिमान् निङ्गः अपृच्छत् – 'मेडं स्वयमेव यन्त्रं

चालितवती खलु ? तस्याः आगमनानन्तरं तव कार्यं किम् ? इतः त्वां प्रेषयन्ति । त्वं वयमिव मृदं स्पृष्ट्वा कर्म करोषि किम् ?'

एतत् वचनं श्रुतवतः जमालस्य मुखं तत्क्षणमेव म्लानं जातम् । अयम् अंशः तस्मिन् न स्फुरितः एव । लारिचालकवृत्तिं परित्यक्तवतः तस्य इतोऽपि पञ्च मासाः न अतीताः । जीवनस्य नान्या गतिः इति जाते एतत् ट्र्याक्टर्चालनकर्म प्राप्तम् । मासे सप्ततिः रूप्यकाणि । तस्य वासाय स्थलं दास्यते इत्युक्तमासीत् काळिङ्गसाहेबेन । एतावत्पर्यन्तं निःशुल्कं भोजनं लभते स्म । अधुना तु स्वस्य उद्योगः एव च्युतः भवति । साहेबेन असत्यम् उक्तं किम् ? तस्य तत्क्षणं चिन्ता लग्ना ।

## 2

कल्याणीं दृष्ट्वा हिल्डा अवदत् – 'एतस्याः विषये खलु त्वं मह्यं लिखितवान् ? जलम् अतीव शुद्धम् । जलस्य नेत्रं कथम् अस्ति ?'

'कियदपि जलम् उन्नीयताम्, एकस्यामेव रात्रौ पुनः पूर्णा भवति ।'

'वेरि फैन् ।'

देवस्थानस्य पुरतः स्थित्वा सा अपृच्छत् – 'एतदेव किं देवस्थानम्, त्वं पत्रे लिखित्वा बोधितवान् ? अन्तः स्थितः विग्रहः कथम् अस्ति ? कीदृशः विग्रहः सः ?'

'गोरेव मुख्यविग्रहः । त्रिमूर्तयः अपि सन्ति, नाम ट्रिनिटी अस्ति ।'

'डियर्, ट्रिनिटी ईस् आल् रैट् । नाम अस्य देशस्य जनाः अपि फादर् सन् एण्ड् होलि घोष्ट् विश्वसन्ति किम् ?'

'आम्, अन्यस्मिन् अर्थे ।'

'किन्तु एतत् प्राणिपूजनं कुतः ?'

'एतस्य एका कथा अस्ति । अस्मद्वंशस्य पूर्वजानां काले अस्मद्गृहे घटितमिति वदन्ति' – इति पुण्यकोटिकथाम् उक्त्वा, स्वपितामहेन देवस्थाननिर्माणकथायाः पृष्ठभूमिं विवृतवान् ।

'सो एग्सैटिङ्ग् ! वेरि रोमाण्टिक् ! किन्तु सा कथा इति अङ्गीकर्तुं शक्या । सत्या

घटना इति मत्वा पूजनं तु अन्धविश्वासः । एतत् सर्वं विश्वसिहि किं डियर् ?'

'अफ् कोर्स् नाट् ।'

'गुड् । एतस्य द्वारम् उद्घाटय । अन्तः कथमस्ति इति द्रष्टव्यम् ।'

'तालिकायाः कुञ्चिका अर्चकस्य हस्ते अस्ति । प्रतिदिनम् एतस्य पूजनाय व्यवस्थां कृत्वा अस्मत्पितामहः अर्चकाय दत्तिमपि त्यक्तवान् ।'

'फनि । किन्तु अतीव कुतूहलकरम् अस्ति । श्वः द्रष्टुं शक्यते खलु ?'

'हू, प्रातः अष्टवादने सार्धाष्टवादने वा द्रष्टुं शक्यं भवेत् । अर्चकः मम मित्रम् । इङ्ग्लिष् अपि सः जानाति । अस्य देशस्य शास्त्रं सम्बन्धः इति पुरातनकालगतम् अधीत्य ज्ञातवानस्ति ।'

देवस्थानस्य पुरतः स्थितं वृषभं सा 'इण्टरेष्टिङ्ग्' इत्यवदत् । तत्र स्थित्वा पश्यति चेत् तेषां नूतनं फार्म्, तस्मात् अनन्तरं गच्छन् सर्वकारीयमार्गः, मार्गात् अनन्तरं विस्तीर्णानि तेषां गोमालानि स्पष्टतया दृश्यन्ते । गोमालस्य अनन्तरवाटिकायाः अन्तरिता काळेन-पल्ली न दृश्यते स्म । सम्प्रति कृषिकर्म समाप्य फार्म्मध्ये आरोपितानि आलुकानि वृद्धिं प्राप्तुम् इतोऽपि द्वौ मासौ अपेक्षितौ ।

हिल्डा अपृच्छत् – 'मार्गात् अपरस्मिन् तटे दृश्यते किल, केवलं तृणानि यत्र प्रवृद्धानि, तत्र कुतः कर्षणं कृत्वा धान्यं नारोपितम् ?'

'अहं पूर्वमेव उक्तवान् खलु ? सर्वमपि एकदैव कर्तुं भण्डारः आवश्यकः । एतावतैव जातं पञ्चत्रिंशत्सहस्रम् ऋणं यथाशीघ्रं प्रत्यर्पणीयम् । अग्रिमवर्षाकालागमनं विना तस्य ट्र्याक्टर् योजनं न शक्यम् । तस्य अन्या जलव्यवस्था भवेत् । एतत् जलं पर्याप्तं न भवति । अन्यच्च गोचरणाय स्थलम् आवश्यकं खलु ?'

'अत्र धेनवः न दृश्यन्ते खलु ?'

'ताः इतोऽपि ग्रामे एव सन्ति । सावधानं तासां कृते एका कुटी निर्मातव्या । इतोऽपि कर्तव्यं कर्म पर्याप्तम् अस्ति । भूमिं सर्वत्रापि रासायनिकतया परीक्ष्य कुत्र कुत्र किं धान्यं सम्यक् फलति इति एतत् निर्णेतव्यम् । अहम् एकः एव सर्वमपि कर्तुं कथं शक्नोमि ? अधुना त्वम् आगता खलु । द्वन्द्वेन एतां भूमिं जयेव । अस्याः यावत् सत्त्वं तस्य एक्स्प्लाय्ट् कुर्वः । त्वमेव तस्याः मस्तिष्कम् ।'

'सो मच् थ्याङ्क्फुल् टु यु डियर्' इति कृतज्ञतया तस्य भुजसमं स्थित्वा सा तं

चुम्बितवती ।

अनन्तरं काळिङ्गः अवदत् – 'डार्लिङ्ग् ! विस्मृतं खलु ? अस्मिन् देशे यत्र कुत्रापि एवं न कर्तव्यम् । अतीव अन्धाचारवान् अयं देशः । जनाः उपहसन्ति ।'

'ए वेरि अन्एग्सैटिङ्ग् कण्ट्रि दिस् मष्ट् बि, अयं देशः प्रगतिं कथं गच्छेत् ? एतत् दारिद्र्यं कथं गच्छेत् ? एतत् दारिद्र्यं कदा गच्छेत् ? पश्चिमदेशेषु त्वमेव दृष्टवान् । जनाः कथं स्वतन्त्राः सन्ति !'

तस्मिन्नेव समये निङ्गः कल्याणीदिशा धावं धावम् आरुह्य आगच्छति स्म । तदैव सन्ध्या सञ्जाता । सूर्यास्तः सन्निहितः आसीत् । समीपम् आगतः निङ्गः अवदत् – 'पुत्रः एकतानेन क्रन्दन् अस्ति ।'

'त्वम् उन्नीय न समाश्वासितवान् किम् ?'

'अन्येषां समीपागमनमेव न सहते । उन्नयनाय गम्यते चेत् किट् इति आक्रोशति ।'

एतत् वचनम् आङ्ग्लभाषया पत्नीम् उक्तवान् काळिङ्गः । उभावपि अतित्वरया अवतीर्य पार्श्वे धावितवन्तौ । पत्युः अपेक्षया अग्रे तां धावन्तीं गृहस्य पुरतः स्थिताः भृत्याः कुतूहलेन पश्यन्तः आसन् । सा उन्नीय आगत्य लालयित्वा यदा ट्र्याक्टर्-उपरि उपवेशितवती तदनन्तरं शिशुः मौनी अभवत् । अनन्तरं हिल्डा पतिम् आवदत् – 'एवंविधः आकारः, एतद्वेषवन्तः जनाः वा जाकेन विचित्रतया दृष्टाः स्युः । तस्मादेव ते यदा उन्नेतुम् आगताः तदा रुदितवान् । एवं खलु ?'

'अथ किम् ?' इति उक्त्वा काळिङ्गः शिशुम् उन्नीतवान् । भृत्याः इतोऽपि तत्रैव स्थिताः । तेषां समीपमागतः काळिङ्गः – 'तावता कालेन किं कुर्वन्तः स्थ ? तदैव सूर्यः अस्तङ्गतः । चतुर्वादनतः केवलम् आलस्यं कृतवन्तः । रे निङ्ग, क्षीरं प्राप्तं किम् इति पश्य' इत्यवदत् ।

भृत्याः ततः प्रस्थिताः । जमालः केवलः तत्र आसीत् ।

'जमाल ! मार्गदिशि जलं सम्यक् नास्ति । श्वः सर्वं तत्रैव केवलं वाहय' इति उक्ते सः अपृच्छत् – 'साब्, भवान् माम् उद्योगतः च्यावयति इति सत्यं किम् ?'

'केन उक्तम् ?'

'मेडं साब् ट्र्याक्टर् चालयति । इतः त्वदीयं किमस्ति शिष्टम् ? गृहं गच्छ इति निङ्गः अवदत् । मेडंसाबागमनपर्यन्तं भवतः उद्योगः इति भवद्भिरुक्तं किम् ?'

'सः निङ्गः शिरःशूली दासीपुत्रः । तस्य वचनं किं शृणोषि ? मेडंसाबा ट्र्याक्टर्-चालनमेव न, तत् यत्र कुत्रापि त्रुटितं चेत् परिष्कर्तुमपि जानाति । किन्तु सा प्रतिदिनं कर्षणे एव मग्ना न भवति । व्यवस्थापनं तस्याः । पश्य, इतःपरम् अहं ग्रामे भोजनं न करोमि । मेडंसाबायाः यद् आवश्यकं तत् त्वम् आनीय दद्याः ।'

'किम् आनेतव्यम् ? वदन्तु । मोटर्यानेन विपणिं गत्वा आनेष्यामि ।'

'त्वं न जानासि किम् ? तस्याः प्रतिदिनं लाल्शाकम् आवश्यकम् ।'

जमालस्य इदानीम् अर्थबोधः जातः । तस्य मुखे शोभा अपि प्राप्ता । मुखेन मन्दहासं प्रकटयन् सः अवदत् – 'नगरे करीमः इति कश्चन अस्ति । प्रतिदिनं नूतनम् आनेतुं न शक्यते । दिनद्वयं यत् पर्याप्तं तावत् आनेतुं शक्यते । तत् पूतिगन्धि न भवेत् ।'

'पश्य, अस्य फार्म्गृहस्य तस्यां दिशि गृहाय पर्याप्ताः कुक्कुटाः एधितव्याः । उत्तमान् कुक्कटान् आदिश्य आगमिष्यामि । अस्माकं प्रतिदिनम् अण्डानि आवश्यकानि ।'

'अस्तु साब् । अहं सर्वं पश्यामि' – इति जमालः दायित्वम् अङ्गीकृतवान् ।

तावता हिल्डा समीपम् आगत्य 'रात्रौ भोजनव्यवस्था कीदृशी ?' इत्यपृच्छत् ।

'अद्य भवती विश्रान्तिं स्वीकरोतु । जमालः किमपि करोति' – कालिङ्गः अवदत् ।

## 3

अनन्तरदिने प्रातः पुरुषप्रमाणम् उन्नतिं गते काले देवस्थानस्य बृहद्घण्टा वादिता । तदैव उत्थाय दन्तधावनं कुर्वती हिल्डा अपृच्छत् – 'किमेतत् चर्च्घण्टा इव विद्यते ?'

'तत्र देवस्थानम् अर्चकः आगतः । सम्प्रति पूजा प्रचलति । आगच्छसि किम् ? दृष्ट्वा आगच्छाव ।'

शीघ्रमेव प्रातःकालिकीं काफीं पीत्वा शिशुम् उद्धृत्य उभावपि प्रस्थितौ । कल्याणी-समीपात् उन्नतस्थलम् आरुह्य, देवस्थानस्य उन्नतस्थलमपि आरुह्य आगमनावसरे अन्तः पूजा प्रवर्तमाना आसीत् । हिल्डा तं देवविग्रहम् अपश्यत् । काचित् चतुर्भुजा मूर्तिः । एकस्मिन् हस्ते यन्त्रस्य चक्रमिव आकृतिः । अन्यस्मिन् एकः शङ्खः । अधोहस्तः एकां नियुद्धगदां गृहीतवान् । अन्यस्मिन् कमलपुष्पम् । द्वितीयविग्रहस्य श्मश्रु आसीत् । तृतीयः विचित्रः एव आसीत् । अर्धनिर्वाणस्य तस्य पुरुषविग्रहस्य देहस्य आच्छादनाय

जरठं वस्त्रं केवलं लग्नम् इव आसीत् । किन्तु हस्तस्य आयुधेन सः कस्यचन अरण्यवासिनः अनागरिकस्य पुरुषस्य विग्रहः इव भाति । एतेषां त्रयाणामपि पुरतः एका धेनुः । अतीव लघुगात्रा । अमेरिकास्था इव अविद्यमाना भारतस्य गोः आकारः इव अङ्गाङ्गानि । तस्याः पुरतः एकः व्याघ्रः मृतः पतितोऽस्ति ।

अर्चकस्य वेषः अपि हिल्डायाः विचित्रः भाति । शिरसः अग्रभागस्य मुण्डनं विहितमस्ति । किन्तु पश्चाद्भागे सार्धैकवितस्तिदीर्घाः अविरलाः केशाः, केशाग्रे तु ग्रन्थिः बद्धा, समग्राः केशाः विक्षिप्ताः स्थिताः । ललाटे श्वेताः त्रयः आयतपट्टयः । भुजयोः, बाह्वोः, केशयुते वक्षसि च तादृश्यः एव आयतपट्टयः । परिहितम् आयतं श्वेतं वस्त्रं तु आकर्षकम् आसीत् ।

बहिः कोऽपि आगतः इति भासितेऽपि वेङ्कटरमणः स्वासक्ति स्वयमेव मन्त्रं पठित्वा पूजां कुर्वन्नासीत् । गन्धपुष्पधूपदीपनैवेद्यादिसमाप्त्यनन्तरं बहिः आगत्य, मन्दिरस्य पुरतः स्थितस्य वृषभस्य विभूतिं समर्प्य पूजयित्वा अन्तः गतः । पुनः स्थाल्यां घृतवर्तिकां प्रज्वाल्य नीराजनम् आरब्धवान् । तदा काळिङ्गः बहिः स्थितां बृहद्घण्टां वादयितुम् आरब्धवान् । तां वादयितुम् आशावती हिल्डा रज्जुं स्वहस्तेन गृहीत्वा चर्च्घण्टामिव मन्दं वादयितुम् आरब्धवती । मङ्गलनीराजनानन्तरं वेङ्कटरमणः स्थालीम् आनीय एतयोः पुरतः गृहीतवान् यदा तदा काळिङ्गः स्वस्य हस्तद्वयमपि ज्वालायाः उपरि चालयित्वा कराभ्यां प्रणतवान् । 'तथैव त्वमपि कुरु' इति उक्ता पत्नी 'अस्य कोऽर्थः ?' इत्यपृच्छत् । काळिङ्गोऽपि अर्थं न जानाति । 'कथमपि एवं करणीयम्, कुरु' इत्युक्ते तेन सा 'इण्टरेष्टिङ्ग्' इति उक्त्वा तथैव हस्तं चालितवती ।

अनन्तरं वेङ्कटरमणः तीर्थम् आनीतवान् । काळिङ्गेन तत् चुलुकेन स्वीकृत्य पानानन्तरं तस्याः पुरतः स्थित्वा उद्धरणं पूरितवान् । 'वाट् ईस् दिस् ?' इति तया पृष्टे वेङ्कटरमणः इङ्ग्लिषभाषया 'देवस्य पवित्रं जलम्' इत्यवदत् । काळिङ्गः 'एते विग्रहाः पूजातः पूर्वः क्षालिताः, तज्जलमिदम्' इति व्याख्यातवान् ।

हिल्डा स्वहस्तं पश्चात् आक्षिप्तवती । 'क्षम्यताम्, तावन्तम् अनारोग्यकरं पदार्थं नाहं स्वीकरोमि ।'

वेङ्कटरमणः मौनेन अन्तः गतः । काळिङ्गः बहिः गत्वा द्वे पलाशदले अवचित्य यदा आनयन् आसीत् तदा वेङ्कटरमणः गृहगमनस्य सज्जतां कुर्वन्नासीत् । तत् अज्ञात्वा काळिङ्गः 'अद्य कः प्रसादः कृतस्तावत् ? इत्यपृच्छत् । 'तुप्पाळेफलम्' इत्युत्तरं

प्राप्तम् ।

'तथा नाम कदलीफलं, गुडः, नारिकेलचूर्णं च – एतेषां मिश्रणम् । सुगन्धार्थं एलाचूर्णमपि योज्यते । खादने रुचिकरं भवति' इति पत्न्यै व्याख्याय तस्याः हस्तेऽपि पर्णं दत्त्वा कालिङ्गः प्रतिपालयन् स्थितः । किन्तु बहिरागतः वेङ्कटरमणः कालिङ्गस्य पर्णे केवलं प्रसादं वितीर्य प्रतिनिवृत्तः । हिल्डा म्लानमुखी जाता । कालिङ्गस्य आतङ्कः अभवत् । तेन एव कन्नडभाषया 'वेङ्कटरमण, एतस्यै प्रसादं न ददासि किम् ?' – इति पृष्टे वेङ्कटरमणः तयोः अभिमुखे प्रत्यावर्त्य स्थितः । एकक्षणं किमपि आलोचयतः तस्य मुखे असमाधानं पूर्णतया आसीत् । तत्क्षणम् इङ्ग्लिष्भाषया अवदत् – 'तीर्थं यः नेच्छति तस्य प्रसादः अपि नास्ति । अस्माकं देवे पूजायां वा ये न विश्वसन्ति तेषां प्रसादभक्षणाधिकारः नास्ति । अहं अस्यै न ददामि ।'

एतावत् उक्त्वा सः गर्भगृहस्य अन्तः गतः । प्रसादस्य स्थालीं चतुरस्रवस्त्रेण बद्ध्वा, गृहीत्वा अपरं चतुरस्रवस्त्रं स्कन्धस्योपरि आच्छाद्य बहिः आगतः । आगमनावसरे तेन दृष्टम्, कालिङ्गस्य पत्नी पादयोः रब्बर्पादुके धृत्वैव अन्तः आगता आसीत् । 'मार्गात् अपसरत । मया द्वारं पिधातव्यम्' इति वचनावसरे कालिङ्गः प्रसादपत्रं हस्ते गृहीत्वा तूष्णीं स्थितः आसीत् । हिल्डा तिरस्कारेण वेङ्कटरमणस्य गतिं निरीक्षते स्म । तयोः उभयोरापि द्वारात् बहिरागमनानन्तरं वेङ्कटरमणः घनतालिकां लगयित्वा, दीर्घां कुञ्चिकां स्वकट्याः परिधानसूत्रस्यान्ते निबद्ध्य रिक्तपादाभ्यां ततः प्रस्थितः ।

पञ्चनिमेषेषु बुद्धिहीनः इव स्थितः कालिङ्गः पत्नीम् अवदत् – 'डार्लिङ्ग् । त्वं शिशुना साकं गृहं गच्छ । अहं तेन साकं सम्भाष्य आगच्छामि ।'

'तेन अर्चकेन साकं किं सम्भाषणम् ?' इति सा तिरस्कारेण अपृच्छत् ।

'त्वं न जानासि । सः किमपि अन्यथा परिभावितवान् । अनन्तरं वदामि' इत्युक्त्वा पुनः भाषणाय अवसरम् अपरिकल्प्य बहिरागत्य पादयोः रब्बर्पादुके संयोज्य शीघ्रं शीघ्रम् अवतीर्य आगतः । वामहस्तेन गृहीतः प्रसादः तस्य हस्ते एव आसीत् ।

कालिङ्गस्य अमेरिकातः आगमनानन्तरं सः स्वस्य योजनाः कस्मैचिदपि अनिवेद्य स्वस्मिन्नेव निधाय कार्यं करोति स्म । उक्तेऽपि तस्य अर्थं बोद्धुं ग्रामे कोऽपि नासीत् । तत् विरोधयन्ति चेदपि अर्थं बुद्ध्वा न विरुध्यन्ति । अन्यच्च अमेरिकायाम् अधीत्य आगतस्य स्वस्य अन्धाचारमात्रानुसारिभ्यः एतेभ्यः वक्तव्यं किमस्ति इति भावनापि तस्य आसीत् । पञ्चपञ्चाशतः गवां घातकाय विक्रयणम् इति तेन सह वादार्थम्

आगतः वेङ्कटेगौडः अपि तेन विजयम् असम्पाद्य प्रतिनिवृत्तः आसीत् ।

किन्तु गतेषु सप्ताष्टदिनेषु एकस्मिन् दिने वेङ्कटरमणः 'अस्माकं देवं कराभ्यां यः न नमति तस्मै देवप्रसादमपि न ददामि' इति काळिङ्गस्य प्रार्थनां तस्य भृत्यस्य पुरतः एव तिरस्कृतवान् । तस्मात् दिनात् काळिङ्गः स्वबोधं विनैव वेङ्कटरमणेन आकर्षितः आसीत् । तस्य मनः तेनैव अनवगतया भावनया आक्रान्तमासीत् । तस्य पत्न्याः अत्रागमनपर्यन्तं तस्य स्वयं न कस्मादपि भेतव्यमस्ति, कस्यापि स्नेहं विनापि जीवेयम् इति भावना आसीत् । किन्तु मुम्बय्यीं गत्वा ताम् आनीय ह्यः तया साकम् एतां भूमिं यदा क्षुण्णवान् तदारभ्य किमिति न ज्ञायते स्वयम् एकाकी इति भावना मनसि लग्ना । रात्रौ पत्नीसहवासेन स्थित्वा बहुविचाराणां भाषणावसरेऽपि मनसः सा भावना तु न गता आसीत् । सा प्रतिघण्टं सुदृढा भवति स्म । तस्य फार्म्गृहे शयनम् इदम्प्रथमतया न, तथापि पूर्वं कदापि नागता एषा भावना तम् आरात्रि तुदति स्म ।

मध्येरात्रं तस्मिन् वेङ्कटरमणस्य स्मरणं प्राप्तम् । तस्य पावित्र्यम्, आचारः, विचारश्च काळिङ्गेन नानवगताः । तथापि सः एकः एव स्वस्य हिल्डायाः वा सुहृत् भवेत् इति मनः वदति स्म । अभिप्राये यावद्भिन्नत्वेऽपि तेन साकं सम्भाषमाणाः तत्र अन्ये ये केऽपि नासन् । वेङ्कटरमणस्य परिचयः हिल्डायै कर्तव्यः, सः यथा स्वगृहमागत्य गच्छेत् तथा कर्तव्यम् इति आलोचितवान् । किन्तु अद्य प्रातः तत् प्रारम्भे एव वैरस्याय प्रवृत्तम् ।

सः कल्याणीं वामदिशि विहाय वटवृक्षस्य अधः उल्लङ्घ्य सोपानसमीपं यदा आगतः तदा वेङ्कटरमणः तानि उल्लङ्घ्य अधः वटवाटिकायाः समीपे गच्छन् दृष्टः । एतेन उच्चस्वरेण 'वेङ्कटरमण' इत्यामन्त्रितेऽपि तत् तेन न श्रुतम् । काळिङ्गः शीघ्रं शीघ्रं धावित्वा वटवाटिकायाः समीपं यदा आगतः तदा वेङ्कटरमणः तटाकम् उत्तरन् आसीत् । पुनरपि काळिङ्गेन उच्चैः आहूते तत् तेन श्रुतम् । प्रतिनिवृत्य स्थितस्य तस्य समीपम् आगतः काळिङ्गः उच्छ्वसन् एव अपृच्छत् – 'वेङ्कटरमण, त्वं कुतः तथा कृतवान् ?'

'कथं कृतवान् ?'

'हिल्डायाः विषये तावत्कठिनतया सम्भाष्य मया सहापि असम्भाष्य आगतोऽसि ।'

'कठिनता का ? यदस्ति तदवदम् ।'

'सा परदेशस्था । अत्रत्यम् आचारं विचारं च न जानाति । ईषत् सहना स्वीकृता

स्यात् चेत् किं ते छिन्नं भवेत् ?'

एकं क्षणं मौनी वेङ्कटरमणः अवदत्। 'सा परदेशीया इति वदसि। परदेशीयायाः अस्मिन् देशे किं कार्यम् ? अत्र आगमनानन्तरम् अत्रत्यः आचारः, विचारश्च गौरवार्हः भवेत्। तीर्थं नाम देवस्य पवित्रोदकम् इति मम वचनस्य तत्क्षणमेव त्वम् एतस्य विग्रहस्य प्रक्षालितं जलम् इति व्याख्यानम् अकरोः। शिलाक्षालनजलं न आरोग्यकरम् इति मत्वा सा तथा कृतवती स्यात्। अपराधः तव।'

अधुना काळिङ्गस्य मनः लघु अभवत्। 'आम्, अपराधः मदीयः। अङ्गीकृतम्। तया अत्रत्यः विचारः न ज्ञायते। तां त्वमेव सावधानम् उक्त्वा बोधय।'

'मया किमर्थं बोधनीयम् ? तव पत्नीं त्वमेव उक्त्वा बोधय।'

गम्भीरतया प्रवृत्तस्य सम्भाषणस्य मध्ये काळिङ्गस्य सहसा हासः उद्गतः। किन्तु तं निवार्य अवदत् – 'त्वया एव बोधनीयम्। आदितः अस्मत्कुलपरम्परायाः भवन्तः एव पुरोहिताः खलु ? शास्त्रसम्बन्धी विषयस्तावत् बोधनीयः इति त्वदीयं कर्म।'

अनेन वचनेन वेङ्कटरमणस्य ईषत् अभिमानः इव जातः। तावत्तरे काळिङ्गः माम् अभ्युपगच्छति इति अवगमनेन किञ्चिदुच्छूनः जातः। 'किञ्चित् तिष्ठ, वदामि' – इति तेन उक्ते उभावपि समीपस्थस्य एकस्य नीपवृक्षस्य छायायाम् उपविष्टौ। स्ववामहस्तेन गृहीतं प्रसादं काळिङ्गः तृणानाम् उपरि संस्थाप्य तस्य पुरतः चक्रासनेन उपविष्टः। तस्य पुरतः त्रिवितस्तिदूरे उपविष्टः वेङ्कटरमणः अवदत् – 'पश्य, मया एकं दोषयुतं कर्म कृतमस्ति। अद्य तुभ्यं प्रसादं दत्तवान्। तद्दिनेऽपि दत्तवान्। मह्यं तस्मिन्नवसरे न भासितम्। त्वं देवप्रसादस्य नार्हः।'

सम्भाषणं पुनरपि गम्भीरं जातमिति काळिङ्गः पुनः सातङ्कः जातः। 'कुतः तथा वदसि ?'

'एतं विषयं त्वां वदामीति अहमेव तदा द्वयोः दिनयोः ग्रामम् आगतः। त्वं नासीः। ततः तव मुखमेव न लब्धम्। गोष्ठे स्थिताः वृद्धाः धेनूः घातकाय विक्रीतवान् इति।'

'पश्य, अस्मिन् विषये त्वं कं कं वादम् उपस्थापयसि इत्यहं जानामि। गृहे स्थितानि तृणानि सर्वाणि जरद्धेनुभिरेव चर्वितानि चेत् गोपालकस्य मम कष्टं त्वं न जानासि।'

'नाम एतद्विषये न मया वक्तव्यम् इति तव सूचना खलु ? अहं न भाषे अपि। किन्तु जानीहि, एतेन तव शुभं न भवेत्, तव कुलस्य शुभं न स्यात्। गौडज्जस्य वंशः सारोद्धारं

प्राप्य वर्धताम् इति अहम् एतावत्पर्यन्तं पूजावसरे सर्वदा प्रार्थये स्म । अयमेव मनोभावः त्वयि अस्ति चेत् गौडज्जः नरकं गच्छेदपि, सः वंशः न वर्धताम् ।'

एतेषां वाक्यानां श्रवणेन कालिङ्गस्य हासः, कोपः, खेदः, व्यसनम् इत्यादयः सम्मिश्रभावाः सञ्जाताः । वेङ्कटरमणः 'एतस्मिन् पलाशपत्रे स्थितं खलु रसायनम्, तत् त्वं मा भक्षय । जलं किमपि न सेचितम् । अहं प्रतिनयामि । तं स्प्रष्टुम् अधिकारः तव नास्ति' इत्युक्त्वा तत् उन्नीय एकेन हस्तेन गृहीत्वा, अन्येन हस्तेन चतुरस्रवस्त्रे बद्धं प्रसादपात्रं गृहीत्वा ततः उत्थाय प्रस्थितः ।

'किञ्चित् तिष्ठ' इति उच्चैः वक्तव्यमिति कालिङ्गस्य मनसि आगतेऽपि तस्य भाषणं न शक्यम् अभवत् । एतादृशम् अपमानम् अपजयश्च नानुभूतः तेन कदापि ।

## 4

अष्टमासवयसा पुंशिशुना सहितायाः तस्य पत्न्याः ग्रामागमनपर्यन्तं कालिङ्गः अरुणदेशे एव विवाहितः आसीदिति वार्ता न केनापि ज्ञाता आसीत् । किन्तु तस्याः आगमनदिने सायं भृत्याः ग्रामे सर्वत्र अवदन् – 'अरुणः इति न कुङ्कुमवर्णा, तथा अस्ति तावत् । यात्रोत्सवे लभ्यायाः कर्पूरपुत्तलिकायाः इव वर्णः । तथैव केशाः । तथाविधमेव परिकारमपि धृतवती' इति केनचित् वर्णिते 'छङ्ग् इति कथं ट्र्याक्टर्यन्त्रस्य उपरि उत्प्लुत्य चालितवती, पश्यत' इत्यपरः उक्तवान् ।

'तस्याः पतिः इव विचक्षणा अस्ति सा, पश्य । तया अज्ञाता विद्या एव नास्ति' तृतीयः योजितवान् ।

अरुणजनं द्रष्टारः बहवः जनाः नासन् ग्रामे । वेङ्कटेगौडः एकवारं जनपदकेन्द्रं गतः यदा तदा कश्चन अरुणाधिकारी दृष्टः, तस्य पत्नी तु न दृष्टा । कट्टेमने शिङ्ग्रिगौडस्य पुत्रः तम्मय्यः कदाचित् गजारोहसमारम्भं द्रष्टुं मैसूरुनगरं गतः आसीत् । तदा आङ्गल-स्त्रियः दृष्टाः आसन् । तत्स्मरणाधारेण कालिङ्गपत्नी अपि एतादृशी एव स्यात् इति वर्णयित्वा अवदत् ।

भृत्येन निङ्गेन 'भुषुण्डिकाम् आदाय लक्ष्यम् अनुसृत्य आकाशे डयमानान् अपि पक्षिणः वेधयति सा, किं जानासि ?' इत्युक्तं श्रुतवतां ग्रामजनानां तस्याः विषये

विद्यमानेन कुतूहलेन साकं भयमपि लग्नम् ।

एकस्मिन् दिने वेङ्कटेगौडः गृहमागत्य तायव्वाम् अपृच्छत् – 'अरुणस्नुषा आगता इति श्रूयते । दृष्ट्वा आगता किम् ?'

तायव्वा 'न' इति शिरः कम्पितवती । आगतायाः कालिङ्गस्य पत्याः तदैव षट् दिनानि अतीतानि । तस्याः आगमनं तिष्ठतु, तस्मात् दिनात् सोऽपि ग्रामं नागतः आसीत् । पर्याप्तं क्षीरं तावत् भृत्याः दुग्ध्वा नयन्ति स्म । यन्त्रक्षेत्रेषु श्रमकारिषु भृत्येषु केचन नित्यकर्मकारिणः आसन् । अन्ये एकद्वाजनाः गृहस्य भृत्याः । ते पुनः भोजनाय गृहमेव आगच्छन्ति स्म । कालिङ्गपत्न्याः आगमनानन्तरं न केवलं तस्मै, जमालायापि भोजन-प्रेषणबाधा निरस्ता ।

वेङ्कटेगौडः अवदत् – 'पौत्रोऽपि आगतोऽस्ति ।'

तायव्वा आमिति शिरः कम्पितवती । गौडः एव अवदत् – 'तत्रैव परिणीतवान् । पुत्रोऽपि अभवत् । अतः त्वरया ग्रामः आगन्तव्यः इति ज्ञानं कथम् आगच्छेत् ? अतः एव तावद्दिनानि तत्रैव आसीत् । न वा । पश्य तम्, ग्रामम् आगतस्य पञ्चषाः मासाः अतीताः । विवाहः संवृत्तः इति कण्ठः एव मुक्तः किं तेन गुरुघातकेन मत्पुत्रेण ?'

तायव्वा नेति शिरः योजितवती । वेङ्कटेगौडः 'अस्मज्जातौ सुन्दर्यः कन्याः न प्राप्यन्ते किम् ? ते अरुणजातीयाः जनाः गोमांसं भक्षयन्ति इत्यस्ति । इतःपरं गोष्ठस्थधेनवः तव पुत्रस्य स्नुषायाश्च भोजनाय भवेयुः' इत्यवदत् ।

एतद्वचनं श्रुत्वा तायव्वा हस्ताभ्यां स्वकर्णौ उभावपि पिहितवती । तस्याः कृते तादृश-वचनस्य श्रवणमपि पापकरम् आसीत् । किन्तु सा निरुपाया आसीत् । पुत्रः वृद्धधेनूः घातकाय विक्रीतवान् । ईदृशः सः स्वयमेव धेनूः घातयित्वा खादेदपि । अरुणदेशे सः एतावद्दिनेषु भक्षयित्वा एव आगतः' इति वेङ्कटेगौडः अवदत् ।

तस्यां रात्रौ पूर्णतः तायव्वायाः निद्रा नागता । मध्येरात्रं सा उत्थाय दीपं प्रज्वाल्य गोष्ठं गत्वा स्थिताः धेनूः गणयित्वा आगता । तत्र संहत्य चतुःपञ्चाशत् गावः, नवदश वत्साः च आसन् । स्मरणे सम्यक् तिष्ठतु इति सा अन्तरागत्य एकस्मिन् लघुपात्रे द्वाविंशतिं अवरेधान्यानि, नाम धेनवः, षोडश कुलित्थाः इत्युक्ते वृषभाः, षोडश मणयः इत्युक्ते प्रौढाः किन्तु इतोऽपि प्रबुद्धताम् अप्राप्ताः बलीवर्दाः, किञ्च नवदश तुवरधान्यानि इत्युक्ते लघुगात्राः ईषत्प्रौढाः वत्साः इति निक्षिप्य पिहितवती । तद्दिनात् प्रतिदिनं गवां गोष्ठागमनानन्तरं पात्रस्थैः धान्यैः गणनेन साकं गवां तुलनां करोति स्म । सप्ताष्टदिनेषु

तथैव दृष्ट्वा गणनं समानम् इति परामर्शनात् मनसि ईषत् शान्तिं प्राप्तवती ।

काळिङ्गस्य अरुणपत्न्याः अगमनस्य पञ्चदशदिनानि अतीतानि चेदपि सा वा काळिङ्गो वा ग्रामं नागच्छत् एव । आवश्यकानि वस्तूनि भृत्याः आगत्य नयन्ति स्म । गत्वा सा एकवारमपि द्रष्टव्या इति तायव्वाम् आशा बाधते स्म । अन्यच्च पुंशिशुः अरुणवर्णेन पूर्णः इति भृत्याः सर्वे वदन्ति स्म । स तु द्रष्टव्यः इति इच्छा सदा बाधते स्म । किन्तु स्वां कः आमन्त्रितवान् ? किञ्च पुत्रो भूतः पत्नीं शिशुं च – सा यादृशी अपि भवतु पत्नी – आनीय मात्रे दद्यात् । पुत्रेणैव अनपेक्षिता चेत् स्वयं कुतः तत्र गच्छेयम् ?

स्वस्याम् आपतितां स्थितिं चिन्तयन्ती सा कदाचित् एकाकिनी एव सती स्वल्पक्षणं रुदित्वा वस्त्राञ्चलेन नेत्रे परिमार्ज्य समाधानं प्रापयति स्म । पितामहः पितामही च यदि स्यातां सः एवं न कुर्यात् प्रायः । किन्तु तयोः मरणात् पूर्वमेव सः तत्र विवाहितः अभवत् खलु ! एतं विषयं ग्रामाय न निवेदितवानेव । स्नुषा सती सा तु एकवारम् अत्र आगत्य माम् अवलोक्य गन्तुं न शक्नुयात् किम् ? सहवासः मास्तु इति मया किं नु कथितम् ? एवंरीत्या आलोचनाः प्राप्य मनः सदा तुदन्ति स्म ।

## 5

परन्तु एकस्मिन् मध्याह्ने द्विवादनसमये काळिङ्गः गृहम् आगतः । तायव्वा तेन साकम् अभाषमाणा तूष्णीम् आसीत् । सः गोष्ठं गत्वा आगतः । गृहस्य प्रावारं, कुसूलं च दृष्टवान् । अनन्तरम् 'एतावत्सु दिनेषु अपि तत्र आगत्य तव स्नुषां, पौत्रं च दृष्ट्वा आगन्तुं न शक्यमासीत् किम् ?' इति स्तम्भम् उत भित्तिं वदन्निव अवदत् । तायव्वा किमपि संज्ञां कृतवती । सः तस्याः दिशां न दृष्टवान् । सः एव 'प्रतिष्ठस्व, इदानीं तत्र आगत्य गच्छ' इत्यवदत् । सा स्थिता एव सज्जा अभवत् । सः कण्ठम् उन्नीय ताम् अपश्यत् । तस्याः शिरः तैलम् अपश्यत् आसीत् । परिहिता शाटिका मलिना आसीत् । तदैव पाकगृहचुल्ल्याः भस्म अपनीय आगतेति दक्षिणकरः मषीमयः आसीत् । मुखस्य उपरि प्रातरारभ्य स्रुतः स्वेदः शुष्कतां प्राप्तः आसीत् । 'किञ्चित् स्नानं कृत्वा अन्यां शाटिकां परिधाय तु आगच्छ' इति पुत्रः अवदत् । माता स्नानगृहं गता ।

चुच्चलुदलसहितेन शिकायिचूर्णेन देहं सम्मर्ज्य, शिरः अपि प्रक्षाल्य सा अन्यां शाटिकां धृतवती । कङ्कतिकया शिरः प्रसाध्य प्रस्थानाय सज्जाभूत् । मातुः वेषविषये

इतोऽपि किञ्चित् उपदेष्टव्यम् इति काळिङ्गस्य मनसि आसीदपि सा इतोऽपि अधिकं वेषं धृतवती – इति न स्मरणे आगतम् । गृहे तालिकां संयोज्य तायव्वा पुत्रम् अनुसृतवती ।

ग्रामे न कोऽपि जनः आसीत् । महिलाः पुरुषाः इत्यारभ्य ज्येष्ठाः सर्वे केदारपल्वलेषु श्रमं कर्म कर्तुं गताः । शिरसः उपरि आतपः तपति स्म । काळिङ्गः पादयोः रब्बर्पादत्राणे संयोज्य शिरसि ह्याट् छादितवान् आसीत् । तायव्वायाः सः आतप एव नाभवत् । आर्द्रान् केशान् शुष्कतायै प्रसार्य रिक्तपादाभ्यां तस्य पृष्ठतः गता । सा पुत्रस्य एतत् नूतनं केदारम्, अथवा तस्य गृहं वा एकस्मिन् दिनेऽपि नापश्यत् । कर्षणयन्त्रं तु एकस्मिन् दिने ग्रामस्य अन्तः आगतम् आसीत् । तदा तद् यन्त्रं, तस्य पृष्ठतः स्थिताः बृहद्बृहद्दंष्ट्राः च दृष्ट्वा आश्चर्यचकिता आसीत् ।

एतौ यानमार्गस्य तटे स्थितायाः तन्त्रीवृतेः मध्ये स्थितं द्वारम् उल्लङ्घ्य अन्तः यदा गतौ तदा कर्षणयन्त्रं बडबडबड इति ध्वनत् आसीत् । समीपे गते तस्य चालिका सा अरुणस्त्री इति तायव्वया दृष्टम् । सा एव स्वस्य स्नुषा किम् ? इति कुतूहलात् वक्षसि डवडवशब्देन ताडनम् आरब्धम् । भयेन पाणिपादं सूक्ष्मतया कम्पितुं प्रारभत । तथापि सा पुत्रस्य पश्चात् पदं निहितवती । एतयोः तस्य समीपे एव गमनावसरे कर्षणयन्त्रं धूलिम् उद्गमयत् स्वयोः उपरि एव आगच्छेत् इव भासितम् इति तायव्वा तिर्यग्गमना अभवत् । तावता काळिङ्गः स्वपत्नीं किमपि उक्तवान् । यन्त्रं निश्चलं जातम् । तस्य पत्नी तस्मात् अधः उत्पतिता । तत् स्त्री वा पुरुषो वा इति तायव्वया न ज्ञातम् । देहाकृतिः स्त्रिय इव अस्ति । तत् जानुपर्यन्तम् अर्धोरुकं धृत्वा उरसि युतकं धृतवत् अस्ति । यद्यपि वेणी न, तथापि केशाः नाटकजनानामिव किञ्चित् दीर्घतया प्रसार्य कर्तिताः आसन् । काळिङ्गः इङ्ग्लिष्भाषया किमपि अवदत् ।

सा तायव्वासमीपम् आगत्य तस्याः हस्तं परिगृह्य दक्षिणहस्ताग्रं चुम्बितवती । तायव्वया किमपि अन्यदिव अनुभूतम् । सा तत्क्षणं हस्तम् आक्षिप्तवती । स्नुषा तत् अननुलक्ष्य स्वबाहुम् अस्याः स्कन्धे आरोप्य आलिङ्गितवती । श्वश्रूः सङ्कोचेन सङ्कुचितगात्री अभवत् ।

त्रयाणाम् अयःपत्रगृहगमनावसरे जमालः शिशुं लालयन्नासीत् । शिशुः अरुणवर्णः तस्य माता इवैव आसीत् । नेत्रे नीलकाचमिव प्रकाशमाने आस्ताम् । देहवर्णः कर्तित-मधुकर्कटीफलादपि अरुणः आसीत् । शिरसः केशाः ऊर्मिकाः इव कुण्डलाकारं

प्राप्ताः आसन् । कालिङ्गः शैशवे एवमेव आसीत् । किन्तु एतावदरुणः न, शुक्लः असीत् । सः शिशुम् उन्नीय मात्रे दत्तवान् । सा प्रीत्या हस्तौ प्रसार्य पौत्रम् आलिङ्गितवती । किन्तु सः एतदपरिचिताकृतिमतीं नूतनां दृष्ट्वा किट्टिति आक्रन्दितवान् । न केवलं तत्, रुदित्वा तस्य श्वासः बद्धः आसीत् । कालिङ्गेन तस्य उद्ग्रहणेनापि श्वासः नागतः । तत्क्षणं हिल्डा स्वशिशुं कराभ्यां गृहीत्वा स्वभाषया समाधानम् उक्तवती । अन्तः गतः श्वासः रोदनरूपेण पुनः बहिः आगतः । 'तस्य परिचयः नाभूत्' जमालः अवदत् ।

पञ्चसु निमेषेषु शिशुः मौनी अभवत् । किन्तु तायव्वया पुनरपि तद्दिशि हस्तप्रसारणेन पुनः ऊर्ध्वश्वासेन रोदितुम् आरब्धवान् । अस्मिन्नवसरे जमालः तं बहिः नीतवान् । स्नुषा अन्तः पाकगृहं गता । 'उपविश' इति पुत्रः मातरं सोफादर्शनेन अवदत् । सा भूतले उपविष्टवती । सोफायाः उपरि उपवेष्टुं तेन आग्रहेण उक्तापि तत् मम कुतः इतीव हस्तं चालितवती ।

स्नुषा अल्पेनैव कालेन काचस्थालीषु कर्तितानि जाम्लिप्तानि सुपिष्टकानि बिस्किटानि च आनीतवती । कदलीफलानि नारङ्गफलानि अपि सहितानि आसन् । एकस्यां स्थाल्याम् अग्रे कृतायां तायव्वा 'नापेक्षे' इतीव हस्तं चालितवती । किन्तु पुत्रेण आग्रहे कृते केवलं हस्तेन स्वीकृत्य सुपिष्टकं कदलीफलं च खादितवती । पुत्रः सोफायाम् आसीनः आसीत् । स्नुषा तस्य पार्श्वे उपविश्य स्वयम् एकां स्थालिकाम् अग्रे त्रिपादिकायां संस्थाप्य खादितवती । श्वश्रूस्तु मूका । स्नुषा भाषां न जानाति । पुत्रेण किं भाषितव्यम् इति न ज्ञातम् । मौनेन उपाहारसमाप्त्यनन्तरं स्नुषा अन्तर्गृहात् काफीम् आनीतवती । किन्तु श्वश्रूः न पीतवती ।

एकं क्षणं तत्रैव स्थिता तायव्वा अनन्तरम् उत्थाय देवस्थानदिशि गता । कल्याण्यां योजितं पम्पयन्त्रम् इदंप्रथमतया दृष्टं तया । ततः देवस्थानस्य उद्भूमिम् आरुह्य, अग्रप्राङ्गणे स्थितां बृहद्घण्टां चतुःकृत्वः वादितवती । दक्षिणाभिमुखी प्रदक्षिणं विधाय मन्दिरस्य देहल्यां ललाटं संयोज्य वन्दितवती । देहल्यां वेङ्कटरमणेन स्थापितेषु त्रिषु बिल्वपत्रेषु एकं वस्त्रदशायां बद्धवती । अनन्तरं मन्दिराग्रे स्थितस्य वृषभस्य पादं संस्पर्श्य हस्तं शिरसि प्रसारितवती । तस्य मुखं, शृङ्गे च उभाभ्यां हस्ताभ्यां गृहीत्वा प्रीत्या आलिङ्ग्य नेत्रे संमार्ज्य अनन्तरं देवस्थानस्य वेदिकायाम् एका एव प्रायः एकघण्टां यावत् उपविष्टा । तस्य मन्दिरस्य निर्माणावसरे तस्याः श्वशुरस्य सदा अत्रैव उपस्थितिः,

श्वश्र्वाः गृहे सम्भ्रमः, स्वस्य तक्षकाणां कृते पक्वान्नस्य शिरसि धृत्वा आनयनम्, देवस्थाने जाता विग्रहप्रतिष्ठापना – इत्यादीनि तस्याः स्मरणानि, पूर्वं घटितानां पुनरावर्तनं कुर्वन्ति स्म । मन्दिरनिर्माणावसरे एव अत्र गवां यात्रोत्सवः जातः । एकस्मिन्नेव वर्षे श्वश्रूः श्वशुरः उभावपि मृतौ । अधुना पुत्रः तत्र क्षेत्रं निर्माय वृतिं योजयामास । कस्यामपि सङ्क्रान्तौ अत्र यात्रोत्सवः भवितुं न शक्यः । गतसङ्क्रान्तौ वेङ्कटरमणः देवाय विशेषपूजाम् अर्पितवान् । तायव्वा उपवासं कृत्वा अत्र आगत्य तीर्थप्रसादं स्वीकृतवती । गृहे एव गोष्ठस्य गाः हरिद्राकुङ्कुमलेपेन क्षीरान्नम् अभक्षयत् ।

इतःपरम् अत्र यात्रोत्सवः कदा स्यात् ? इति तस्याः मनसि चिन्तनम् आरब्धम् । तावता अधः केदारे कर्षणयन्त्रं बडबड बडबड ध्वनिना चलितुमारब्धं श्रुतम् । तायव्वा स्वोपविष्टस्थलात् उत्थाय अग्रे आगत्य अपश्यत् । तस्याः स्नुषा एव तदुपरि उपविश्य चालयन्ती आसीत् । तायव्वा पुनः देवं नमस्कृत्य वृषभं संस्पृश्य नेत्रे सम्मार्ज्य अधः अवतीर्य प्रस्थिता । पुत्रस्य नूतनक्षेत्रस्य दिशि अनावर्त्य, वक्रमपि किञ्चिद्दूरम् अग्रहारमार्गमवलम्ब्य ततः ग्रामाभिमुखी अभवत् ।

## 6

तायव्वा पुत्रस्य फार्म्गृहम् अनन्तरं न गता । गृहे स्वकर्माणि कुर्वती स्वयम् आसीत् । प्रत्यहं क्षीरं तत्र प्राप्नोति स्म । किन्तु एकामपि धेनुं तौ न आनायितवन्तौ । वृद्धायाः सैका एव तृप्तिः ।

एकस्मिन् शुक्रवासरे अपराह्णे त्रिवादनसमये सा सर्वं गृहं सम्मार्ज्य तदानीमेव रङ्गवल्लीं रचयति स्म । प्रतिशुक्रवासरमपि गृहं सम्मार्ज्य, गोष्ठगतानां गवां सायं पूजनं ग्रामे सर्वकुटुम्बेषु अपि आदितः सम्प्राप्ता पद्धतिरासीत् । तायव्वा अन्तरङ्गणस्य पुरोभित्तेः अधः रङ्गवल्ल्या द्विरेखायुतम् आस्तरणं रचयति स्म । तस्य उपरि एकां गाम् उपस्थाप्य सायं गन्धवर्त्तिकया नीराजनं कर्तव्यमासीत् । तावता बाह्यात् कालिङ्गः तस्य पत्नी च आगतौ ।

तयोः आगमनम् अनिरीक्षितम् आसीत् । नमनेन वेदनायुतां कटीम् उन्नमय्य तायव्वा तथैव स्थिता । अद्य स्नुषा अर्धोरुकं न धृतवती । जानुदर्शनं यथा स्यात् तथा परिकारं परिधृत्य, देहे पुरुषः इव युतकं धृतवती आसीत् । पत्युक्तिम् अनुसृत्य सा पादयोः पादुके बहिर्द्वारि संस्थाप्य देहलीम् अतिक्रम्य अन्तः पादौ स्थापितवती । किन्तु तत्क्षणमेव

असह्यं किमपि अस्तीतिवत् पादम् अपसार्य देहल्याः उपरि स्थित्वा पतिं पृष्टवती – 'वाट् ईस् दिस् डर्ट् ?'

'गृहस्य शुचिः कृता अस्ति ।'

'तन्नाम किम् एतत् ? गोशकृत्गन्धः आयाति खलु ? भूतले गोमयलेपनमेव शुचिकरणम् इति किम् ?'

'अस्य देशस्य पद्धतिं पूर्वमेव त्वामहं तदानीमेव उक्तवान् खलु ? गोमयलेपनेन एव भूशुद्धिः प्राप्यते । शास्त्रे तथा उक्तम् अस्ति ।'

'एषा वस्तुतः दुर्ज्ञेयार्था पद्धतिः ।'

'गोशकृदि क्रिमिनाशकः रोगनाशकश्च गुणः अस्ति । तदर्थम् एव कुर्वन्ति' – इति काळिङ्गः स्वव्याख्यां तस्याः तर्केण सह समीकृत्य आवर्त्य उक्तवान् ।

'क्रिमिनाशकरूपेण लोशन् लिप्यताम् । डेट्टाल् लिप्यताम् । गोशकृत् कुतः लेपनीया ? एषा कीदृशी धार्मिकता ?'

तावता तायव्वा ताम् अन्तः आगन्तुं हस्तसंज्ञाम् अकरोत् । पादतलं समतलं कृत्वा पादाङ्गुलीः उन्नमय्य अन्तरागता सा पतिम् अपृच्छत् – 'एतानि कानि ? भूतले लिखिताः रेखाविन्यासाः ?'

'अद्य शुक्रवासरः । सायं मध्ये रेखाविन्यासे मम माता एकां गाम् उपस्थाप्य पूजयति ।'

'क्वैट् इण्टरेष्टिङ्ग् ।'

हिल्डा गवां गोष्ठं द्रष्टुकामा आसीत् । सद्यःकाले ताभ्यां फार्म्पालनेन साकं वैज्ञानिकतया पशुपालनमपि प्रारब्धुं योजना चिन्तिता आसीत् । परम्परया अस्मिन् देशे पशून् कथं बध्नन्ति, कथं पालयन्ति – इत्येतत् ज्ञातुं तस्याः कुतूहलम् आसीत् । स्वगृहे आदितः स्थितं गोष्ठं दर्शनीयम् इति काळिङ्गः ताम् आनीतवान् । तां सः पश्चाद्-द्वारात् गोष्ठं नीतवान् । एकवारं गोष्ठं समग्रतया परीक्ष्य सा अवदत् – 'पर्याप्ततया महत् अस्ति । किन्तु शुद्धम् अनारोग्यकरं चास्ति । वासगृहस्य एकस्मिन् भागे एव गाः बध्नन्ति । रोगः नायाति किम् ?'

'अत्रत्याः जनाः तथा न भावयन्ति । गवां शकृत्, मूत्रं रोगहारकम् इति तेषां विश्वासः । अन्यच्च तेषां विश्वासानुसारेण गावः देवसमानाः । एतन्मध्यगतम् अट्टं पश्य । मत्पितामहः

रात्रिकाले अस्यैव उपरि शेते स्म ।'

'हन्त, वृद्धः अतः एव शीघ्रं मृतः इति भाव्यते ।'

'शीघ्रं नाभवत् खलु ? निधनावसरे तस्य पञ्चसप्ततिवर्षाणि' इत्युक्त्वा काळिङ्गः मौनी जातः । पितामहस्य मरणं तस्य मनसि व्याकुलताम् अजनयत् । हिल्डा अपि अस्मिन् विषये संलापम् अग्रे न नीतवती । समीपं गत्वा गवां द्रोणीः स्थालीः च परीक्षितवती । कुत्रचित् द्रोणीषु तण्डुलक्षालितजलं, चूर्णयुतघटान् प्रक्षाल्य तदुच्छिष्टजलं पूरितमासीत् । तस्य दुर्गन्धः तस्यै नारोचत । ततः गोष्ठस्य पश्चाद्द्वारम् आगत्य तस्य बाह्यदेशम् एकदा परिशील्य अनन्तरं पत्युः हस्तं परिगृह्य 'आगच्छ, गच्छाम' इत्युक्तवती ।

एतयोः मध्यगेहागमनावसरे तायव्वा पाकगृहे आसीत् । काळिङ्गः एव उच्चस्वरेण 'आवां गच्छाव' इत्यवदत् । बहिः आगता सा उपविशतम् इति संज्ञया अवदत् । उभावपि मञ्चस्य उपरि किञ्चित्कालम् उपविष्टौ । ताभ्यां किमपि भक्षयितुं देयम् इति तायव्वायाः मनः आसीत् । गृहे अन्यत् किमपि नासीत् । प्रातः कृतः पाकः, कुलित्थसारः, चूर्णपिण्डम्, अन्नं च आसीत् । 'भोजनं कुरुत किम् ?' इति हस्तसंज्ञया अपृच्छत् । तस्याः संज्ञायाः अर्थं सम्यक् अजानन् काळिङ्गः 'अस्ति चेत् देहि' इत्यवदत् । अन्तर्गृहात् कांस्यचषक-द्वयम् आनीतवतीं पश्यन् काळिङ्गः 'भोजनं मास्तु' इत्यवदत् । तायव्वा उभाभ्यामपि चषकद्वयं क्षीरं दत्तवती । पीत्वा तौ प्रस्थितौ ।

हिल्डायाः पादतलं सर्वं गोमयलिप्तम् आसीत् । क्षालनार्थं जलम् आवश्यकम् इत्यवदत् । काळिङ्गवचनानुसारेण तायव्वया आनीतात् कलशात् काळिङ्गः एव तस्याः पादे जलम् अपातयत् । पादतलं द्वारस्य शिलायां सङ्घर्ष्य तया क्षालनानन्तरं सः स्वयुतककोषात् करवस्त्रं निष्कास्य दत्तवान् । तेन पादौ सम्मार्ज्य स्वपादुके धृत्वा सा प्रस्थिता । पतिः पत्नीम् अनुसृतवान् ।

एतत् दृष्टवत्याः तायव्वायाः सहजतया कोपः प्राप्तः । बाह्यदेशात् अन्तरागमनावसरे कोऽपि पादयोः जलम् अभिषिच्य आगच्छेत् । किन्तु एषा अन्तर्गृहात् बहिः गमनावसरे पादौ प्रक्षालितवती । यत्रापि सीमायां पत्नी पत्युः पादयोः जलम् अर्पयति । किन्तु एषः एव तस्याः पादाय कलशात् जलम् अभिषिञ्चति । एतत् सर्वं स्मृत्वा तस्याः अतीवकोपः सञ्जातः । स्वस्य स्नुषा प्राप्ता इत्येतत् भाग्याय दुखमनुभूय एकवारं रुदितवती ।

# एकादशः अध्यायः

## 1

एतस्मिन् वारे आलुककन्दानि सर्वाणि उन्मूल्य, विक्रीय बीजानि, गोभरः, ट्र्याक्टर्, पम्प्तैलम्, भृत्यभृतिः – इत्येतेषां गणनेन व्यवकलनानन्तरं सार्धनवसहस्ररूप्यकाणि अवशिष्टानि । केदारस्य प्रथमं कृषिफलं तत् । भूमेः यथा यथा फलवती भवति तथा तथा कृषिफलम् अपि उत्तमं भवति । अधिकलाभः अपि भविष्यति – इति काळिङ्ग-हिल्डयोः विश्वासः जातः । आहत्य बृहत्प्रमाणेन व्यवहारः प्राप्तः इति मुम्बयीनगराय प्रेषयिता जनपदस्य महावणिक् एव आगत्य द्विशताधिकत्रयोदशसहस्ररूप्यकाणि समर्प्य आलुकानि स्यूतेषु पूरयित्वा वस्तुयानेन अनयत् ।

हिल्डायाः आगमनात् अनन्तरदिने एव फार्म्क्षेत्रस्य प्रत्येकं भागस्य मृदः गुणं विस्तरेण परीक्षितवती । ततःपूर्वं काळिङ्गेन कृतासु परीक्षासु कांश्चित् निर्णयान् अङ्गीकृत्यापि अन्यान् कांश्चन एते दोषयुक्ताः इति प्रादर्शयत् । स्थलस्य वायुमानं, कस्मिन् कस्मिन् मासे वायुमानस्य स्थितिः कीदृशी इति विवरणं मनसि निधाय अस्मिन्नवसरे फार्म्क्षेत्रस्य अर्धभागे कार्पासम्, अवशिष्टार्धभागे सिगरेट्–उपयोगि वर्जीनियातमाखुं च वर्धयितुं निर्णीतवन्तौ । काळिङ्गः जनपदकृषिसहकारिसंस्थां गत्वा तेषां मार्गदर्शनं प्राप्य स्वावश्यकानि बीजानि, गोभरसाराणि च आनीतवान् ।

आलुकोन्मूलनदिनात् आरभ्य प्रतिदिनम् अष्टघण्टाः यावत् जमालः ट्र्याक्टर् चालयन् भूतलं फलवत् करोति स्म । तस्मिन् विश्रान्त्यै आगते हिल्डा चालयति स्म । एवं च अस्मिन् अवसरे मृत्तिका पूर्वावसरात् अधिकफलवत्तां प्राप्ता । कार्पासं तमाखून् च उप्तवन्तः । कालेन सस्यानि पल्लवितानि अभवन् । अनन्तरं काळिङ्गस्य हिल्डायाश्च स्वल्पतया विश्रान्तिः प्राप्ता इति तौ इतरविषयान् आलोचयितुम् आरब्धवन्तौ । एकस्मिन् दिने यानमार्गस्य अपरपार्श्वे स्थितं गोमालं परिभ्रम्य आगता हिल्डा अवदत् – 'तत्र

वर्धमानानि तृणानि सामान्यजातीयानि । सम्यक् गोभरं संयोज्य जलव्यवस्था क्रियते चेत् तत्रैव स्थले उत्तमजातीयानि तृणानि वर्धयितुं शक्यन्ते । तावत्यामेव भूमौ सप्ततिः अशीतिः वा गावः रक्षितुं शक्याः ।'

'तथा कर्तुं भण्डारः आवश्यकः । एतेषां कार्पासतमाखूनां धनप्राप्त्यनन्तरं तत् प्रारब्धुं शक्यते । पूर्वं गोमालस्य वृतिः रचनीया । अनन्तरं ट्र्याक्टर् चालयित्वा भूमिं फलवर्ती कृत्वा तृणानि अरोपणीयानि । ततःपूर्वं जलस्य व्यवस्था भवेत् ।'

हिल्डा सर्वमपि गणयित्वा अवदत् – 'सर्वकारस्य ऋणस्य नियतांशः अर्पितः । तस्मात् अवशिष्टं कार्पासस्य तमाखोश्च फलवत्तापर्यन्तं व्ययितं चेत् त्रिसहसम् अस्मासु अवशिष्टं भविष्यति । ग्रामस्थे गृहे यवधान्यानि यानि विद्यन्ते तानि परिशील्य विक्रीणीहि । तदपि अपर्याप्तं चेत् गृहे सुवर्णम् अस्तीत्युक्तं खलु ? तत् विक्रीणीहि । कस्मिन्नपि लाभे अभागेन निरर्थकभण्डारेण सुवर्णेन किमस्ति प्रयोजनम् ?'

'धान्यानि विक्रेतुं शक्यन्ते । किन्तु सुवर्णस्य विक्रयणं चिन्त्यते चेत् माता तूष्णीं न तिष्ठेत् । ग्रामे सर्वत्र महत् तुमुलं कुर्यात् ।'

'डियर्, एषः देशः पुरो न गच्छेत्' – इति हिल्डा निर्णयम् अवदत् । काळिङ्गोऽपि 'आम्' इति अङ्गीकृतवान् ।

अग्रिमकृषिपर्यन्तम् आवश्यकं संस्थाप्य, अवशिष्टधान्यानां विक्रयणेन द्विसहस्र–रूप्यकाणि प्राप्तानि । गृहे स्थितं त्रिसहस्रमपि सम्मेल्य काळिङ्गः यानमार्गात् अपर–पार्श्वस्थं गोमालं परितः तन्त्रीकण्टकवृतिं रचितवान् । अन्यच्च मध्ये जिङ्क् अयःपत्रेण एकं बृहद्गोष्ठं निर्माय समीपस्थिते अधःप्रदेशे एकं लघुकूपं खानितवान् । जलस्य स्रोतः अस्तीति कूपे बहुशीघ्रं जलं प्राप्तम् । गृहस्य गोष्ठात् पश्चाद्भागे स्थितेषु तृणराशिषु एकस्य शकटेन अत्र आनयनानन्तरं वृषभान् पयःपानरहितान् वत्सान् च गृहे परित्यज्य दोग्ध्रीः धेनूः वत्सान् अत्र आनीतवान् ।

## 2

द्वाविंशतिः धेनवः, तत्र षोडश दोग्ध्र्यः, षोडश वत्साः – संहत्य चरणाय गतासु एतावतीषु गोषु अष्टात्रिंशत् न्यूनाः सन्ति इति परिशीलितवती तायव्वा भृत्यान् अस्मिन्

विषये अपृच्छत् । ते सर्वे गोमाले निर्मिते नूतनगोष्ठे बद्धाः इति भृत्यः अवदत् । रात्रौ यद्यपि दीपोद्योतनम् अभवत् तथापि सा भृत्यैः सह नूतनगोष्ठं गता । तं न पूर्वं दृष्टवती अपि । न श्रुतवती अपि । गोमालस्य वृतिं विरचय्य मध्ये अयःपत्रमयं गृहं निर्मीयमाणं भृत्यैः ज्ञातमपि, तदपि कर्षणयन्त्रं संस्थाप्य वास्तव्याय स्यात् इति तैः भावितमासीत् । तत्र गत्वा दृष्टं यत् धेनवः सर्वाः पृथक् पृथक् बद्धाः । भृत्याः क्षीरदोहने मग्नाः । प्रायः प्रथमदिनमिति कालिङ्गः क्षीरदोहनस्य उपविचारणं कुर्वन्नासीत् । गोष्ठम् आगता तायव्वा कोपेन एव किमेतत् इत्यपृच्छत् । सा अस्मिन् अन्धकारे अत्र आगमिष्यीति तेन न निरीक्षितम् । 'तत्र त्वया एकया निर्वहणं न शक्येत इति एतद् निर्मितम् । गृहाय तदा तदा क्षीरम् एते प्रतिदिनम् आनीय ददति ।'

'यूयम् एताः गाः हत्वा भक्षयत' इत्येवंरीत्या तायव्वा हस्तसंज्ञया सूचितवती । सः 'एवं कः दासीपुत्रः त्वाम् उक्तवान् ? तत् सर्वम् असत्यम् । तव बुद्धिः नष्टा जाता किम् ?' इति अपृच्छत् । सा बद्धाः धेनूः विमोचयितुं प्रवृत्ता । 'मातः, त्वं तूष्णीं गृहं गच्छसि वा न वा ?' इति स तर्जितवान् । तावता तत्र आगतः जमालः तायव्वाम् – 'भवती न बिभेतु गौडव्वे ! धेनोः किमपि न भवति । तस्याः दायित्वं मम इति भावयतु' इति समाधानेन उक्तवान् ।

तायव्वा किमपि कर्तुं न शक्ता अभवत् । तस्याः अन्तः रोदनम् उद्गच्छत् आगतम् । समीपे एव लब्धायाः एकस्याः धेनोः मुखं गृहीत्वा सगद्गदं भृशं रुदितवती । तत् पश्यतः कालिङ्गस्य मनः व्यग्रम् अभवत् । तथापि मातुः वर्तनं दृष्टवतः तस्य खेदोऽपि अभवत् । सः एव 'गृहाय आवश्यकं चेत् दोग्ध्यौ धेनू नय' इत्यवदत् । स्वस्य तदपि नावश्यकम् इति इव तायव्वा तथैव बहिरागता । किन्तु कालिङ्गः धेनुद्वयं विमोच्य नेतुं तया सह आगतं भृत्यम् अवदत् । भृत्यः ज्ञात्वा उत अज्ञात्वा युगलेन स्थिते पुण्यकोटिधेनू विमोच्य तयोः वत्साभ्यां साकम् आगत्य गौडव्वया साकं गतवान् ।

गौडव्वा ग्रामम् आगता । साक्षात् गृहं नागता । वेङ्कटेगौडस्य गृहं गता । अनुसरन् आगतः भृत्यः धेनू द्वारस्तम्भे बद्ध्वा तया सह अन्तः गतः । तदानीमेव भोजनं समाप्य तमाखुं हस्ततले निवेश्य घर्षयन् वेङ्कटेगौडः तायव्वया सम्भाष्य निचुलकटस्य उपरि उपवेशितवान् । घटितं वृत्तान्तं सा संज्ञया उक्तवती । तया सह आगतः भृत्यः मुक्तकण्ठेन सर्वं विवृतवान् । ताः धेनूः ते घातयित्वा भक्षयन्ति इति सा संज्ञाम् अकरोत् ।

तावता अत्र तत्र पार्श्वे स्थिताः चत्वारः यजमानजनाः तत्र आगताः । तैः सन्देश-

प्रेषणानन्तरम् इतोऽपि पञ्चषाः मुख्याः आगत्य सङ्गताः। एतेषां सर्वेषां काळिङ्गस्य विषये कोपः उद्गतः आसीत्। तत् गोमालम् आदितः काळिङ्गगौडज्जस्य वंशगतम् आसीत् इति सत्यम्। किन्तु स्वयं गोमालरहिताः इतरे अपि तत्र स्वगाः चारयन्ति स्म। गोचरस्थलं मदीयं त्वदीयम् इति भेदः तस्मिन् ग्रामे केनापि न कदापि कृतः आसीत्। काळिङ्गः इदानीं माकिम् एकस्मात् वर्षात् यानमार्गस्य अपरपार्श्वे न केवलं स्वगोमालम्, ततोऽपि अग्रे विद्यमानं गिरिसानुप्रदेशमपि संयोज्य, कर्षयित्वा, वृतिं निर्मितवान् अस्ति। ग्रामे गोचरभूमिः न्यूना जाता। इदानीं यानमार्गस्य समीपभागेऽपि वृतिं निर्मितवानस्ति। इतः ग्रामे अवशिष्टं वेङ्कटेगौडस्य मालम्। किन्तु वेङ्कटेगौडस्य धेनुभिः साकं ग्रामस्य धेनवः सर्वाः प्रविशन्ति चेत् एकमासेऽपि न पर्याप्तं भवेत्।

यानमार्गस्य अस्मिन् माले वृतिरचनां ग्रामस्य अनेके अपश्यन् एव। काळिङ्गस्य अरुणपत्नी एव अभियन्त्रा गृह्यमाणां दीर्घमापनपट्टिकां स्वीकृत्य, मापयन्ती कस्मिन् कस्मिन् स्थले खातः भवेत् इति वदन्ती आसीत्। खातिते स्थले शिलास्तम्भम् आरोप्य तस्य रन्ध्रद्वारा कण्टकतन्त्री कथं निवेश्य आकर्षणीया इति विषये निरीक्षककार्यं करोति स्म। तस्याः दर्शनेन तेषां किमपि भयम् आसीत्। सा समीपतः द्रष्टव्या इति आशावन्तोऽपि अनेके भयात् दूरे एव स्थित्वा दृष्ट्वा प्रतिगच्छन्ति स्म।

इदानीं संवृत्तस्य किं कर्तव्यम् इति वेङ्कटेगौडः सर्वान् अपृच्छत्। तायव्वा 'गत्वा तां वृतिं कर्तयित्वा आगच्छत' इति संज्ञाम् अकरोत्। 'तदेव साधु, पश्यत' इति वेङ्कटेगौडः अनुमोदितवान्। किन्तु ग्रामपुरुषाः तादृशं धार्ष्टिककार्यं कर्तुं भीताः।

'तस्याः वशे भुषुण्डिका विद्यते पश्यत। आदाय चोदयति चेत् किं करोषि ?' एकः अपृच्छत्।

अन्यः 'तस्य यन्त्रस्य उपरि उपविश्य बर्रों कृत्वा चालयति खलु, तदेव आनीय उपरि चालयति सा' इत्यवदत्।

'मारी मुण्डिनी भोः, चण्डालमारी मुण्डिनी। अर्धोरुकं धृत्वा पुरुषः इव भाति। एकैकः ऊरुस्तम्भः एव अस्मद्गात्रसमः अस्ति। अस्मद्देशीया कन्या चेत् भेतव्यं नासीदेव' इत्यपरस्य वचनम् अनुसरन् चतुर्थः धैर्यवान् 'सः मुसल्मानः दासीपुत्रः अस्ति खलु। तस्य वशे छुरिका विद्यते। तया साकं सोऽपि आगच्छति' इति स्वकीयमपि विवेकं योजितवान्।

वेङ्कटेगौडस्य पुत्रः माटः सम्प्रति सप्तविंशाष्टाविंशवयस्कः। तस्य पत्नी सद्यःकाले

द्वितीयं पुत्रं सूतवती । सः उत्थाय गर्जितवान् – 'कङ्कणं धृतं किं षण्डाः मत्पुत्राः युष्माभिः ? मम समीपम् आगच्छतु । दर्शयाम्यहम् । भुषुण्डिका वशे विद्यते इति भुषुण्डिका ! कशां परिगृह्य ग्रामीणाः सर्वे प्रविशन्ति चेत् अर्धोरुकस्य अन्तः कम्पमानाभ्याम् ऊरुभ्यां धावेत् खलु सा !'

अधुना सभायां धैर्यसञ्चारः अभवत् । तायव्वा संज्ञया 'यूयं सर्वे मुण्डनं कृतवन्तः किमु ?' इत्यपृच्छत् । किन्तु कट्टेमनेतम्मय्यः व्यवहारम् अवदत् – 'पश्य, सः उपायुक्तेन साकम् उपविश्य सिगरेट्सेवनं करोतीति श्रुतम् । ताडनाघातः प्रवृत्तश्चेत् सः गत्वा रक्षिभटान् वदति । रक्षिभटाः आगत्य ग्रामस्य ग्राममेव तुदन्ति । हस्तं बद्ध्वा कारागारं प्रवेशयन्ति चेत् तत्र युष्माकं पौरुषं तिष्ठेत् किम् ?' अधुना सभायाः धैर्यम् अन्तर्लीनम् ।

गोमाले रचितां वृतिम् उन्मूलयितुं ते अर्धरात्रिपर्यन्तम् अभाषन्त । किन्तु कोऽपि उपायः नाभासत । वेङ्कटेगौडस्य पुत्रः माटस्तु सर्वानपि पुनः षण्डाः इति विनिन्द्य बाहुबलम् उद्यम्य सूचितवान् । किन्तु ग्रामस्य पौरुषम् अपगतम् आसीत् । व्याघ्रतरक्षूणाम् उपरि पतित्वा ताडितवतां तेषां पुरुषाणाम् अन्तस्सत्वम् एवंरीत्या अन्तर्लीनमित्यत्र कारणं तत्रत्यैः कैरपि न ज्ञातम् । अस्मिन् विषये चिन्तनेऽपि शक्तिः न कस्यापि आसीत् ।

## 3

दोग्ध्रीषु चतुर्दशसु धेनुषु द्वयोः क्षीरं काळिङ्गहिल्डा–शिशु–जमालानां पर्याप्तं सत् अवशिष्टं भवति स्म । अन्यासां द्वादशानां धेनूनां वत्सैः उदरपूरं पानेनापि प्रातः अष्टादश–प्रस्थमितं विंशतिप्रस्थमितं वा, सायं पञ्चदशप्रस्थमितं च क्षीरम् अवशिष्टं भवति । तत्सर्वं किं कुर्यात् ? ग्रामे यावदपि भवतु क्षीरं तत् न विक्रीयते । यत्र दुग्धं न स्यात् तत्र गृहेषु बालकेभ्यः ददति निःशुल्कम् । अवशिष्टस्य मण्डं संयोज्य मथित्वा नवनीतं सञ्चिन्वन्ति स्म । तक्रमपि प्रार्थितवद्भ्यः दीयते स्म । गृहे खादित्वा अवशिष्टं नवनीतं केवलं विक्रेतुं विक्रयस्थानं प्रेषयन्ति स्म । एवं च दोहनं स्वल्पोऽपि लाभदायकः उद्यमः नासीत् ।

काळिङ्गः एकस्मिन् दिने लोकयानेन ताल्लूकुकेन्द्रं गत्वा यानस्थानकस्थम् उपाहार–मन्दिरस्वामिनं विचारितवान् । यावदपि क्षीरं स्वस्मै प्रेषयितव्यम् इति, जलामिश्रितं क्षीरं चेत् प्रस्थमितस्य दश आणकानि दीयन्ते इति च सः अवदत् । तस्मिन्नेव दिने चतस्रः

बृहद्धानीः क्रीत्वा कालिङ्गः प्रत्यागतः । अनन्तरदिनात् प्रातः लोकयानागमनात् पूर्वमेव क्षीरं दुग्ध्वा विंशतिप्रस्थमितं धानीद्वये संस्थाप्य प्रेषणव्यवस्था कृता । गतमासत्रयात् लोकयानत्रयम् अस्मिन् मार्गे गच्छति स्म । सायन्तनयानं षड्वादने आगच्छति । तस्य आगमनात्पूर्वं दोहनं कृत्वा तदपि क्षीरं प्रेषयितुं भृत्यान् अवदत् । प्रत्यहं यानेन प्रेष्यमाणासु धानीषु उपरि सः एव अन्तःस्थितस्य क्षीरस्य मानं लिखित्वा चिटिकां लेपयति स्म ।

कनिष्ठतया दिने पञ्चत्रिंशत्प्रस्थमितं क्षीरं नाम एकविंशतिरूप्यकाणि चतुर्दश आणकानि च । प्रतियानं मासे पञ्चविंशतिरूप्यकाणि देयानि । तं व्ययम् अपहाय दिने विंशतिरूप्यकाणां शेषः भवति । कालिङ्गः मनसि एव अचिन्तयत् । गोपालनं नाम कियान् लाभदायकः उद्यमः ! किन्तु सः आर्थिकतया दृढं यथा स्यात् तथा निर्वहणीयः । एतावत्सु दिनेषु पितामहेन दानरूपेण दत्तं क्षीरं यदि विक्रीतम् अभविष्यत् तर्हि कनिष्ठतया त्रिचतुरलक्षरूप्यकाणि प्राप्तानि अभविष्यन् । तदपि न कृतम् । अन्ततः स्थितं सर्वं धनं मन्दिरनिर्माणाय व्ययीकृत्य, मां सर्वकारतः ऋणयापकः यथा स्यां तथा कृत्वा मृतः ।

एकस्मिन् दिने भृत्येषु दोहनपरेषु हिल्डा तत्र आगता । प्रत्येकं गोः ऊधसः एकस्मिन् पार्श्वे वत्सः पिबति स्म । अन्यस्मिन् पार्श्वे भृत्यः दोग्धि स्म क्षीरम् । तदवलोक्य हिल्डा पतिम् अपृच्छत् – 'ते वत्साः अपि कुतः पिबन्तः सन्ति ?'

'वत्सः न पिबति चेत् स्नुतं न भवति । अन्यच्च वत्सस्य पर्याप्तः आहारः प्राप्तः भवेत् खलु ?'

'डियर्, त्वमपि एतत् विश्वसिति किम् ? ऊधसि क्षीरपूर्त्यनन्तरं तत् बहिः न स्रवति चेत् धेनोः हितं न भवति । मूत्रकोशे मूत्रपूर्त्यनन्तरं तस्य बहिः स्रवणपर्यन्तम् अहितानुभवः न भवेत् किम् ? क्षीरवतः ऊधसः अपि तथैव । स्ववत्सः एव आगत्य मुखं न योजयति चेत् तत् न स्रावयति इत्येतत् अवैज्ञानिकं वचनम् । अमेरिकायां त्वमेव अपश्यः खलु ? रब्बर्नलिकां संयोज्य पूर्णतया क्षीरं न आकर्षयन्ति किम् ? अन्यच्च केवलेन गोक्षीरेण कस्यापि वत्सस्य उदरं पूर्णं न भवति । वत्सस्य पुष्ट्या वर्धनार्थम् अन्यः सत्त्वयुतः आहारः देयः । इतःपरं क्षीरदोहनावसरे वत्सान् बद्ध्वा दोग्धव्यम् इति भृत्यान् वद ।'

कालिङ्गः तथैव आदिष्टवान् । किन्तु वत्सस्य ऊधस्तः मोचनानन्तरम् ऊधसि हस्तः लगितश्चेत् धेनवः तोदितुम् आरब्धवत्यः । वत्साः अम्ब इति उच्चैः क्रदन्ति स्म । वत्सं विना क्षीरदोहनस्य अभ्यासः एव तासां धेनूनां नासीत् । किन्तु हिल्डा न पराभूता । पशूनां कस्मिन् कस्मिन् स्नायौ क्षीरं स्रवित्वा कुत्र कथं सञ्चितं भवेत्, तत् बहिः न निःसरति

चेत् तेषां कीदृशी हिंसा स्यादिति च वैज्ञानिकम् अध्ययनं कृतवती आसीत् सा ।

काष्ठखण्डानाम् अट्टं रचयित्वा तदुपरि संस्थाप्य दोहनारम्भानन्तरं तृतीये दिने ताः विनान्तरायं स्थातुम् आरब्धवत्यः । दोहनात् पूर्वं स्रवित्वा मूत्रोच्चरणपर्यन्तम् एकनिमेषमात्रं वत्सस्य ऊधसि मुखं योजयितुम् अवसरः दीयते । अनन्तरम् आकर्ष्य धेनोः पुरतः बध्नन्ति स्म । स्ववत्सं लिहन्ती सा तूष्णीं तिष्ठति स्म । तदनु सर्वस्य क्षीरस्य निष्पीडनानन्तरं वत्सं स्वमातुः स्तने सुखम् अनुभवितुं योजयन्ति स्म ।

एतत् विधानं दृष्टवतां दोग्धॄणां भृत्यानामेव उद्विग्नता जाता । गौडज्जस्य कुल-परम्परायाम् एवंरीत्या क्षीरदोहनं न कदापि दृष्टवन्तः ते आसन् । न श्रुतवन्तः अपि । तेषु एकः ज्येष्ठवयस्कः एकदा काळिङ्गं निवेदितवान् – 'वत्सस्य मुखम् आकर्ष्य दुग्धं चेत् तत् विषं भवतीति वदन्ति, जानीहि । तथा न कर्तव्यम् ।'

तत् क्षीरं विषं भवेदित्यत्र कोऽपि आधारः नासीत् । दुग्धं क्षीरं सर्वम् उपाहारमन्दिराय गतम् आसीत् । तत्र तदुपयुज्य सज्जीकृतस्य सहस्राधिककाफीचायस्य पानेन पानिषु कोऽपि विषावेशेन न मृतः आसीत् । 'तव पुराणं मास्तु । मौनेन दोहनं कुरु' इति काळिङ्गः तम् अवदत् ।

वत्सं बद्ध्वा दोहनारम्भेण प्रातःकालिकं क्षीरं पञ्चत्रिंशत्प्रस्थपर्यन्तं गतम् । सायं तु त्रिंशत्पर्यन्तम् । काळिङ्गः ताल्लूकुकेन्द्रं गत्वा इतरानपि उपाहारमन्दिरस्वामिनः निवेदितवान् । शुद्धक्षीरं निरन्तरं ददाति चेत् प्रस्थमितस्य द्वादश आणकानि दीयन्ते इति ते उक्तवन्तः । एतावद्दिनेषु प्राप्यमाणं शुद्धक्षीरं च्युतं स्यादिति भयेन यानस्थानकस्थस्य उपाहारमन्दिरस्य स्वामी एव द्वादश आणकानि दातुम् अङ्गीकृतवान् । तस्य बृहदुपाहार-मन्दिरमेकं जनपदलोकयानस्थानकेऽपि आसीत् । अत्युत्तमं क्षीरं लभ्यते चेत् ते तत् लोकयानेन तत्रापि प्रेषयितुं शक्नुवन्ति । 'कियदपि भवतु, अस्मभ्यम् एव ददातु । द्वितीयस्थले मा ददातु' इति सः प्रार्थितवान् । यः कोऽपि स्वीकरोतु, किं तेन ? प्रामाणिकतया सकालं धनं हस्तगतं भवेत् । तत् मुख्यम् । स्थानकमन्दिरस्वामी अग्रिमधनमेव दत्तवान् । काळिङ्गः अन्याः चतस्रः धानीः आनीतवान् ।

अद्यत्वे चत्वारिंशत्तः त्रिचत्वारिंशत्–चतुश्चत्वांरिद्रूप्यकाणां क्षीरम् उत्पन्नम् अभवत् । लोकयानाय दीयमानं धनं मासे पञ्चाशत्तः षष्टिम् आरोहत् । वत्सानां कृते पुष्टियुताहारदानाय व्ययीकर्तव्यम् । तथापि संहतिगुणनेन वत्सं बद्ध्वा क्षीरदोहनं लाभदायकं भाति ।

अन्यस्मिन् दिने गोदोहनावसरे तत्र आगता हिल्डा अवदत् – 'डियर्, गोभ्यः किञ्चित् बहुपुष्टिदायकम् आहारं ददाति चेत् क्षीरोत्पत्तिम् अधिकां कर्तुं शक्यते । कथञ्चिदपि एतासां धेनूनां क्षीरोत्पादनशक्तिः न्यूना । अस्मद्देशस्य धेनूनाम् एतद्दृष्ट्या वरम् । अन्यच्च अस्माकं दोहनविधानेऽपि परिवर्तनं भवेत् । मनुष्यस्य अङ्गुल्यपेक्षया रब्बर्नलिकां संयोज्य यन्त्रसम्मर्देन क्षीरम् आकर्ष्यते चेत् क्षीरं शुभ्रमपि तिष्ठति । पूर्णतया दोग्धुमपि शक्यम् । त्वम् अमेरिकायाम् अस्मद्गृहे न दृष्टवान् किम् ?'

'दृष्टमेव खलु ? तथा कर्तुम् इतोऽपि षण्मासाः अपेक्षिताः' – काळिङ्गः अवदत् ।

पूर्वताल्लूकतः अग्रिमताल्लूकपर्यन्तं विद्युत्सम्पर्कं कल्पयितुं सर्वकारेण निर्धारितम् आसीत् । विद्युद्विभागीयाः स्तम्भान् आरोपयितुम् अधुना द्विमासयोः मापनं कृत्वा गताः । स्तम्भपङ्क्तिः एतेषां फार्म्समीपे एव गच्छेत् । तस्याः एका तन्त्री आकृष्यते चेत् एतेषां फार्म्गृहं प्रकाशेत । अन्यच्च मितशक्तियुतं डीसेल्तैलं विहाय विद्युच्छक्तिम् उपयोज्य कल्याण्याः सर्वं जलम् उन्नेतुं शक्यम् । हिल्डायाः सूचनानुगुणं गवाम् ऊधसः अन्तिम-बिन्दुपर्यन्तं क्षीरम् आकर्षितुं शक्येत ।

# द्वादशः अध्यायः

## 1

कार्पासः तमाखुश्च निरीक्षाम् अतिरिच्य सुष्ठु प्रवृद्धौ। सद्यः विपणिमूल्ये अतिकनिष्ठं चेदपि बीजं, गोभरः, यन्त्रतैलं, भृत्याः, चारकाः – इत्यादिव्ययम् अपहाय पञ्चत्रिंशत्-सहस्ररूप्यकाणां शेषः निश्चितः आसीत्। क्षीरस्य लोकयानेन प्रेषणारम्भादनन्तरं धनविषये न किञ्चिदपि चिन्ता आसीत्। कृषिफलप्राप्त्यनन्तरं स्वकीयं यानमेकं क्रेतव्यम् इति हिल्डा सूचितवती। प्रथमतः गोष्ठस्य कूपस्य खातम् इतोऽपि कृत्वा तस्य सिमेण्ट्बन्धं रचयित्वा विद्युत्पम्प् लगयितव्यम्। गोमाले उत्कृष्टजातीयानि तृणानि वधर्यितव्यानि। मन्दिरस्य कल्याण्याः पम्प्यन्त्रमपि विद्युच्चालितं भवेत् इत्येतत् कालिङ्गस्य कार्ययोजना आसीत्।

कालिङ्गस्य प्रतिष्ठा सर्वकारस्य वर्तुले पर्याप्ततया वर्धिता आसीत्। वैज्ञानिकतया कृषेः प्रचारं कुर्वतः कृषिविभागस्य सः एकः आदर्शः आसीत्। अमेरिकायाम् अधीत्य आगतः, अमेरिकीयपत्नीयुतश्च। पत्युः अपेक्षया पत्नी कृषिविज्ञाने, पशुसङ्गोपनायां च प्राज्ञा इति। अस्मिन् मार्गे प्रवासार्थम् आगतः जनपदाधिकारी तस्य फार्म्क्षेत्रम् आगत्य सर्वं दृष्ट्वा तस्य पत्न्या साकम् इङ्ग्लिष्भाषया सम्भाष्य गतः।

एतावत्यपि तस्य मनःशान्तिः नासीत्। तस्य दक्षिणभुजरूपेण मस्तिष्कस्य मस्तिष्कमिव फार्म्व्यवस्थापिका सहवासिनी पत्नी हिल्डा अस्ति चेदपि स्वयम् एकाकी इति भावः तं पीडयति स्म। एतस्य साधनानि सर्वकारीयाः अधिकारिणः दृष्ट्वा तुष्यन्ति स्म। किन्तु तेन सह प्रवृद्धाः इतरे न तुष्यन्ति स्म। उदरम्भणार्थं कर्म कुर्वतः भृत्यान्, जमालं च विहाय ग्रामात् अन्ये केऽपि तस्य फार्म्क्षेत्रं नागताः। तस्य माता एकस्मिन् एव दिने फार्म् आगता आसीत् केवलम्। एतत् वातावरणं न सङ्गतम् अथवा हिल्डायाः वेषभूषणानि, वर्तना वा न अरोचन्त वा, अनन्तरं सा तद्दिशि नागता। नूतनगोष्ठम् आगत्य, कलहं कृत्वा, अश्रु प्रवाह्य धेनुद्वयस्य नयनानन्तरं सा भृत्यानां पाकं कृत्वा

परिवेषणमपि स्थगितवती आसीत्। तत्तेषां रागि, दलानि, मरीचं च तेभ्यः दत्त्वा गृहे एव भोजनाय काळिङ्गः व्यवस्थां कृतवान्।

बाल्यादेव तस्य वयस्यः वेङ्कटरमणः अपि इतः दशमासेभ्यः पूर्वं नाम अत्र हिल्डागमनात् अनन्तरदिने, तम् उपालभ्य गतः अद्यावधि अस्यां दिशि पुनः न पश्यति एव। सः दिनेऽपि सामान्यतः अष्टवादने देवस्थानं पूजार्थम् आगच्छति। अग्रिमाङ्गण–घण्टायाः नादः शिरसि ताडितः इव सर्वेषां श्रवणगोचरो भवति। तस्य शब्दस्य श्रवण–समनन्तरमेव फार्म्मध्ये श्रमकर्मकराः कार्यं निवार्य देवस्थानाभिमुखं परिवर्त्य कराभ्यां प्रणम्य, नेत्रे निमीलयन्ति। बहुषु दिनेषु ते पूजाकाले गत्वा वेङ्कटरमणात् प्रसादं स्वीकृत्य, खादित्वा आगच्छन्ति। केषुचित् दिनेषु केऽपि ग्रामान्तरभक्तादयः पत्नीपुत्रसमेताः देवस्थानमागत्य विशेषपूजां समर्प्य कल्याण्याः जलम् आदाय, नीत्वा, देवस्थानात् पश्चाद्भागे लघुशिलामण्डपे पाकं कृत्वा भोजनमपि कुर्वन्ति स्म। अधुना तत् देवस्थानम् एकं पुण्यक्षेत्रमेव भवति स्म। तस्य देवस्य महिमा दिनात् दिनं दूरग्रामपर्यन्तं प्रसरति – इति·भृत्याः वदन्ति।

वेङ्कटरमणस्य पूजागमनकाले तद्दिशं गन्तुमपि काळिङ्गः न शक्नोति स्म। भयं वा, सङ्कोचो वा लज्जा वा, तस्य मुखदर्शनेन अटनमपि मनसि क्लेशं जनयति। किन्तु तेन सह सम्भाषितुम् इच्छा तु सदा भवति स्म। सामाजिकजीवनं विना एकान्ते क्लिश्यन्तीं हिल्डां सः तदा तदा वदति स्म। कियदपि सम्प्रदायस्थः स्यात्, अत्र अस्मत्समवाये प्रवेष्टुम् उचितः जनः वेङ्कटरमणः एकः एव। पुरतः एव निन्दित्वा मया सह सम्भाषणं परित्यक्तुं धैर्यमपि तस्य अस्ति। अन्येषु कस्य तादृशं व्यक्तित्वम् अस्ति ?

हिल्डा वदति स्म – 'तस्य सम्प्रदायमनोभावः अतिरेकेण अस्ति खलु ? तं परिवर्तयितुं न केनापि शक्यते खलु ?

'सः मन्यते यत् अस्माभिः परिवृत्तैः भवितव्यमिति। तस्य परिवर्तनस्य तु प्रश्नः एव तस्याशये नास्ति।'

'सः एकविधः अहङ्कारः तदीयः।'

काळिङ्गः तस्याः वचनं 'हू' इत्यङ्गीकरोति स्म।

गृहे इतोऽपि विद्युत् न प्राप्ता। हिल्डा कालयापनार्थं विद्युत्कोशेन चालिताम् आकाश–वाणीं प्रवर्तितवती। रात्रिवेलायां तु पश्चिमदेशस्य सङ्गीतं श्रूयते स्म। अत्रत्यं सङ्गीतं न रोचते तस्यै। काळिङ्गः ग्रामफोन्, सङ्गीतस्य काश्चन मुद्रिकाश्च

आनीतवान् आसीत् । एकस्मिन् दिने सा मुद्रिकां नादयित्वा, पतिं परिगृह्य नृत्यं कुर्वती आसीत् । इङ्ग्लिष्वृत्त-पत्रिकापठनम्, फार्म्मध्ये श्रमः, एतावत् विहाय तस्याः अन्यः सम्पर्कः एव नासीत् ।

जमालेन सह कन्नडेन सम्भाषितुं तया सद्यःकाले अभ्यासः कृतः आसीत् । प्रारम्भे काळिङ्गः एव कानिचन वाक्यानि शब्दांश्च पाठितवानासीत् ।

## 2

एकस्मिन् दिने ताल्लूकुयानस्थानके वेङ्कटरमणः काळिङ्गश्च अकस्मात् परस्परं सम्मुखौ प्राप्तौ । किमपि अनालोच्य काळिङ्गः एव 'किमेतत् ? वेतनाय आगतोऽसि किम् ?' इति तम् अभाषत । वेङ्कटरमणः अपि सहजतया 'न, परिवीक्षककार्यालये किञ्चित् कार्यम् आसीत्' इत्यवदत् ।

एकनिमेषानन्तरं काळिङ्गः अवदत् – 'त्वं मया सह न सम्भाषणं न कुर्याः इति भावितम् आसीत् मया ।'

'कुतः, त्वं किं नु मम राज्यापहारी वैरी ?'

'न तदर्थम्, तद्दिने मह्यं दत्तं प्रसादं प्रत्यादाय गतः खलु ?'

'आम्, त्वं प्रसादाय अनर्हः । किन्तु त्वया सह सम्भाषितुं कोऽस्ति आक्षेपः ?'

द्वाभ्यामपि एकेनैव यानेन ग्रामाय प्रतिगन्तव्यमासीत् । अतः स्थानके प्रयाणिकानां कृते योजिते शिलामञ्चे सहैव उपविष्टौ । ताल्लूकुकेन्द्रागमनकारणे पुनरपि पृष्टे सः अवदत् – 'प्रथमतः मम नियुक्तिः अस्मद्ग्रामस्य शालायामेव आसीत् । अनन्तरं स्थानान्तरणादेशः आगतः । मया कथमपि अस्मत्समीपस्थायां बसवनपुरन्यूटैप्शालायां कारितवान् । अधुना पुनरपि स्थानान्तरप्राप्तिम् आदिश्य अन्यग्रामाय योजितः । कथमपि तत् निरस्य अस्मद्ग्रामाय एव कारयामि इत्यागतोऽस्मि ।'

'अन्यग्रामगमने तव अन्तरायः कः ?'

'पूजा ।'

काळिङ्गः मन्दं हसितवान् । तत् दृष्ट्वा वेङ्कटरमणः तत्क्षणम् अवदत् – 'आम्, पूजा इत्येतत् तव हासास्पदं भवति । अतः एव त्वया सह न सम्भाषितव्यम् ।'

'तदर्थं न हसितं महाराज ! किमपि अन्यत् स्मृतम् । आगच्छ, अमल्दारम् अहं जानामि । तद्द्वारा तव परिवीक्षकाय वाचयामि । अवश्यं चेत् डि.इ.ओ.प्रति संस्तुतिमपि कारयामि' इत्युक्त्वा सः उत्थितः । वेङ्कटरमणः मौनेन तम् अनुसृतवान् । काळिङ्गः एकः एव अमल्दारस्य कार्यालयं गत्वा, सम्भाष्य बहिरागमनानन्तरम् अवदत् – 'तैः वचनं दत्तम् । त्वं बसवनपुरतः मुक्तः मा भव । इतः पञ्चषदिनेषु तुभ्यं तव ग्रामं प्रत्येव स्थानान्तरणं यथा भवेत् तथा आदेशं प्राप्स्यसि ।'

वेङ्कटरमणे काळिङ्गस्य विषये कृतज्ञता उदिता ।

अनन्तरम् उभावपि सहितौ यानं प्राप्तवन्तौ । वेङ्कटरमणः अग्रहारे अवतीर्णः । काळिङ्गः अग्रे स्वफार्म्समीपे अवतीर्णः । अग्रहाराय स्थानान्तरप्राप्त्यादेशः एक-सप्ताहाभ्यान्तरे वेङ्कटरमणस्य हस्तगतः अभवत् ।

एकस्मिन् प्रातःकाले वेङ्कटरमणः देवस्थाने पूजानिरतः आसीत् । बहिः कोऽपि आगतः इव भासितम् । पूजाकाले भक्तानाम् अथवा कस्मादपि ग्रामात् जनानां वा आगमनं सामान्यविषयः इति सः तद्दिशि अपरिवर्त्य पूजाम् अनुवर्तयामास । नैवेद्यं समर्प्य अन्तिमनीराजनाय वर्तिकां प्रज्वाल्य वामहस्तेन घण्टावादने प्रारब्धे बहिरागताः बृहद्घण्टाम् आकर्षितुम् आरभन्त । अन्तस्थस्य विग्रहस्य, मङ्गलनीराजनं समाप्य मन्दिरस्य अग्रे स्थिताय वृषभाय नीराजयितुं तस्यां दिशि परावृत्ते तस्य आश्चर्यम् अभवत् । घण्टाम् आकर्षन्ती काळिङ्गस्य पत्नी । तत्र अन्यः कोऽपि नासीत् । पादुके बहिः संस्थाप्य, कल्याण्यां पादौ प्रक्षाल्य आगतमित्यस्य चिह्नानि आसन् । तां न लक्षितवानिव तस्मिन् बसवसमीपं गत्वा मङ्गलनीराजनं समाप्य परावृत्ते सा एव 'मम पुरतः तत् सारयतु' इत्यवदत् ।

'विश्वासरहितानां पुरतः न ग्रहीतव्यम्' इति उक्त्वा सः अग्रे गतः ।

'अहं विश्वासेन एव आगतास्मि । भवान् विश्वस्यात् ।'

तथापि वेङ्कटरमणः अन्तः प्रविष्टः । किन्तु एकनिमेषं किमपि आलोच्य स्थालिकां बहिः आनीतवान् । हिल्डा ज्वलन्त्याः नीराजनज्वालायाः उपरि हस्तौ प्रसार्य नेत्रे उन्मृष्टवती । वेङ्कटरमणः अन्तः गत्वा तीर्थम् आनीतवान् । वामहस्तस्य उपरि दक्षिणहस्तम् आरोप्य तेन वितीर्णम् उद्धरणत्रयमितं तीर्थं पीत्वा सा हस्तं स्वस्य अरुणकेशेषु प्रसाधितवती । अन्तः गतः वेङ्कटरमणः पुनः निमेषद्वयम् आलोचयन् आसीत् । अनन्तरं कमपि निर्णयं प्राप्तः इव तस्याः दिशि परावर्त्य 'प्रसादं ददामि,

बाह्यात् एकं पर्णम् आनयतु' इत्यवदत्।

हिल्डा गत्वा द्वे पर्णे आनीतवती। तेन वितीर्णं जम्बीररसमिश्रितं चित्रान्नम् एकस्मिन् पर्णे प्रापितवती । अन्यत् पर्णम् अग्रे गृहीत्वा 'एतत् शिशवे' इत्यवदत् । तत्रापि वितरणानन्तरं वेङ्कटरमणः अपृच्छत् – 'काळिङ्गः कुत्र ?'

'सः ग्रामे नास्ति। विद्युत्पम्प्यन्त्रस्य आदेशं दातुं गतः।'

अग्रे सम्भाषितुम् अजानन् सः अन्तः गत्वा प्रसादस्थालीं चतुरस्रे निबध्य गृहाय प्रस्थातुं बहिः आगतः। 'भवता सह सम्भाषितुम् अहमागतास्मि। भवान् ग्रामं प्रस्थितः एव किम् ?' हिल्डा अपृच्छत्।

सा अद्य एवंरीत्या आगत्य भक्त्या नीराजनं, तीर्थं प्रसादं च स्वीकृतवती – इत्येतेन केवलं न, अधुना तया उक्तेन वचनेनापि तस्य आश्चर्यम् अभवत्।

'कः विषयः आसीत् ?'

'एवं स्थित्वा एव पृष्टे किं वक्तुं शक्नोमि ? अपविशतु। अन्यथा अस्मत्फार्म्गृहम् आगच्छतु, वदामि।'

'अधुना तत्र आगन्तुं समयः नास्ति। एकादशवादने शाला गन्तव्या'– इति वदन् सः देवस्थानस्य वेदिकायाम् उपविष्टः। तस्यामेव वेदिकायां तत्समीपे उपविशन्ती सा अवदत्– 'भवान् काळिङ्गश्च बाल्यवयस्यौ इति, भवान् तं पाठितवानपि इति श्रुतम्। सत्यं किम् ?'

सा स्वसमीपे एव उपविष्टा इति किञ्चिद्दूरम् अपसृत्य सः उत्तरम् अदात् – 'आम्।'

तस्य दूरापसरणम् आलोक्य मन्दं हसन्ती, स्वयमेव किञ्चिद्दूरम् अपसृत्य सा अपृच्छत् – 'बाल्यवयस्यः इति वदति। किन्तु तम् एतावद्दूरे त्यजति कुतः ? केचन वैचारिक–भिन्नाभिप्रायाः स्युः। तदर्थं स्नेहः एव विच्छिन्नः भवेत् किम् ? यु मष्ट् ह्याव् डेमेक्रटिक् एप्रोच् टु दि परसन्स्।'

अस्य वचनस्य उत्तरं न स्फुरितम् इति वेङ्कटरमणः तूष्णीम् आसीत्। पञ्च निमेषान् यावत् तदुत्तरं निरीक्ष्य अनन्तरं हिल्डा अपृच्छत् – 'एवं ननु ?'

अधुना वेङ्कटरमणे उत्तरम् अभासत – 'एषः न केवलं भिन्नाभिप्रायस्य विषयः अग्रिमवर्षे तमाखुमूल्यं कियत् स्यात् इति विषये भिन्नाभिप्रायश्चेत् विश्वासस्य च्युतिः न स्यात्। एषः अस्मद्विश्वासस्य प्रश्नः। धर्माधर्मसम्बन्धी आचारस्य प्रश्नः। सः

तावल्लघुतया ग्रहीतुं न शक्यः ।'

तावता एकं पर्णं हस्ते गृहीत्वा चित्रान्नं खादितुं प्रवर्तमाना हिल्डा अपृच्छत् – 'भवान् न खादति किम् ?'

'न, गृहं गत्वा भोजनेन साकं खादामि ।'

'सुष्ठु अस्ति । एतत् कथं कुर्वन्ति ? किं किं निवेशयन्ति ?'

'जम्बीररसः, मरीचकटुः, व्याघरणं कृष्णनिम्बदलम् – सर्वं निवेशयन्ति । कया रीत्या, कियत् कियत् इत्यादि गृहिणी जानाति । अहं न जानामि ।'

'पश्यतु, अत्र आगतायाः मम एकं वर्षम् अतीतप्रायम् अस्ति' – हिल्डा खिन्नस्वरेण अवदत् । 'एकस्मिन्नपि दिने भवान् अस्मद्गृहं नागतः । भवद्गृहिणीं नानीतवान् । अस्मानपि भवतः गृहं न नीतवान् । अहम् एकाकिनी कथं जीवेयम् ?'

अस्य वचनस्य श्रवणेन वेङ्कटरमणस्य व्यसनम् अभवत् । तथापि सः अवदत् – 'अस्माकं जीवनम्, जीवनक्रमः, ध्येयं भवत्यै न रोचन्ते चेत् भवद्गृहं कः कुतस्तावत् आगच्छेत् ? जनाः आवश्यकाश्चेत् भवती वयमिव जीवेत् । नो चेत् एवमेव तिष्ठतु ।'

'एतादृशं धृष्टत्वं मित्रस्य न भवेत् । वयस्यः इत्यङ्गीकरोति । किन्तु कठिनं मनः आर्द्रं न करोति । भवतां देशस्य पद्धतिरेव विचित्रा । कोऽपि भवद्भिन्नतया आचरति चेत् तं तत्क्षणं बहिः स्थापयन्ति भवन्तः । वयं न तथा कुर्मः । अस्माभिः साकं मेलयामः । चर्चां कुर्मः । अस्मदभिप्राये मनः आनयामः । अन्यथा वयमेव तदभिप्रायम् अङ्गीकुर्मः ।'

वेङ्कटरमणः तूष्णीम् आसीत् । सा एव अवदत् – 'मम वचनस्य अभिप्रायः ज्ञातः खलु ?'

'कः ?'

'भवान् इतःपरम् एवं दूरे न तिष्ठेत् । अस्मद्गृहम् आगच्छेत् । अस्मासु यं दोषः इति पश्यति तं तर्कप्रमाणेन बोधयतु । अस्मान् शिक्षयतु । कालिङ्गवंशस्य भवान् एव पुरोहितः इति श्रुतम् । अस्मासु दोषमार्जनं भवतः कर्तव्यं खलु ?'

अस्य वचनस्य श्रवणेन तस्य अभिमानः अभवत् । पूर्वम् एकस्मिन् दिने कालिङ्गः अपि एतादृशं वचनम् अवदत् । इयं तु विदेशीया, भिन्नजनपरम्परावती, एतावद्-शिक्षणवती घनारुणवर्णा, सुदृढाकारा च । एतस्याः महिलायाः मुखात् एतत् वचनश्रवणेन

तस्य एकनिमेषम् अनूह्यरीत्या उल्लासः अभवत् । सः तूष्णीम् उपविष्टः आसीत् । स्वहस्तघटीं पश्यन्ती सा एव 'इदानीमेव दशवादनसमयः । भवता इतोऽपि पद्भ्यां ग्रामं गत्वा, भोजनं समाप्य, शाला गन्तव्या स्यात्' इत्यवदत् ।

वेङ्कटरमणः उत्थाय देवस्थानस्य द्वारं तालिकया पिधाय, कुञ्चिकां कटिसूत्रे संयोज्य पुनरपि अग्रभागस्य घण्टां वादयित्वा पद्भ्यामेव गिरिम् अवतीर्य प्रस्थितः ।

## 3

एकस्मिन् भानुवासरे वेङ्कटरमणः पूजां समाप्य प्रसादादिकं देवस्थाने एव संस्थाप्य तालिकाबन्धनं कृत्वा अधः अवतार्य फार्म्गृहं गतः । सुष्ठु प्रवृद्धस्य तमाखोः कटुगन्धेन फार्म् पूर्णम् आसीत् । वामपार्श्वे कार्पाससस्यानि प्रवृद्धनि आसन् । अन्तः आकाशवाणी-यन्त्रं गायति स्म । बहिर्द्वारि काळिङ्गस्य शिशुः वर्णमयम् अश्वम् आरुह्य क्रीडति स्म । ट्र्याक्टर्कुट्याः पार्श्वे अन्यत् अयःपत्रगृहं सृष्टम् आसीत् । तस्य द्वारे मध्यवयस्का काचन मुसल्मानस्त्री आसीत् । सा जमालपत्नी स्यादिति वेङ्कटरमणे तत्क्षणम् अभासत । तद्गृहस्य पार्श्वे उन्नततन्त्रीजालम् आच्छाद्य तदन्तः केचन कुक्कुटाः पालिताः सन्ति ।

स्वस्य कुटुम्बसहितं स्थित्यनन्तरं माकिम् एकवर्षानन्तरम् आगतं वेङ्कटरमणं काळिङ्गः अतिहार्दिकतया स्वागतीकृतवान् । शुद्धौ अस्ति इति कारणात् वेङ्कटरमणः एकस्मिन् काष्ठासन्दे उपविष्टः । 'कथमपि देवस्थानात् आगतोऽसि । प्रसादः न आनेतव्यः किम् ?' इति काळिङ्गेन पृष्टे सः तत्क्षणम् उत्तरं न दत्तवान् । अन्तर्गृहात् आगता हिल्डा अपृच्छत्- 'तद्दिने भवता दत्तं खलु जम्बीररसान्नम्, अतीव रुचिकरम् आसीत् । तत् कर्तव्यम् इति अस्माकं जमालस्य पत्नी बल्क्वीसां निवेदितवती । तया शिक्षितम् । किन्तु भवता कृते या रुचिः तस्याः तया शिक्षितस्य रुचेश्च भेदः अस्ति इति सा एव अवदत् । अन्यच्च भवता अयोज्यमानम् अन्यमपि पदार्थं वयं तत्र योजयामः ।'

काळिङ्गः तत्क्षणम् उक्तवान् - 'डार्लिङ्ग्, सः सद्यः एव पूजां समाप्य शुद्धौ आगतः । त्वं पूर्वापरम् अनालोच्य वदसि । सः इतः उत्थाय बहिः गच्छेदपि ।'

स्वनासिकायाः अरोच्यमानः कश्चन गन्धः अधुनावधि वेङ्कटरमणम् आवृतः आसीत् । सः कः इति इदानीम् अर्थावबोधे जाते स यथार्थतया तत्र स्थातुं नाशकत् ।

सः एव उत्थाय अवदत् – 'अहमत्र उपवेष्टुं नागतः । भवन्तः एव देवस्थानसमीपम् आगच्छन्तु इति वक्तुम् आगतः ।'

काळिङ्गेन सर्वमपि अवगतम् । सः वेङ्कटरमणस्य अनुरोधं न कृतवान् । 'अधुना भवान् गच्छतु । दशनिमेषाभ्यन्तरे आगमिष्यामः' इति तेन उक्ते वेङ्कटरमणः बहिरागतः । पुनः गिर्यभिमुखः आगच्छन् स्वस्य उभयोरपि पार्श्वयोः प्रवृद्ध्या उन्नतानि तमाखुसस्यानि सूक्ष्मतया अपश्यत् । तेषाम् एकैकमपि दलं कदलीदलमिव आयतम् आसीत् । एकैकस्मिन्नपि सस्ये अकिञ्चनं विंशतिः दलानि । पूर्वं तेन तमाखुसस्यं दृष्टं चेदपि एतावद्विशालतया वर्धमानम् एतज्जातीयं न दृष्टमेव । न्यूनान्यूनं कियत्सहस्ररूप्यकाणां लाभः स्यात् ? – इति मनसि तोलयन् कल्याण्याः उन्नतप्रदेशम् आरुह्य ततः देवस्थानम् आगतः ।

क्षुधाबाधितः, अन्तःस्थितं प्रसादं मुद्गोपस्करं खादितुमनाः अपि, काळिङ्गगृहे नासासङ्गतस्य दुर्गन्धस्य स्मरणात् असहनीयतया तथैव स्थितः ।

न्यूनान्यूनम् अर्धघण्टायाम् आगतः काळिङ्गः पुनरपि अवदत् – 'क्षम्यतां वेङ्कटरमण ! एषा भवतः पूर्वापरं न जानाति । अविचार्य भाषते । भवता गृहे अनुपविश्य अत्र आगन्तव्यं जातम् ।'

'देवस्थानस्य वेदिका गृहापेक्षया उत्कृष्टा एव ननु ?'

'तद् भवतु, मांसाहारः इत्युक्ते भवतां कुतः एतावान् नासाभङ्गः भवेत् ?' हिल्डा अपृच्छत् ।

काळिङ्गः मध्ये निवार्य 'त्वं प्रारम्भे एव गम्भीरप्रश्नान् कुतः उल्लिखसि ? अन्यः कोऽपि लघुविषयः न भासते किम् ?'

'पृच्छतु नाम, तत्र कोऽपराधः ?' वेङ्कटरमणः अवदत् ।

'पश्यतु हिल्डे, तर्कोपस्थापने तस्य न किमपि भयं विद्यते ? दशसु वर्षेषु संस्कृतेन वेदवेदान्तौ अधीतौ तेन । अस्मिन् विषये भवत्याः ज्ञानम् अल्पम् । भवती तु न वेदान्तं पठितवती । गम्भीरचर्चावसरे तस्य आङ्ग्लभाषायाः स्वल्पं स्खलनं स्यान्नाम ।'

'अहं तु तं पराजितं विधातुं न वदन्ती अस्मि । सः ज्ञानवान्, मां बोधयतु । आङ्ग्ल-भाषाप्रतिबन्धश्चेत् भवान् मध्ये साह्यं ददातु ।'

एतेन वचनेन वेङ्कटरमणस्य शरीरं किञ्चिदिव उच्छूनं जातम् । स्वस्य मैसूरुसंस्कृत-

महापाठशालाध्ययनावधिकानि वर्षाणि स्मरन् सः अपृच्छत् – 'मांसाहारो नाम प्राणिहिंसा खलु ?'

'हिंसाप्रश्नः नात्र । प्राणिनः मनुष्याणाम् आहारार्थं सन्ति किं न ? तथा भावितं धर्मदृष्ट्या अपि विरुद्धं न भवति ।'

'कस्मिन् धर्मे तथा बोधितम् ?'

'भवतां धर्मं नाहं जाने । अस्माकं क्रैस्तधर्मे वयं तथैव विश्वसिमः । मनुष्यस्य इव पशूनाम् आत्मा न विद्यते ।'

'तथा चेत् भवद्धर्मस्य श्रद्धा एव असङ्गता । जगति सृष्टानां सर्वप्राणिनाम् अपि आत्मा विद्यते । देवसृष्टौ यः कोऽपि नान्यस्य कस्यचिदर्थं सञ्जातः । मनुष्यः एव सर्वेभ्यः प्रणिभ्यः उच्चतमः इत्येषः असद्विश्वासः ।'

सम्प्रति काळिङ्गः उन्मुखः अभवत् – 'नहि, जन्मसु मानवजन्म एव श्रेष्ठम् इत्येतत् भवन्मुखात् एव श्रुतमासीत् । अधुना एवं वदति ननु ?'

'श्रेष्ठः इत्यस्य कोऽर्थः ? इतरप्राणिषु अविद्यमाना विज्ञानशक्तिः तस्मिन्नस्ति । युक्तम् अयुक्तं च आलोच्य वर्तितुं सः शक्नुयात् इत्यस्मिन् अर्थे केवलं सः श्रेष्ठः । तेन इतरे प्राणिनः स खादेत् इति नार्थः । कनिष्ठानां स्वाहाकरणं श्रेष्ठतालक्षणं किम् ?'

एतस्य वचनस्य उत्तरं दातुं हिल्डा वा काळिङ्गो वा नाजानात् । वेङ्कटरमणः अनुवर्तयन् 'मनुष्यजन्म सदापि श्रेष्ठमिति नोक्तम् । देवजन्मतः मानवजन्म कनिष्ठतरम् । ततोऽपि कनिष्ठतमं दानवजन्म । किन्तु प्राणिनः न दानवाः । बहुषु प्रसङ्गेषु सत्पुरुषाः प्राणिरूपेण जन्म प्राप्नुवन्ति ।'

हिल्डायाः एतत् वचनं नूतनम् आसीत् । 'तत्र कः आधारः ?' इत्यपृच्छत् सा । 'पुराणपठनेन तत् सर्वं ज्ञातुं शक्यते' इति वेङ्कटरमणः अवदत् ।

'प्राचीनेषु पुराणेषु उक्तं सर्वं कथं विश्वसितुं शक्यते ?' काळिङ्गः अपृच्छत् ।

'प्रत्येकं देशेषु विविधानि विचित्राणि पुराणानि सन्ति । तेषाम् आधारेण प्रस्थानं चेत् सर्वसम्मतनिर्णयः असाध्यः एव । अन्यच्च पुराणं नाम अवैज्ञानिककल्पनासृष्टिः । अतः अस्माभिः वैज्ञानिकतानुगणं भाषितव्यम्' हिल्डा वादम् उपस्थापितवती ।

'प्रौढशालायां भवानपि भौतशास्त्रं रसायनशास्त्रं जीवशास्त्रम् अधीतवान् किल ?' – काळिङ्गः अपृच्छत् ।

'अधीतवानस्मि' इति वेङ्कटरमणेन उक्ते हिल्डा अवदत् – 'प्राणिशास्त्रानुसारेण प्राणिजीवनस्य इतिहासं पश्यतु। न्यूनशक्तिमान् प्राणी अधिकशक्तिमतः प्राणिनः आहारो भवति। प्रकृतौ जीवक्रमस्य रचना एव तादृशी अस्ति। तनुगात्रं मीनं बृहद्गात्रः मीनः गिलति। बृहन्तं बृहत्तरः खादति। तस्यापि खादकः प्राणी अन्यः अस्ति। सः मनुष्य एव भवेदिति नास्ति। मनुष्येण एकेन मांसाहारः त्यज्यते इति इतरप्राणिनः स्वकीयम् आहारक्रमं न त्यजन्ति।'

तावता एव कालिङ्गः 'अत्र पश्यन्तु' इति स्वस्य अङ्गुलिं भित्त्यभिमुखं प्रदर्शितवान्। तौ उभावपि तत्र दृष्टवन्तौ। एकः क्रिमिः भित्तौ सर्पन् आसीत्। तस्य पृष्ठतः एव शब्दम् अकुर्वती चोरपदेन सरन्ती काचन गृहगोधिका प्रतिपाल्य आस्यं व्यादाय तं गबकिति गिलति।

'एतदेव उदाहरणम्। सर्वत्रापि प्रचलत् एतदेव जीवक्रियायाः सत्यम्। स्वस्य जीवनस्थितिः प्रत्येकं प्राणिनः मूलधर्मः, मूलसत्यम्, अपरिहार्यं सत्यम्। एतत् मनुष्यजीवस्यापि अन्वीयमानं सत्यम् एव। छागः, महिषः, अजः, गौः – इत्यादिप्राणिनां मनुष्येण पालनं कुतः ? अस्मिन् विषये मनुष्यः इतरप्राणिरीत्या स्वार्थी न भवति। स्वस्य मांसार्थं तान् उपयोजयन्नपि तेषां सन्ततिः इतरक्रूरमृगैः प्राप्ता सम्पूर्णतया नष्टा यथा न स्यात् तथा रक्षति। तेषां सन्तानं परिवर्ध्य, परिपोष्य स्वाभीष्टप्रमाणमात्रं तान् खादित्वा, अन्ततो गत्वा तेषां जातिं संरक्षन् अस्ति। एषः प्राणिनां मनुष्येण क्रियमाणः उपकारः न भवति किम् ?'

हिल्डया इतोऽपि बहु वक्तव्यम् अभीष्टम् आसीत्। किन्तु सर्वं सकृदेव मनसि न प्रसृतम्। पुनः किमपि स्मरन्ती मुखं व्यादत्तवती। किन्तु वेङ्कटरमणः तया न भाषितव्यम् इति हस्तसंज्ञाम् अकरोत्। तस्य मनसि उत्तरं सिद्धं भवति स्म। एकनिमेषानन्तरं तेन उक्तम् – 'सर्वेषामपि प्राणिनां स्वापेक्षया दुर्बलानां जन्तूनां भक्षणेन जीवनं जीवधर्मः इति भवन्तः विज्ञानम् उक्तवन्तः। तत्तु असत्यम्। व्याघ्रः, तरक्षुः, शुनकः, श्येनः इव जीवजगति वृषभः, अश्वः, धेनुः, शुकः कपोतः इत्यादयः शाकाहारिजन्तवः अपि विद्यन्ते। मनुष्यः मूलतः कश्चन प्राणी इति भवद्देशीयाः वदन्ति। एतत् अङ्गीकृतं चेदपि सः शुनकश्येनानां जातौ निवेश्यः प्राणी, उत धेनुकपोतजातीयः प्राणी ? तस्य मांसं विदार्य चर्वितुम् अर्हाः दन्ताः सन्ति इति भवन्तः वदेयुः। तैरेव दन्तैः सः फलपक्वानि खादेत् ननु ? मनुष्यः कीदृशः प्राणी भवेत् भवदभिप्रायेण ?'

हिल्डा तदेकचित्ता तस्य वचनानि शृण्वती आसीत् । तस्याः नीलवर्णे नेत्रे तमेव निरीक्षेते स्म । वेङ्कटरमणः अनुवर्तितवान् – 'प्राणिसन्ततिः न नश्येत् यथा तथा मनुष्यः पालयति, एतद्द्वारा तेषां महत् साहाय्यं करोति इत्युच्यते । फलानासक्त्या तथा करोति चेत् अभिनन्दनीयमेव । किन्तु सः तथा करोति किमर्थम् ? ते प्राणिनः पूर्णतया क्रूरमृगाणां ग्रासाः भवन्ति चेत् स्वस्मै आहारः न लभ्येत इत्येतेन स्वार्थेन । अजच्छागानां क्रूरमृगेभ्यः रक्षणम् इव सः इतरेषां लघुक्रूरमृगाणाम्, उदाहरणार्थं तरक्षुः, सरटः इत्यादीनां रक्षणं कुतः न करोति ? भवद्भिः उच्यमानेन विज्ञानेन मांसाहारस्य नीतेः अनीतेर्वा प्रश्नस्य इत्यर्थः न भवति । मनुष्यस्य स्वार्थाधारेण भवतां नीतिशास्त्रं न निर्मान्तु ।'

तस्य एतावद्वचनावसरे वातावरणं स्तब्धम् अभवत् । हिल्डा तस्य वचनम् अवधारयन्ती तमेव पश्यति । वेङ्कटरमणः पूजार्थम् आगतः एकां विशालाञ्चलां शुद्धवेष्टीम् आवेष्ट्य, स्कन्धस्थितेन कार्पासोपवीतेन साकम् एकं श्लक्ष्णं चतुरस्रवस्त्रम् आच्छादितवान् अस्ति । तस्य उदरम् उरोभागश्च अनावृततया भाति स्म । दीर्घतया पृष्ठतः अवतीर्णाः भासमानाः नीलकुन्तलाः शुष्काः आसन् । भुजबाहुवक्षःस्थलललाटेषु धृताः मिश्रविभूतिपुण्ड्रकाः शुष्कतां प्राप्य गलन्तः सन्ति । काळिङ्गः अवदत् – 'अस्मद्गृहादत्र आगमनानन्तरं भवता स्वल्पोऽपि प्रसादः स्वीकृतो वा ?'

'न ।'

'कुतः ?'

'सत्यं वदामि चेत् तत्रैव मम काचित् असह्यता जाता । न किमपि खादितुं मनः आसीत् ।'

'तदैव मध्याह्नस्य द्वादशवादनम् अभवत् । भवतः बुभुक्षा न भवेत् किम् ?'– हिल्डा अपृच्छत् ।

'श्वः मध्याह्नद्वादशवादनपर्यन्तमपि अहम् एवमेव स्थातुं शक्नोमि । उपवासः इति न महत् महाकार्यम् ।'

'सः उक्त्या श्रुत्या च ब्राह्मणः । संस्कृताधीती' – काळिङ्गः अवदत् । 'तस्य उपवासोऽपि न महान् । उपवासेन तस्य शक्तिरपि न ह्रासमेति । सहनापि न दुष्यति । तत् अस्माभिस्तु न साध्यमेव ।'

'उपवासाचरणाय ब्राह्मणः एव भवेदिति नास्ति । एतस्यैव विग्रहप्रतिष्ठापनायाः पूर्णे पूर्वस्मिन् दिने भवतः पितामहः उपवासेन आसीत् । तद्दिने प्रतिष्ठापनासमाप्त्यनन्तरम्

आगतानां भक्तादीनां भोजनसमाप्त्यनन्तरं तेषां भोजनदलोद्धरणपर्यन्तं, नाम सायं सूर्यास्तमयपर्यन्तं तेन वा भवतः पितामह्या वा मुखे जलमपि न स्थापितम् ।'

'ते तु प्राचीनकालजनाः ।'

'भवतः माता किङ्कालिकजनः ? आवश्यकं चेत् सा अधुनापि त्रिषु दिनेषु उपवासेनापि शान्ता एव तिष्ठेत् । शुक्रवासरे सायं गोपूजनपर्यन्तं सा इदानीमपि मुखे न जलं निक्षिपति । भवता अद्यावधि न ज्ञायते किं तत् ?'

पुरा एकस्मिन् शुक्रवासरस्य अपराह्णे उभाभ्यामपि स्वाभ्यां ग्रामं गत्वा काळिङ्गस्य माता दृष्टा इति स्मरणं हिल्डायाः अभवत् । किमपि आलोचयन्ती सा अवदत् – 'धर्मस्य नाम्नि उपवासः इति आत्महिंसां किमिति साधयन्ति एते जनाः ?'

'आत्महिंसां स्वल्पामपि असहमानाः भवन्तः परप्राणिहिंसां तावता संरम्भेण वादयन्ति ? यः बुभुक्षां सहते सः केवलं स्वक्षुधाशमनार्थम् इतरजीवान् अविनाश्य सावधानेन तिष्ठेत् ।'

काळिङ्गः किमपि प्रष्टव्यम् इति मुखं व्यादत्तवान् । किन्तु हिल्डा तं निवार्य अवदत् – 'इतः चर्चया अलम् । अन्यस्मिन् दिने संवदेम । अद्य वचनं वर्धितं चेत् सः उपवासेन उपविशति । तेस्य सा आत्मतुष्टिस्थितिरेव स्यात् । किन्तु न मया द्रष्टुं शक्यते । खाद्यम् अस्ति किल, तत् किं न खादेत् भवान् ?'

'नहि, अहं गृहे एव भोजनं करोमि ।'

तस्य कारणं प्रष्टव्यम् इति मनसि विद्यमानेऽपि हिल्डा तूर्णीं स्थिता । स्वल्पसमयानन्तरं वेङ्कटरमणः उत्थाय देवस्थानस्य द्वारम् उद्घाट्य प्रसादपात्रं चतुरस्रवचसनेन बद्ध्वा, गृहीत्वा च द्वारे तालिकां लगितवान् । एकवारं द्वारं नेत्रेण उद्युज्य, अङ्गणस्य बृहद्घण्टां पञ्चषवारं गाढं वादयित्वा, उष्णे आतपे, उष्णे भूतले रिक्तौ पादौ विन्यस्य प्रस्थितो गतः ।

ग्रामगमनावसरे तस्य मनसि कोऽपि उल्लासः आसीत् । एतादृक्गम्भीरतया अस्मिन् ग्रामे केनापि सह वादः उपस्थापितः न आसीत् । यद्यपि प्रतिदिनं किमपि शास्त्रम् अथवा पुराणं पठन्नासीत् तथापि तेन सह चर्चितुम् अर्हः यः कोऽपि नासीत् । अद्य काळिङ्गस्य एषा अरुणगृहिणी स्वात्मानं बहु वाचितवती । सः स्वाभिप्रायम् अङ्गीकृतवती उत न इति न ज्ञातम् । अन्यस्मिन् दिने प्रष्टव्यम् इति चिन्तितं तेन ।

## 4

कस्मिंश्चिद्दिने तेन पूजनावसरे हिल्डा तत्र आगता । पुरा कस्मिंश्चिद्दिने यथा कृतं तथा मङ्गलनीराजनं स्वीकृत्य, तीर्थं च स्वीकृत्य प्रसादार्थं पर्णम् आनीय प्रसारितवती । वेङ्कटरमणेन पर्णे गुळपौटेवितरणानन्तरम् 'भवानत्रैव कुतः अल्पमपि न भक्षयेत् ?' इत्यपृच्छत् ।

'प्रसादरूपेण मुष्टिमितं प्रत्यहं भक्षयामि ।'

'तथा न, मह्यं यावद् दत्तं तावद् भक्षयतु । भवदर्थमपि एकं पर्णम् आनयामि, तिष्ठतु' इत्युक्त्वा अन्यत् पर्णम् आदाय दत्तवती । सोऽपि तत्र पूर्णं वितीर्य वेदिकायाः उपरि उपविष्टः । एकवारं मुखे आदाय सा अपृच्छत् 'एतस्य नाम किम् ? कथं कुर्वन्ति ?'

'गुळपौटे इति । रवां, गुडं, घृतं, द्राक्षां, एलां च मिश्रयन्ति । कथमिति न जानामि ।'

'बहु सम्यक् अस्ति । मया पुरा एव कस्मिंश्चित् दिने भवान् उक्तः आसीत्, भवद्गृहिणीम् अस्मद्गृहम् आनयतु इति । तथापि न कृतम् । मामपि भवद्गृहं नाहूतवान् । एतादृशखाद्यानां निर्माणं कथमहम् अभ्यस्यामि ?'

'जमालस्य पत्नी न बोधयति किम् ?'

'एतत्तु कुपितवचनम् । एतादृशपाकान् सा न जानाति इति भवान् जानाति । माम् उद्वेजयेत् इति भवता एवमुच्यते । विषयमेकं पश्यतु, अहम् अमेरिकीया । परस्परम् उद्वेजनेन, बहुविनोदेन च अवस्थानम् अस्माकं जीवनक्रमः । अत्र आगमनानन्तरम् एतावद्दिनेषु मया सह सम्भाषमाणः नासीत् । स्नेहितः इति भाव्यमानः भवान् कोपेन दूरे एव आसीत् । एतदेव प्रथमदिनं, यत्र भवान् माम् उद्वेज्य भाषितवान्, स्मरणे तिष्ठतु ।'

'किन्तु मया भवती उद्वेजितव्या इति न तथा उक्तम् ।'

'एवं वा ? तर्हि कोपेन उक्तं स्यात् । कोपं विना भवतः स्नेहं निरीक्षितुं स्वल्पमपि अर्हता मयि नास्ति किम् ?' इति तं पृच्छता नेत्रयुगेन अपश्यत् । तावता कालेन तस्याः पर्णे स्थितं सर्वं समाप्तमासीत् । तत् दृष्ट्वा वेङ्कटरमणः अपृच्छत् – 'इतोऽपि वितरामि किम् ?'

'वितीर्णं चेत् खादामि । किन्तु भवद्गृहाय न किमपि अवशिष्टं भवेत् ।'

'गृहाय अवशिष्टं नयेदिति नाहमत्र आनयामि । पूजाकाले आगतेभ्यः भक्तेभ्यः

वितरणाय आनीयते । गृहाय प्रसादरूपेण मुष्टिमितम् आदाय गच्छामि चेत् पर्याप्तम्' इत्युक्त्वा हस्तौ प्रक्षाल्य, तस्याः पर्णपूर्णं पुनरपि वितीर्णवान् । तदा स्मृतमिति अपृच्छत् 'कालिङ्गः कुत्र ? एकाकिनी आगता ननु ?'

'जनपदकेन्द्रं गतः । रेल्वेस्थानके क्षीरदोहकं यन्त्रं प्राप्तमस्ति । तत् स्वायत्तीकृत्य आगन्तव्यम् आसीत् ।'

'क्षीरदोहनाय अपि यन्त्रं किम् ?'

'कुतः ? भवतः आश्चर्यं वा ? वयम् अमेरिकायां हस्तेन न दुह्मः । यन्त्रेण दोहनेन गोः अपि सुखम्, अस्माकम् अपि न कष्टम् । अन्यच्च तत् बहु शुचिविधानम् । प्राप्त्यनन्तरं भवानेव पश्येत् ।'

तस्यै वितीर्णे अपि इतोऽपि पर्याप्तं गुळपौटे अवशिष्टम् । 'भवत्याः पुत्राय नयतु' इति उक्त्वा सः एव अपरं पर्णम् अवचित्य, आनीय तत्र वितीर्णवान् ।

'बहुधन्यवादाः । भवान् अस्मासु आगतेषु सदापि अस्मभ्यं खाद्यं ददाति । भवति आगते तु एकदापि अस्मद्गृहे बिन्दुमितं जलमपि न पीयते । एषा जातिपद्धतिः बहुधा दुष्टा किल ?'

'मया भवत्यै खाद्यं किमपि आनीय न दत्तम् । पूजावसरे भवतीं विहाय भक्तः कोऽपि आगच्छति चेदपि ददामि । अद्य यः कोऽपि नासीत् । भवत्यै अधिकं दत्तम् । किञ्च जातिपद्धतिः अन्य एव विषयः ।'

'भवान् विद्यावान् । दर्शनशास्त्रस्य अधीती । एतस्यां जातिपद्धत्यां विश्वसिति किम् ?'

'आम्, मनुष्यस्वभावे एव जातिः अस्ति ।'

'स्वभावः इति वक्तव्यं दूरे तिष्ठतु । जन्मतः तस्याः निर्धारः अनुचितः खलु ?'

'बहुदिनेभ्यः आगतं सम्प्रदायं न कोऽपि किमपि कर्तुं शक्नुयात् ।'

'पश्यतु, अत्रैव भवतः मम च भेदः विद्यते ।' सा सकृत् अच्चैः हसितवती । 'यत् अस्माकं विचारस्य अननुगुणं तत् वयम् उन्मूल्य गच्छामः । भवन्तः तत् बहुदिनेभ्यः आगतम् इति श्लिष्टाः तिष्ठन्ति । तत् तिष्ठतु । अद्य भानुवासरः । भवतः शालायाः विरामः । अस्मद्गृहम् आगच्छतु । पक्वं पदार्थं न खादति चेदपि, भवान् क्षीरं फलं च स्वीकर्तुं शक्नोति ।'

'किन्तु मया गृहं गन्तव्यं खलु ?'

'गृहं तत्रैव तिष्ठति। भवता आगन्तव्यम् एव।' इति उत्थाय सा तस्य हस्तं परिगृह्य आक्षिप्तवती। एका वनिता एवंरीत्या स्वहस्तं स्पृष्टवतीति आतङ्कः अभवत्। न केवलं तत्। सः शुचौ आसीत्। शुचौ एव गृहाय प्रसादनयनानन्तरं तस्य स्वीकारात् अनन्तरमेव माता भोजनं करोति। अधुना तु तस्य अशौचं जातम्। तावता हिल्डा एव अवदत् – 'क्षम्यताम्, पुरुषः स्त्रियं, स्त्री च पुरुषं स्पृशति चेत् अस्मिन् देशे अन्यथा भावयन्ति। अस्मदीयेषु तथा नास्ति। अन्यच्च भवान् शुचौ आसीदिति भासते। त्यजतु, इदानीं गृहम् आगच्छतु।'

वेङ्कटरमणेन एका योजना चिन्तिता। अन्तः स्थितं प्रसादं तथैव संस्थाप्य, देवस्थानस्य द्वारे तालिकां लगयित्वा तया सह प्रस्थितः। उभावपि कल्याणीसमीपात् अवतीर्णौ। कल्पाण्याः योजितं डिसेल्यन्त्रम् अपनीय अधुना विद्युद्यन्त्रं योजितमस्ति। तत् कलकलं विना केवलं भंय्ऽऽ इति शब्देन जलम् उन्नयति। प्रायः एकसप्ताहाभ्यन्तरे अवचयार्थं सिद्धस्य तमाखुसस्यस्य कटुगन्धः नासिकायाः कटुरिति भावितेऽपि तत्र किमपि आकर्षणम् आसीत्। वेङ्कटरमणात् अग्रे अग्रे गच्छन्ती हिल्डा अवदत् – 'इतः सप्ताहाभ्यन्तरे एतत् अवचेयम्। अन्यथा नष्टं स्यात्।'

हिल्डाया वसतिगृहं तालिकामुद्रितम् आसीत्। शिशुम् उन्नीय जमालः गोभिः सह गोष्ठं गतः इति वदन्ती तस्य पत्नी तत्र आगत्य – 'अहं भवतीमेव निरीक्षमाणा आसम्। गिरिसमीपं गत्वा चुल्ल्यर्थं किञ्चिदिव इन्धनम् आनेष्यामि' इत्युक्त्वा प्रस्थिता। हिल्डया द्वारोद्घाटनानन्तरं वेङ्कटरमणः अन्तः गत्वा काष्ठासन्दे उपविष्टः। तया एव हसन्त्या 'भवतः शुचिः समाप्ता खलु। सोफायामेव उपविशतु' इत्युक्तोऽपि सः काष्ठासन्दं न अजहात्। अन्तः गत्वा एकस्यां काचस्थालिकायां कदलीफलचतुष्कं, मुष्टिमितां शुष्कद्राक्षाम्, भल्लातकबीजानि च आनीय तस्य पुरःस्थितायां त्रिपाद्यां संस्थाप्य सा आरामेण उपविष्टा। स्वस्य नास्ति बुभुक्षा इति तेन उक्तेऽपि तत् स्वीकर्तव्यम् इति आग्रहः कृतः। एकं कदलीफलम् उपादाय वितृचं कृत्वा, दक्षिणहस्तेन स्वल्पं स्वल्पं छिन्दन्, फलद्वारा अङ्गुलिः मुखं यथा न स्पृशेत् तथा उत्क्षिप्य मुखे निवेशयन्तं तं दृष्ट्वा सा अवदत् – 'भवादृशाः अमेरिकाम् आगच्छन्ति चेत् कथं निर्वहन्ति ? शुचिः, रुचिः, आचारः शाकाहारनिष्ठा इत्येतैः अन्तरायः न भवेद् वा ?'

'प्रथमतः मम तत्र गमनप्रसङ्गः एव न विद्यते। गतं चेदपि शुद्धशाकाहारिणः

स्थित्वा आगताः अपि सन्ति इति श्रुतम् । फलं क्षीरं तत्र पर्याप्तं लभ्यते इति च । तण्डुलाः, चूर्णं, घृतं यत्रापि लभ्यन्ते । अल्पस्वल्पः पाकः क्रियते चेदलम् ।'

'तथा चेत् भवता तत्र सामाजिकजीवने सङ्गत्य ज्ञातमिति न स्यात् ।'

'न सङ्गतं चेत् मास्तु । तेन किं नष्टं स्यात् ?'

'किमिदं न नष्टम् ? प्राप्तव्यः लाभः च्युतः इति रिक्तहस्तेन स्वदेशागमनं चेत् नष्टम् इति परिभाव्यं ननु ?'

'तेन प्राप्यः लाभस्तु कः ?' – तस्याः वचनस्य अर्थम् अज्ञात्वा अपृच्छत् ।

'न ज्ञातं किम् ?' नेत्रयोः हासं स्यन्दयन्ती सा अपृच्छत् । 'भवतः बुद्धिः निशिता इति भाविता आसीत् । अर्चकजातेः सर्वत्र विषयेषु सूक्ष्मबुद्धिः न विद्यते । अस्माकं क्रिस्त–मन्दिरपूजकेषु अपि एतत् वचनम् अन्वीयते । भवतः मित्रम् अस्मद्देशम् आगत्य रिक्तहस्तेन न प्रत्यागतः । अपि तु तत्रत्यसामाजिकजीवने सङ्गत्य महदेकं वस्तु अपहृत्य आगतः ।'

तस्याः वचनस्यार्थः वेङ्कटरमणेन अधुना ज्ञातः । एतद्विषये सम्भाषितुं तस्य सङ्कोचोऽपि अभूत् । किन्तु हिल्डा एव 'शुचिमन्तः अस्मात् लाभात् वञ्चिताः सन्ति' इत्यवदत् । वेङ्कटरमणः अपृच्छत् – 'पश्चिमदेशेषु युवतियुवकौ परस्परं मुक्ततया चित्वा विवाहं प्रपद्येते इति अहमपि जानामि । किन्तु अस्मत्काळिङ्गः अन्यदेशीयः । नीलदेह–वर्णायां जनसन्ततौ निविष्टः । तादृशं भवती कथं परिणीतवती ?'

'किमर्थम् एषः प्रश्नः उदीरितः ?'

'प्रष्टव्यमिति परिभाव्य पृच्छामि । अयुक्तं चेत् क्षम्यताम् ।'

'भवान् बहु टचि । अत्र अयुक्तं किम् ? स्वकीयस्य विवाहविषयस्य मित्रेषु निवेदनम् इति कस्यापि सन्तोषास्पदम्' – हिल्डा अवदत् । 'अहमपि कृषिविज्ञानमहाविद्यालये अधीयमाना आसम् । एषः क्रीडापटुः आसीत् । ममापि क्रीडायाम् आसक्तिः । आवाम् अधुनापि भवद्देवस्थानस्य कल्याण्यां तरावः । भवता नावगतं किम् ?'

'न' इत्यवदत् वेङ्कटरमणः । तस्य मनसि उच्छलता अभवत् । देवस्य अभिषेक–योग्यायां कल्याण्यां मनुष्यः, तत्रापि स्त्री तरति इत्येतत् पूजनस्य कृतः अपचारः इति भासितम् । सः तत्क्षणम् अवदत् – 'पश्यतु, एकं वाक्यम् । अहं भवतां प्रत्येकं वर्तनानां प्रतिबन्धकतया न तिष्ठामि । तत्तु देवाभिषेकार्थं स्थितं जलम् । तत्र कोऽपि अवतीर्य

वस्त्रमपि न क्षालयेत् इति नियमः अस्ति। भवती इतःपरं तत्र अवतीर्य न तरेत्। एतदवधि न मया ज्ञातमासीत्।'

'अस्तु, तथेति काळिङ्गं वदामि। अमेरिकाविषयं शृणोतु। मम भवतः मित्रस्य च एवंरीत्या परिचयः तेन च स्नेहः अभवत्। मम पिता अपि स्वयं फार्म्युतः कृषिकारः। प्रायोगिकं फार्म्क्षेत्रं द्रष्टुम् एषः अस्माकं फार्म् आगच्छति स्म। बहुषु दिनेषु अस्माभिः सह भोजनं करोति स्म। नृत्यकूटे पानीये च भागी भवति स्म। आवां विवाहाय कृतनिश्चयौ अभवाव।'

'पश्यतु, कियद्भ्यः दिनेभ्यः मम मनसि एकः प्रश्नः अस्ति। भवतां सामाजिक–पद्धतौ स्त्रीपुरुषयोः प्रेम्णा विवाहः कियदपि मुक्तरीत्या भवेदपि, स तु भवत्समाजस्य अन्तःस्थितयोः स्त्रीपुरुषयोः मध्ये यथार्थः स्यात्। जन्मदेशः स्वजनसन्ततिः, मातापितरौ – एतान् सर्वान् विहाय दशद्वादशसहस्रमैल्दूरे स्थितम् एतं देशम् आगत्य वासः कर्तव्यः इति ज्ञातेऽपि भवती कथम् एतं विवाहम् अङ्गीकृतवती ?'

हिल्डायाः अरुणमुखम् इतोऽपि अरुणतां प्राप्य श्वेततायां परिवर्तितम्। किन्तु एतत् वचनं तस्याः प्रियमेव आसीदिति अभासत। 'एतस्य प्रश्नस्य उत्तरं वक्तव्यं चेत् आवयोः प्रेमप्रस्तावः कथम् इति वक्तव्यम् ....'

तस्याः अग्रिमवचनात् पूर्वमेव वेङ्कटरमणः 'मम वचने अयुक्तता अस्ति चेत् क्षम्यताम्। वैयक्तिकोऽयं विषयः न मया प्रष्टव्यः' इत्यवदत्। तस्य मुखं सङ्कोचेन निष्पीडितम् आसीत्।

'तदर्थं कुतः क्षमा याच्यते। प्रेमविषयं वयं मुक्ततया संवदामः। मित्रेषु तस्य कथनावसरे अयमनुभवः पुनर्घटितः इव सन्तोषहेतुः रोमाञ्चकारकः भवति। अस्मिन् देशे भवन्तः सर्वमपि घातयन्ति। प्रपञ्चस्य कियन्तोऽपि देशाः इव हिन्दुस्थानमपि कृषिकार्ये बहु तिरोगामि अस्ति इत्यहं जानामि। 'प्रपञ्चस्य विविधदेशेषु आहारोत्पत्तेः स्तरः' इत्येतत् स्थूलतया अस्मन्महविद्यालये पाठयन्ति। अस्य देशस्य कृषिव्यवसायस्य स्थितिरीतिं काळिङ्गः मां तदा तदा वदति स्म। मया सह विवाहप्रस्तावावसरे अवदत् 'केवलं मयि स्थितेन प्रेम्णा विवाहम् इमम् अङ्गीकरोतु इति नाहं निवेदयामि। बहुनिकृष्टस्थितौ विद्यमानस्य अस्माकं हिन्दुस्थानस्य कृष्टिं वैज्ञानिकीं कर्तुं प्रस्थितोऽस्मि। पुरुषेण यत् किमपि साधितव्यं चेत् तस्य स्फूर्तेः भूमिकतया, मस्तिष्कस्य चालकरूपेण सङ्गतिदायिनी आवश्यकी। भवादृशीं सङ्गमिनीम् अहम् अन्यत्र कुत्रापि न पश्यामि।

न मह्यं चेदपि, मम देशस्य उद्धारार्थम् इति परिभाव्य, भवती मम पाणिं गृह्णातु ।' एतद्वचनश्रवणेन न केवलं मम शरीरं पुलकितं जातम्, अपि तु कस्मैचित् उन्नताय एकस्मै ध्येयाय पदं निधीयमानम् इति परिभाव्य अहं काळिङ्गेन सह विवाहाय सम्मता जाता ।'

हिल्डा एतद्वचनम् ईषद्भावुकतया अवदत् । वेङ्कटरमणः अवदत् – 'तर्हि हिन्दु-स्थानस्य उद्धाराय भवती अत्र आगता ननु ?'

'न मया तथा उक्तम् । तथापि सम्प्रदायः, अन्धता, अवैज्ञानिकता – इत्येतैः पूर्णे अस्मिन् देशे काळिङ्गसदृशानां क्रियाशक्तिमतां प्रयोगशालिनां योग्या सङ्गमनी कुत्र लभ्येत ? एतत् वचनं सः एव अमेरिकायां मम सन्निधौ न केवलम् अवदत्, मम अत्रागमनानन्तरम् अपि वदन्नस्ति । अस्माकं फार्म् सर्वत्र आदर्शभूतम् अस्ति इति सर्वकारीयकृषिविभागस्थाः अधिकारिणः एव वदन्ति । दिनक्रमेण इतरकृषिकाराः अस्मान् अनुकृत्य स्वकृषिव्यवसायक्रमं परिष्कुर्वन्ति । भवता पृष्टमिति उक्तम्, जन्मदेशं, जनसन्ततिं, मातापितरौ च विहाय परदेशम् आगता चेदपि निम्नस्थितौ विद्यमानस्य एकस्य देशस्य जनानाम् उद्धारः किञ्चित्प्रमाणेनापि पर्यायरूपेणापि मया भवतीति किञ्चित् समाधानम् अस्ति । भवतः वयस्यः माम् अकामयत इत्यस्य तेन सह मम विवाहस्य अङ्गीकरणस्य एतदेकं महोन्नतध्येयस्य मुखमपि विद्यते ।'

वेङ्कटरमणः कण्ठमुन्नीय तस्याः मुखम् अपश्यत् । तस्याः नीलनयनयोः अभिमानः, आत्मसन्तृप्तिश्च उच्चलतः । हिल्डा अपि तस्य मुखम् अनिमेषम् अपश्यत् । स्वदृष्टिम् अन्यत्र आवतारयन् अपृच्छत् – 'एतद्देशस्य आहारोत्पत्तेः परिष्कारधैर्येण भवती अत्र आगता इति सद्यः एव उक्तम् । भवतां फार्म् पूर्णम् इदानीं तमाखुं कार्पासं च वर्धितवन्तः । कार्पासं तु वस्त्राय अपेक्षितम् । किन्तु हिन्दुस्थानस्य उष्णपर्यावरणे वस्त्रस्य अभावः नास्ति । फार्म्मध्ये शिष्टे अर्धभागे सर्वत्र तमाखुः वर्धितः । एतत् विशेषजातीयं दलम्, सत्यमेव । किन्तु तेन एतद्देशजनानाम् उदरं पूर्णं भवति किम् ? इतोऽपि बीडि सिगरेट् लभ्येत ननु ?'

हिल्डा एतादृशं प्रश्नं न निरीक्षितवती । किन्तु एकेनैव निमेषेण अवदत् – 'कृषिः इति शब्दस्य अर्थव्याख्या का ? भूमेः उत्पन्नसाधकः उद्यमः इति । तत्तु आहारधान्यमेव भवेदिति न स्यात् । तमाखुनापि एकः उद्यमः प्रवर्धते । अस्य उद्यमस्य एतत् मूलवस्तु । देशस्य आर्थिकप्रगतौ एतस्यापि एकं स्थानं विद्यते । अर्थशास्त्रीयरूपेण भवान् एतत्

विशालार्थेन परिगृह्णीयात् । एतस्य देशस्य तमाखुं ददाति चेत् अन्यदेशीयाः आहारं यच्छन्ति ।

'भवत्या उच्यमानम् अर्थशास्त्रं नाहं जानामि । अहं तत् न पठितवानपि । किन्तु भवन्तः किमर्थम् एतं वर्धयन्ति ? आलुकात्, व्रीहिरागीतः, यवेभ्यश्च अत्र लाभः अधिकः इति ननु ? लाभादायकम् उत्पन्नम् इति अस्मद्ग्रामेषु अपि केचन अर्ध-एकरेमितम्, एकरेमितं तमाखुम् आरोपयन्ति, किन्तु कोऽपि आहारोत्पादनं विहाय समग्रक्षेत्रं तत् न आरोपयति । भूमातुः जठरे बीजम् उत्वा, आहारोत्पन्नं न निःसारयति चेत् स्वस्मै भूमाता शापं दद्यादिति अविद्यावताम् अस्मत्कृषकाणां विश्वासः । भवतां विश्वासः एव अन्यः । तत् गच्छतु । निम्नस्तरे विद्यमानस्य देशस्य अन्नसङ्कटात् मुक्तेः अनुग्राहकं किमपि महोन्नतध्येयं भवतोः प्रेम्णः विवाहस्य च अस्तीति न भासते । भवतां समाजस्य पद्धतिम् अनुसृत्य सर्वे युवयुवतीजनाः इव भवन्तौ अपि विवाहं निरूढवन्तौ । पत्या सह पत्नी इव भवती काळिङ्गेन सह आगता । अस्मद्ग्रामीणाः स्त्रियः शिरसि गोमयम् आरोप्य तासां तासां पतीनां साहाय्यं यथा कुर्वन्ति तथा भवती अपि ट्र्याक्टर् चालयित्वा पत्युः साहय्यं करोति ।'

एतद्वचनं शृण्वत्याः हिल्डायाः मुखभङ्गः इव जातः । अद्य सा तेन सह धर्माधर्मौ नीत्यनीती – इत्यादीन् गहनविषयान् अधिकृत्य न तर्कितवती । वैयक्तिकान् भावनायाः अगाधे तले मग्नान् विषयान् निवेद्य आत्मीयेन सह स्नेहसुखम् अनुभवति । तदर्थमेव प्रातः देवस्थानं गत्वा वेङ्कटरमणम् आनीय आगता । अजानत्या एव तस्याः सम्भाषणं किञ्चिद्गम्भीरताम् आसादयत् । किन्तु अयं पूजकः पुरः उपविष्टायाः भावना कीदृशी स्यात् इति स्वल्पमपि अनालक्ष्य स्वस्य भासितं सुनिश्चयेन उक्त्वा तूष्णीम् उपस्थितः । यथा स्थितायां तस्याम्, 'अहमत्र परदेशीया' – इति भावना उपस्थिता । पतिं विहाय अस्मिन् देशे किमपि मित्रं स्वस्य नास्ति । अस्मिन् ग्रामे यः कोऽपि मित्रं स्यादिति साध्यतापि नास्ति । एषः एकः एव सङ्गतः स्यादिति तस्याः पतिः तदा तदा अनुमोदयन् अवदत् । एषः तस्याः भावनां स्वल्पमपि अनालक्ष्य एवं निर्दाक्षिण्यतया भाषते इति न परिभावितम् आसीत् । गतेषु कतिपयदिनेषु सा तं सन्दृश्य भाषते स्म । धर्मस्य विषये, नीतेः विषयेऽपि तेन स्वस्मात् कियदपि भिन्नाः विरुद्धाश्च अभिप्रायाः प्रतिपादिताश्चेदपि सा तस्मिन् किमपि आकर्षकव्यक्तित्वं दृष्टवती । सः यथार्थतया स्वेषां स्नेहितः इति भवितमासीत् । किन्तु तस्मिन् तस्याः विषये स्वल्पतयापि स्नेहः अनुकम्पा च नासीदेव किम् !

अपमानः अनुभूतः इव हिल्डायाः नेत्रे बाष्पैः आकुले । किन्तु तस्य पुरतः रुद्यते चेत् स्वाभिमानस्य भङ्गः स्यादिति तत्क्षणम् अन्तः प्रस्थिता । तत् सोऽपि लक्षितवान् । स्वस्य वचनेन तस्याः वेदना भवेदिति तस्य मनसि आगतं चेदपि तादृशोद्देश्येन तथा नोक्तं तेन । अन्तः गता हिल्डा सपादघण्टायामपि न बहिरागता । अन्ते वेङ्कटरमणेन एव 'भवत्याः मनसि घातः जातश्चेत् क्षम्यताम् । मम कालः अतीतः । अहं गच्छामि' इत्युक्त्वा एकं निमेषं यावत् निरीक्षितेऽपि सा बहिः नागता । सः उत्थाय बहिरागतः ।

मध्याह्नस्य सूर्यः तदानीमेव मूर्ध्नः उपरिष्टात् नीचैः वलन् आसीत् । शिरसः छाया पादात् हस्तमितं दूरं गता आसीत् । देवताप्रसादः मन्दिरे एव आसीत् । सः शुचौ नीत्वा यावत् न दीयते तावत् स्वस्य माता उपवासेन तिष्ठतीति स्मृत्वा सः व्याकुलः सञ्जातः । किन्तु हिल्डा तस्य हस्तस्पर्शेन अशुचिं विहितवती । देवस्थानं गत्वा सः कलशम् आदाय, आगत्य च कल्याण्यां जलेन परिपूर्य, आनीय आपादमस्तकम् अभिषेचनं यथा स्यात् तथा जलम् अभिषिक्तवान् । अनन्तरम् आर्द्रताशुचौ प्रसादपात्रं परिगृह्य, द्वारं तालिकया पिधाय, अङ्गणे बृहद्घण्टां पञ्चषवारं वादयित्वा, तप्ते भूतले सरसरिति पदं विन्यस्यन् ग्रामाभिमुखम् अवतीर्य गतः ।

## 5

कार्पासस्य तमखोश्च अवचयं समाप्य सर्वमपि परिष्कृतं च कृत्वा विक्रीतमपि आसीत् । व्ययं व्यवकलय्य षट्त्रिंशत्सहस्ररूप्यकाणि अवशिष्टानि । ग्रीष्मः समीपे सन्निहितः आसीत् । इदानीं यत् किमपि धान्यम् उप्यते चेदपि मेमासान्त्ये प्रारप्स्यमाणे वर्षाकाले आपतितम् उत्पन्नं कुपूयं स्यात् । सद्यःकाले पुनरपि आलुकम् आरोप्य तस्य फलवत्तानन्तरम् एकं मासं यावत् भूमिं तथैव विहाय, अनन्तरं पुनरपि उत्तमजातीयः तमाखुः अशेषफार्म्पूर्णम् आरोपणीयः इति निर्धारः ताभ्यां कृतः ।

हिल्डा साम्प्रतम् अतीव अन्तर्मुखी सदा स्वात्मनि एव किमपि चिन्तयन्ती तिष्ठति । कतिचिद्दिनेषु तस्याः आरोग्यम् अपि समीचीनं नासीत् । यथास्थितमेव शिरश्चङ्क्रमणं, जठरे तुमुलम् इत्यादिना अस्वस्था भवति स्म । अतीव आलोचनाग्रस्ता यदा तदा स्वकीयं सार्धद्विवर्षवयस्कं शिशुं गाढम् आलिङ्ग्य एकं निमेषं नेत्रे निमील्य तिष्ठति । पुत्रकः जाकः आङ्ग्लभाषयापि भाषते । जमालेन तस्य पत्न्या च शिक्षितं कन्नडम् अपि भाषते । सहैव उर्दुम् अपि भाषते । जाकस्यापि तत्र सहचरः नासीत् । जमालः एव तस्य सहचरः ।

हिल्डा एकस्मिन् दिने पतिं गाढम् आलिङ्ग्य अवदत् 'डियर्, मम आरोग्यविषये कातरो माभूः । अन्यत् किमपि नास्ति । जाकस्य अनुजा, अनुजः वा भवेत् । तव न कोपः स्यात् खलु ?'

'किञ्चिदपि कोपः नास्ति । भवती अपि खिन्ना माभूत् । किन्तु भवती सदापि कुतः एवं म्लाना भवति ? कतिवारं मया उक्ता आसीत् भवती ! भवत्याः समन्वितः कोऽपि नास्ति इत्यहं जानाम्येव । किं कर्तुं शक्यते ?'

'कान्त, अस्मिन् देशे मम कदापि समन्वितः न लभ्यते ।'

काळिङ्गः अपि इदानीम् अन्तर्मुखः जातः । एकाकित्वं तमपि बाधते स्म । यत्किञ्चित्कार्यार्थं ग्रामस्य गृहे गते, स्वयम् न केवलम् अस्मिन् ग्रामे, अस्मिन् जनसन्ताने एव एकाकी इव भासते । ताल्लूककेन्द्रं, जनपदकेन्द्रं गच्छति स्म । फार्म्कर्ममग्नतां विहाय अन्यत्र सर्वत्र एकाकिता आवृता निष्पीडयति । सः अवदत् 'डार्लिङ्ग्, गतेषु कतिषुचिद्दिनेषु वेङ्कटरमणः आगच्छति स्म । अधुना सोऽपि कुतोऽपि नागच्छति । स तु आगच्छेत् चेत् खिन्नता गता स्यात् ।'

'अस्य मनुष्यस्य अस्माकं च कदापि समन्वयः न भवेदेव । एतावत्सु दिनेषु गतेष्वपि सः एकस्मिन्नपि दिने मां तद्गृहं न नीतवान् । तमहं गौरवेण भावयामि । किन्तु परस्परम् अस्मासु आचारविचारेषु स्वल्पोऽपि समन्वयः न स्यादेव । 'एति' इति उक्ते 'प्रेति' इति वदतां सहवासेन मनसः उल्लासः कथं लभ्येत ? अयं जमालः तस्य पत्नी च केवलम् समीपवर्तिनौ स्याताम् ।'

किञ्चित्कालं किमपि आलोचयता काळिङ्गेन उक्तम् – 'पश्यतु, वयमत्रैव फार्म्क्षेत्रस्य वृतेः अन्तः एव वर्तामहे इति अनेन अस्माकं खिन्नता वर्धते । वयमेव चतुर्जनानां सङ्गमस्थलं गच्छेम ।'

'कुत्र गन्तव्यम् ?'

'इतः चतुर्मैल्दूरे 'मारिकेरे' इत्येकः ग्रामः अस्ति । तत्र 'मारम्मा' इति ग्रामदेवतायाः महत् देवस्थानम् अस्ति । एतद्दिनात् अष्टमे दिने तत्र यात्रोत्सवः भवति । चोमनृत्यम्, अग्नौ पद्भ्यां गमनम् इत्यादीनि बहु इण्टरेष्ट्जनकानि दृश्यानि विद्यन्ते । जाकस्यापि खिन्नता गता भवति । गत्वा आगच्छाम ।'

'ए नैस् ऐडिया ।'

# त्रयोदशः अध्यायः

## 1

मारिकेरेमाराम्बा समन्तात् दशसु योजनासु महिमवती । अङ्गारः इव ज्वलती नेत्रे, यत्किमपि विदारयितुं समर्थान् वक्रदन्तान् च प्राप्तवती सा कोपवती देवता । प्लेग्, सिडुबु, वमनम्, अतिसारः – इत्यादीनां पीडिका या कापि देवता तत्समन्तात् प्रदेशं प्रविशति चेदपि तां पलायनपरां कर्तुं शक्तिरस्ति चेत् सा केवलं माराम्बायाः एकस्याः एव । किन्तु एतां व्याधिदेवतां माराम्बा एवमेव पलायितां न कारयति ; अपि तु ये ग्रामीणाः, ये गृहस्थाः तस्यै अर्पणबुद्ध्या अर्पणीयं बलिं समर्पयन्ति तेभ्यः एव केवलं तस्याः रुद्रहस्तः अभयदायी आसीत् । इतरेषां संरक्षणं तस्याः कर्तव्यं नासीत् । अतः इतरासां कासामपि देवतानाम् अपेक्षया जनाः तस्याः यात्रोत्सवम् आगत्य भक्तिम् अर्पयन्ति स्म ।

अस्मिन्नवसरे पूर्वं यदा कदा वा अविद्यमानसङ्ख्यया जनाः मिलिताः आसन् । मन्दिरस्य पुरतः विशालं प्राङ्गणं यथा छिन्नं स्यात् तावद्भिः जनैः सह, समन्तात् सर्वत्र कर्तितधान्येषु क्षेत्रेषु अपि आपणाः प्रसारिताः आसन् । नूतनवस्त्राणां पात्रशरावाणां च आपणात् आरभ्य एकेन रूप्यकेण एव चित्रग्राहकाणि चित्रगृहमन्दिराणि अपि आगतानि । देवस्थानस्य पुरतः सम्पद्यमानैः मृदङ्गशृङ्गकाहलवादनैः सह बालकानां पीपी–वंशिकानां तूर्याणां च कलकलः अपि समग्रयात्रोत्सवम् आवृत्य निमज्जयामास ।

भोजनम् उपाहारं च समाप्य प्रातः एकादशवादनावसरे हिल्डा, कालिङ्गः जाकश्च आवृत्तयाने उपविश्य यात्रोत्सवम् आगताः । हिल्डायाः अरुणवर्णः, उन्नतदेहबन्धः, परिधानं च जनानां यात्रोत्सवे माया मन्त्रः गारुडविद्या इत्यादि आश्चर्यकरम् इव अपरम् अश्चर्यकारि वस्तु अभवत् । यद्यपि तेषु अरुणजनं द्रष्टारः पुरुषाः अनेके आसन्, किन्तु बहुभागीयानां महिलानां सा जाकश्च चकितकारिणौ जनौ आस्ताम् । यात्रोत्सवे एकं वृत्तं परिभ्रम्य, तेषां देवस्थानस्य अग्रभागागमनावसरे द्वादशवादनम् अभवत् ।

देवस्थानस्य पुरःस्थितस्य बलिस्तम्भस्य समन्तात् स्थितान् जनान् द्वौ रक्षिभटौ दूरतः अपसार्य एकं विशालवृत्तमितं स्थलं रिक्तं कुर्वन्तौ आस्ताम् । देवस्थानस्य वामपार्श्वस्थात् प्राकारात् पारे बहुशः द्विशतात् अधिकाः महिषाः बद्धाः आसन् ।

काळिङ्गः हिल्डां देवस्थानस्य अन्तः नीत्वा मारीविग्रहं, देवस्थानस्य अन्तः प्राङ्गण-भित्तिद्वयेऽपि स्थितान् वेतालान् च प्रदर्श्य बहिः आगच्छन् आसीत् । मार्गे कश्चन रक्षिभटाधिकारी आगत्य, सम्भाष्य हस्तझम्पां दत्तवान् । तेन स्वगृहिणीपरिचायनानन्तरं सः एव तस्याः दक्षिणहस्तं परिगृह्य किञ्चिदधिककालं यावत् कम्पयामास । हिल्डायाः ग्रामागमनानन्तरम् अन्येन केनचित् तस्याः हस्तझम्पनम् इदम्प्रथमम् आसीत् । तेषां फार्म्केन्द्रं जनपदाधिकारिप्रभृतयः कदाचित् आगताश्चेदपि ते दूरतः एव हस्ताभ्यां नमस्कुर्वन्ति स्म । अयं तु ताल्लूकरक्षिभटनिरीक्षकः । काळिङ्गात् द्वित्रवर्षैः ज्येष्ठः इव दृश्यमानः सः उन्नतदेहबन्धयुतः पुरुषः । रक्षिभटस्य खाकिवस्त्रेण तस्य व्यक्तित्वम् उद्भासते स्म ।

'किमिदम् ? यात्रोत्सवं भवान् आगतः ? अग्रहारस्य उपनिरीक्षकः आगच्छति चेत् पर्याप्तं नासीत् किम् ?' काळिङ्गः अपृच्छत् ।

'मेडंकाळिङ्गा कन्नडं जानाति, उत न इति नाहं जानामि' इत्युक्त्वा सः आङ्गल-भाषया एव सम्भाषितवान् । 'थ्याङ्क् यू फार् दि कन्सिडरेशन्' – इति हिल्डया स्वकृतज्ञता-निवेदनानन्तरं सः उक्तवान् – 'अस्यै देवतायै महिषबलिः दीयते इति जानन्ति खलु ? अस्य एतदेव अन्तिमं वर्षम् । इतःपरं न कमपि प्राणिनं बलिं दद्यात् इति सर्वकारस्य आज्ञा जाता । एतद्वारे यात्रोत्सवस्य रथोत्सवस्य च समाप्त्यनन्तरं नाम जुलैमासात् आज्ञां निष्ठुरतया कार्यरूपेण आनेष्यामः । एषः अन्तिमः अवसरः इति भक्तादयः पूर्वतनान् आगमिनः सर्वान् सेवासङ्कल्पान् सम्मेल्य महिषान् आनीय अर्पितवन्तः । एतदवधि आगतानां सङ्ख्या त्रिंशदधिकद्विशतम् । एवमेव भवेदिति निरीक्ष्य अहमेव आगतोऽस्मि । एतादृशेषु अवसरेषु यात्रोत्सवः अपि प्रतिवर्षापेक्षया अत्यधिकं सङ्गतः भवति । किमपि तुमुलम् अपि सम्भाव्यं स्यात् । अफ्कोर्स् मम सबार्डिनेट् सब्इन्स्पेक्टर् अपि आगतः । विंशतिः जनाः कान्ष्टेबल्स् अपि सन्ति ।'

'महिषबलिः कथं दीयते ?' हिल्डा अपृच्छत् ।

'अत्रैव भवति । भवती एव पश्येत् । आगच्छतु, आतपे कियत्पर्यन्तम् उत्तिष्ठेत् ?' – इति निरीक्षकः तौ उभावपि तत्रैव स्थितम् उत्सवमूर्तिमण्डपं नीतवान् । उन्नतस्तरे

निर्मिते मण्डपे न केवलं छाया आसीत्, अपि च ततः बलिस्तम्भः स्पष्टतया दृश्यते स्म । मन्दिरगौडम् आहूय, निरीक्षकः त्रीन् आसन्दान् आनाय्य निवेशितवान् । मध्ये हिल्डा उपविष्टा । तस्याः वामपार्श्वे निरीक्षकः आसीनः अभवत् । अन्यस्मिन् आसन्दे कालिङ्गः जाकम् उन्नीय उपविष्टः । कामपि सूचनां निवेद्य अवगन्तुम् उपनिरीक्षकः तत्र आगतः । आसीनः एव तस्य वन्दनं स्वीकृत्य निरीक्षकः तस्मै आदेशं दत्तवान् । कञ्चन कान्ष्टेबल्जनम् आहूय नारिकेलजलम् आनेतुम् आदिष्टवान् ।

स्वल्पेनैव कालेन बलिः आरब्धः । तत्र प्रवर्तमानां प्रत्येकं घटनां निरीक्षकः सविवरणं तस्याः पृष्ठभूमिकया सह स्वेन इतोऽपि एतादृशेषु अनेकयात्रोत्सवेषु दृष्टान् बलिविशेषान् संयोज्य कथयति स्म । आश्चर्याञ्चिताभ्यां नेत्राभ्यां हिल्डा बलिस्तम्भं पश्यन्ती तद्वचनानि शृण्वती आसीत् ।

स्तम्भं परितः दशवितस्तिमितं स्थलं विहाय जनाः सम्भृताः आसन् । मध्याह्नस्य ग्रीष्मातपः आकाशात् तप्तः सर्वेषां मस्तकानाम् उपरि वर्षति स्म । देहस्य मुखस्य च स्वेदं प्रोञ्छन्तः छायार्थं मूर्ध्नि पञ्चवस्त्रम् अथवा धृष्टपट्टम् आच्छाद्य पुरुषाः, शाटिकायाः अञ्चलम् आच्छादयन्त्यः महिलाः अपि उत्थिताः बलिस्तम्भान्तं पश्यन्ति स्म । ललाटे, भुजयोः, वक्षःस्थले, कण्ठे, बाह्वोश्च सर्वत्र हरिद्राकुङ्कुमं विलिप्य, महिला इव शाटिकां परिधाय, उपरितनम् अञ्चलं स्कन्धस्य उपरि आनीय कटौ परिदधत् अम्बापूजकः आगत्य, स्तम्भे निम्बदलैः जलम् असिञ्चत् । भीमकायौ उभौ पुरुषभृत्यौ एकैक-वितस्तिदीर्घधारायुतान् षट् सप्त वा परुषपरशून् उद्वहनेन आनीय समीपे निहितवन्तौ । पूर्वदिने नूतनतया कर्मकाराभ्यां क्षालितानां तेषां परशूनां धाराः आतपे पळपळिति प्रकाशन्ते स्म । तेषां त्रिवितस्तिमिताः त्सरवः धृष्टपुष्ट्या शृङ्गिकया कृताः आसन् ।

परशूनां महिषघातकानां च उपरि जलप्रोक्षणानन्तरं पूजकः महिषबन्धनाभिमुखं गतः । छायाम् आश्रितुं प्रतीक्षमाणाः, परस्परम् अपरिचिताः महिषाः फूत्कारं कुर्वन्ति स्म । निम्बदलानि कलशे निमज्य पूजकः सर्वेषाम् उपरि जलबिन्दुप्रोक्षणं यथा भवेत् तथा स्वबाहुम् उत्क्षिप्य उत्क्षिप्य प्रोक्षते स्म । जलस्य स्थूलबिन्दुषु कतिचन महिषाणां मुखेषु पतितेषु ते हितानुभवेन चटुलदेहाः जाताः । तावता एव अन्यत्र उत्सवमूर्तिना साकं गताः पटहवादकाः पुनरागत्य रौद्रेण वादयितुम् आरब्धवन्तः । शरीराननयोः कुङ्कुमलेपकः कश्चन मध्यवयस्कः भीमः देवस्थानात् आधाव्य बलिस्तम्भस्य समीपे अवस्थितः । मन्दिरगौडः तस्य हस्ते एकं मेषम् आनीय दत्तवान् । स्वस्य कमपि सहचरम्

आप्राप्तवन्तं छागम् अविरतं झम्पमानम् एव सः भीमः आलिङ्ग्य, परिगृह्य तस्य कण्ठे स्वदन्तान् निवेशितवान् । एकवारं मुखम् आक्षिप्य, अन्यस्मिन् स्थले तस्य दन्तानां लगनावसरे छागस्य कण्ठात् रक्तं स्रवति स्म । पुनरपि राक्षसः इव हनुं व्यादाय तस्य कीकसं स्वश्वदन्तेषु लगयित्वा, नेत्रे निमील्य, दृढं जग्ध्वा, मुखे लग्नं मांसपिण्डं पृथक्कृत्य निष्ठीवनानन्तरं तस्य कण्ठात् रक्तस्रावः आरब्धः । एकमेव वारं व्यांय्कारं कृतवतः छागस्य ध्वनिः स्थगितः अभवत् । सः पुनरपि तस्य गवास्थिनि दन्तानां लगनेन रक्तं तन्मुखात् देहे सर्वत्र स्यन्दितम् । छागः तावता कालेन अम्बापादम् अविन्दत ।

पटहवादकाः साम्प्रतम् इतोऽपि द्रुततया रुद्रं वादयन्ति स्म । स्वदन्तान् देवस्थानस्यान्तः स्थितस्य विग्रहस्य दंष्ट्रान् इव व्यादाय सः भीमः चतुःकृत्वम् उत्प्लुत्य गच्छन् एकस्मिन् पार्श्वे अवस्थितः । तत्पार्श्वे स्थिताः जनाः धार्मिकभयभक्तितः द्विव्यामदूरम् अपसृतवन्तः । तावदेव पङ्क्त्या महिषान् ग्रहीतारः पुरुषभृत्याः आगच्छन्ति स्म । अग्रे आनीतस्य महिषस्य शृङ्गं बलवत्या रज्ज्वा संयम्य सः देवस्थानाभिमुखः यथा स्यात् तथा बलादाकृष्य, मुखं बलिस्तम्भलग्नं विधाय बद्धवन्तः । तस्य रवरवेति नादः द्रुतरुद्रम् अतिरिच्यमानः यथा स्यात् तथा गत्या पटहः वाद्यते स्म । एकं परुषपरशुं हस्ते गृहीत्वा तस्य त्सरुं संस्पृश्य नेत्रे उद्वर्तयन् कश्चन पुरुषभटः उत्पात्य महिषस्य कण्ठे पातयामास । परशोः त्रिचतुरङ्गुलम् अन्तःप्रवेशेन मांसखण्डस्य उपरितनं शुक्लम् कङ्कालं भग्नं जातम् । महिषः पटहरवमपि आवृण्वता आर्तनादेन उच्चैः आक्रन्दत् । लग्नं परशुम् उत्पाट्य पुनरपि आवेशितः द्वितीयः आघातः इतोऽपि पञ्चषाङ्गुलतलं लग्नम् आसीत् । महिषः स्वचतुष्पादेभ्यः शक्तिं रूढां कृत्वा सकृत् उत्पतितः । तावता परशोः तृतीयः घातः संविष्टः । तस्य कण्ठः तिर्यक्चालितः । मुण्डम् अधः पतितम्, रुण्डं तु मस्तकशृङ्गसमेतं बलिस्तम्भे बद्धायां रज्ज्वाम् एव अवशिष्टम् । दबदबिति बहिः निःसृते रक्ते मृत्तिकायाः उपरि कुल्यां सृजति सति तत्र तत्कर्मार्थम् एव निरीक्षमाणाः अन्त्यजाः तस्य शरीरे रज्जुम् आबद्ध्य दूरम् आकृष्य, बलिस्तम्भे श्लिष्टं मुखम् अवातारयन् ।

तत्क्षणम् अन्यं महिषं स्तम्भसमीपम् आकृष्य आनीतवन्तः । स्वेन तदा एव दृष्टात् दृश्यात् भीतः सः पुरतः अनागच्छन् पुरतः जानुनी भूतले निवेश्य तोदितुम् आरभत । किन्तु एतादृशपशूनां दण्डनेन शासनविद्यायां निष्णाताः चत्वारः भटजनाः तम् अग्रतः प्रचोद्य मुखं शृङ्गसहितं बलिस्तम्भे लगयित्वा बद्धवन्तः । पूर्वतनमहिषस्य इव एतस्य कण्ठेऽपि घातत्रयपातनेन रुण्डं मुण्डं च पृथक् जातम् । ततः स्रुतं रक्तं पूर्वतनमहिषस्य

रक्तेन सृष्टां घनीभूयमानां कुल्याम् अग्रतः प्रावाहयत् । अन्त्यजाः एतस्य रुण्डं मुण्डं चापि आकृष्य नीतवन्तः । तृतीयस्य पर्यायः प्राप्तः ।

एकघण्टावधौ सामन्यतः विंशतिमहिषाणां बलिः अभवत् । रक्तस्य कुल्या देवस्थानस्य वामपार्श्वे तटकाभिमुखं प्रसृता आयता भूत्वा मृत्तिकया घनीभावं प्राप्ता । मृतानां महिषाणां शरीराणि अन्त्यजाः शकटेषु प्रपूर्य नयन्ति चेदपि एतेषां मारणवेगेन तैः वाहितुं न शक्यम् अभूत् । अतः शवानाम् राशिरेव अवर्धत । एतावत्पर्यन्तमपि गरुडाः, गृध्राः, काकाश्च यात्रोत्सवे बालकैः अजागरूकतया गृहीतानां मोदकवटकादीनाम् आखेटनार्थम् आकाशे डयन्ते स्म । अधुना ते सर्वे मुखराः रक्तमांसगन्धेन बलिस्तम्भसमीपम् आगताश्चेदपि अधः संहते जनसमूहे अवतीर्य पेशीरक्तानां रुचिम् आस्वादयितुम् अधीराः उपर्युपरि डयन्ते स्म ।

एतत् दृश्यं पश्यन्ती हिल्डा स्वपत्यभिमुखं परिवर्त्य अवदत् – 'डियर्, अलम् अनेन अनागरिकहिंसायाः दर्शनेन । चलतु, गृहं गच्छाम ।'

काळिङ्गः तत्र नापश्यदेव । तस्य मनः अन्यत् किमपि आलोचयत् आसीत् । तेन तस्याः वचनं न श्रुतम् । किन्तु तस्याः अपरस्मिन् पार्श्वे उपविष्टः निरीक्षकः अवदत् – 'एस् लेडि, एषा निश्चयेन अनागरिकपद्धतिः । अतः एव एतस्याः स्थगनाय सर्वकारेण आज्ञा कृता । एषः एव अन्तिमावसरः इति एतावन्तः बलयः प्राप्ताः । किन्तु सायम् तप्ताङ्गारोपरि चलनं भवती पश्येत् । वामपार्श्वे पश्यतु, एतावतां महिषाणां बलिदान-समापने सायं पञ्चवादनं षड्वादनं वा भवेदेव । तावत्पर्यन्तं मया सह आगच्छन्तु । शालायाम् आरामेण विश्रान्तिम् अनुभूय, सायम् अङ्गारोत्सवं रथोत्सवं च पश्येयुः ।'

काळिङ्गः अपि एतद्वचनम् अङ्गीकृतवान् । निरीक्षकः अग्रे गतः । जनाः मार्गात् अपसृत्य पङ्क्तिद्वयेन अतिष्ठन् ।

## 2

ते सायं सार्धपञ्चवादनपर्यन्तमपि ग्रामात् बहिः स्थितायाः शालायाः भवने आसन् । निरीक्षकः भृत्यम् उक्त्वा मञ्चिकाद्वयम् संयोज्य, निवेश्य 'इच्छति चेत् विश्रान्तिम् अनुभवतु' इति हिल्डाम् अवदत् । घटिकां यावत् शयनीयम् इति भाविते़ऽपि निरीक्षक-

महोदयस्य अत्युपचारात् सङ्कोचम् अनुभूय, सा आसन्दस्य पृष्ठभागम् आधृत्य उपविष्टा विश्रान्तिम् अनुभूतवती । निरीक्षकः जाकेन साकमपि आङ्ग्लभाषया भाषितवान् । तं श्लाघितवान् च । हिल्डा गर्भिणी इति सूक्ष्मता तस्याः देहहस्तादीनां नामनेन भासमानम् आलस्यम् अपि च एकदा बहिः गत्वा सा वमनं कृत्वा आगतेति च तेन ज्ञाता अपि 'त्वम् एकः एव पुत्रः किं मातापित्रोः ?' इति सः जाकम् अपृच्छत् ।

सार्धपञ्चवादने ततः प्रस्थाय त्रयः अपि ग्रामसमीपस्थस्य अन्यस्य मन्दिरस्य पुरतः गताः । द्वे अपि एकस्याः एव देवतायाः मन्दिरे । बलिस्तम्भयुतं मूकदेवतायाः मन्दिरम्, उत्सर्वमूर्तिस्थापनं तु ग्रामस्य पुरतः स्थिते मन्दिरे भवति ।

उत्सवदेवतायाः मन्दिरस्य पुरतः पञ्चविंशतिशकटमितानि त्रिंशत्–शकटमितानि वा काष्ठानि दगदगिति प्रज्वाल्य, विकासितानाम् अङ्गाराणां राशिः कृतः आसीत् । तं परितः जनाः सम्भृताः । मध्याह्नतः महिषबलिद्रष्टार एव जनाः अत्र सम्मिलिताः ।

प्रथमतः पटहिनः आगताः । ततः पृष्ठतः देवतायाः उत्सवमूर्तिवाहकाः चत्वारः जनाः आगत्य अङ्गाराणाम् अग्रे अवस्थिताः । एकं ताम्रकलशं वामकरेण गृहीत्वा, दक्षिणहस्त–स्थितान् चूतदलाग्रान् कलशजले निमज्य सर्वत्र प्रोक्षमाणः देवस्थानस्य अन्तर्देशतः वेङ्कटरमणः आगच्छन् आसीत् । सः प्रतिदिनं गिरेः पुण्यकोटिदेवस्थानस्य पूजार्थम् आगमनावसरे ध्रियमाणेन वस्त्रेण एव आसीत् । तं पश्यन्ती हिल्डा आश्चर्येण काळिङ्गम् अपृच्छत् – 'किमिदम् ? एषः अत्रापि आगतः ?'

'समन्तात् ग्रामेषु सर्वेषु पुरोहितः । अद्य विशेषदिनम् इति आगतः स्यात्' इति काळिङ्गे वदत्येव निरीक्षकः तस्यै तत्क्षणम् अर्थं निवेदितवान् – 'पुरतः एतावत्यः बलयः अभवन्निति अशुचिः जाता इत्यतः ब्राह्मणज्योतिषिभिः पवित्रता सम्पाद्यते । तदनन्तरं देवता अग्नौ चलति । तदनन्तरं रथोत्सवः ।'

वेङ्कटरमणः देवतायाः अपि पुण्याहवाचनम् अकरोत् । देवतायाः धारकादारभ्य अङ्गारतोदनाय सेवाकाङ्क्षया पृष्ठतः अवस्थितान् शतशः पुरुषान् महिलाश्च चूतदलजलेन सम्प्रोक्षितवान् । तावत् एकस्तरे प्रसारिते अग्नौ अपि पुण्यजलसेचनं कृतवान् ।

'पटहध्वनिः तीव्रतां प्राप्तः । अधुना देवः अग्निं प्रविशति पश्यतु' इति निरीक्षकः हिल्डाम् उक्त्वा तस्य मुखगतां प्रतिक्रियां पश्यन् अतिष्ठत् । हिल्डा देवधारिणम् उद्विग्नतया पश्यति । एकवारं देवता पृष्ठतः पृष्ठतः अपासरत् । मन्दिरगौडः, अन्ये पुनः

पञ्चषाः जनाः देवस्थानप्रमुखाः 'मार्गः मार्गः' इति उच्चैः वदन्तः आगत्य समीपस्थितान् जनान् दूरं नोदयित्वा अवस्थापितवन्तः। पटहस्य रवः सम्प्रति वादनगतिम् अतिरिच्य रवरवरवरविति उग्रवेगम् अलभत। देवताधारकः पृष्ठतः धावं धावम् आगत्य अग्रे अग्निराशिं प्रसारितम् अजानन्निव प्रविश्य तदुपरि पद्भ्याम् अगच्छत्। स्वपादयोः अग्निः स्पृष्टः इव हिल्डा मुखं सङ्कुचितं कृत्वा वदनं व्यादाय पश्यति। देवता पुनरपि प्रत्यागत्य अङ्गाराणाम् उपरि तृतीयवारं पादाभ्याम् अगच्छत्। अनन्तरं सेवाकाङ्क्षिणः अङ्गाराणाम् उपरि प्रविश्य पदे विन्यस्यन्तः गताः। हिल्डा तेषां पादानेव पश्यति। अङ्गारेषु पदचालकेषु काळिङ्गस्य माता अपि अस्तीति तस्याः दृष्टिगोचरम् अभवत्। तत् काळिङ्गः अपि लक्षितवान्।

सर्वेषां समाप्त्यनन्तरं सा अपृच्छत् – 'देवस्य नाम्नि एते जनाः कुतः स्वयंहिंसाम् आचरन्ति ?'

'एतत् हिंसा एव न। अङ्गाराणाम् उपरि सञ्चरणेनापि स्वल्पमपि न दहत्येव' निरीक्षकः अवदत्।

'तदहं न विश्वसिमि।'

'तथा चेत् भवती एव आगत्य नुदतु। किन्तु तदर्थं प्रातः आरभ्य उपवासः कर्तव्यः।'

'अहं न उपवासं कृतवती अपि। अयुक्तेन हठेन देहहस्तयोः दाहनपरा मूर्खा अपि नास्मि।'

'भवत्या उक्तं समीचीनम्' इति निरीक्षकः तस्याः वचनस्य सम्मतिम् आवेद्य, दाक्षिण्ययुतेन स्नेहेन मृदु हसितवान्।

इदानीं देवः साक्षात् रथम् आरोहति। निरीक्षकः एतान् रथसमीपं नीतवान्। अष्टादशानाम् अङ्कणानाम् औन्नत्येन रचयित्वा, उपरिष्टात् अधःपर्यन्तमपि वर्णमयान् चित्रपटान् आवृत्य, चतुर्षु अपि पार्श्वेषु लम्बिताभिः लम्बनीडचन्द्रिकाभिः अलङ्कृतस्य रथस्य काष्ठचक्राणि एव भीमाकाराणि। समग्रः रथः, तस्य उपरि देवताम् उपस्थाप्य परःसहस्रैः जनैः आकर्षणम् इत्येतत् हिल्डायाः रोमाञ्चकारीति अभासत। 'इट् ईस् ए वेरि रोमाण्टिक् सीन्' इति तया उक्ते निरीक्षकः तत् अन्यथा परिभाव्य मुखे असामान्यभावं प्रकटितवान्। रथारोहणात् पूर्वं वेङ्कटरमणः रथस्य अपि पुण्याहवाचनम् अकरोत्। किन्तु एते तेन लक्षिताः नाभवन्।

रथाकर्षणानन्तरमपि अम्बां तत्रैव उपस्थापितवन्तः। घण्टाद्वयानन्तरम् अम्बायाः

पुरतः दूरे निर्मिते पूगदलाट्टे 'देवीमाहात्म्यम्' यक्षगाननाट्यं प्रवर्तते इति निश्चितम् आसीत् । 'भवती तत् निश्चयेन पश्येत् । अहं भवत्यै आसन्दं स्थापयामि । इदानीं तावत् भवन्तः मया सह भोजनं कुर्वन्तु' इति निरीक्षकेण उक्तेऽपि हिल्डा 'मास्तु' इत्युक्तवती । तस्याः आयासः भवति स्म । निरीक्षकस्य एव एकं जीप्यानम् अस्ति । सः एतौ द्वावपि उपवेश्य स्वयमेव चालयन् गृहाय नेतुं सज्जः अभवत् । किन्तु 'वयं शकटेन गच्छाम' इत्युक्त्वा काळिङ्गेन तस्य आह्वानस्य तिरस्करणात् तस्य ईषत् निराशता जाता इव अभासत । तथापि 'समीचीनम् । पुनर्मिलाम । गुड् नैट् मेडम्' इति उक्त्वा हिल्डायाः हस्तं सुदीर्घकालं झम्पयित्वा, जाकं लालयित्वा, एतेषां शकटारोहणपर्यन्तमपि स्थित्वा आपृष्टवान् ।

चन्द्रिकायां कियन्ति अपि शकटानि चलन्ति स्म । अनेके जनाः पद्भ्यां चलन्तः स्वस्वग्रामं प्रतिगच्छन्ति स्म । स्वमनसि एव किमपि चिन्तयन्तीं हिल्डां काळिङ्गः अवदत् – 'सः वेङ्कटरमणः कुत्र गतः स्यात् ? कथमपि शकटम् आसीत् । सहैव गन्तुम् अशक्ष्यत् । अग्रहारस्य सङ्गममार्गे अवतीर्णः चेत् ततः अर्धमैल्दूरमेव पद्भ्यां गन्तव्यं स्यात् ।'

तत् वचनं स्वेन न श्रुतमिव हिल्डा अवदत् – 'एतावद्दिनानन्तरम् अस्माभिः सह सङ्गत्य विश्वासेन वर्तमाना एका व्यक्तिः दृष्टा इत्यभवत् । सः निरीक्षकः अतीव साधुः मनुष्यः खलु ? तस्य जीपयानं मास्तु इति भवान् किमर्थम् अवदत् ?'

'भवती अधुनापि जनानां स्वभावं न जानाति । वेङ्कटरमणः एकः एव अस्माकं सहचरः भवितुं शक्नोति ।'

'डियर्, तस्य पूजकस्य स्वभावः एतावत्सु दिनेषु गतेषु अपि न ज्ञातः किं भवता ? वादविवादान् कृत्वा अस्मान् खण्डयित्वा, अस्मन्मुखभङ्गकरणं विना सम्भाषणाय तावत् सरसता तस्मिन् एकस्मिन्नपि दिने दृष्टा किम् ? निरीक्षकमहाशयं पश्यतु । मध्याह्नात् अस्माभिः सह आसीत् । किञ्चिदपि निष्ठुरं वचनं नासीत् । कटुप्रसङ्गः नासीत् । भिन्नाभिप्राये आगतेऽपि स्वात्मना स्वात्मानं सङ्गम्य कियत्सौम्यः आसीत् । रक्षिभटस्य विरुद्धः गुणः तस्मिन् आसीत् । पूजकविरोधिगुणः भवन्मित्रस्य वेङ्कटरमणस्य अस्ति ।'

'डार्लिङ्ग्, भवती प्रपञ्चं शीघ्रतया न जानाति । भवती यात्रोत्सवविशेषं पश्यन्ती आसीत् । सः निरीक्षकः किं पश्यन् आसीदिति जानाति किम् ?'

'न ।'

'तदर्थमेव अहं वदामि भवती प्रपञ्चं न जानाति इति ।'

'एवं किम् ?' इदानीं तस्याः अर्थबोधः जातः । लज्जामपि अनुभूय स्वेन एव किमपि अपराद्धम् इव आभास्य पत्युः हस्तं गृहीत्वा अवदत् – 'डियर्, यथार्थतया मया किमपि न ज्ञातम् । क्षम्यताम् ।'

'भवत्याः अपराधः कः ?' इति तां समाहितवान् काळिङ्गः ।

शकटस्य द्वित्रमैल्दूरगमनपर्यन्तम् उभौ अपि मौनेन आस्ताम् । अनन्तरं हिल्डा अवदत् – 'मध्याह्नात् दृष्टमेव मम मनसि पीडयति । अस्य देशस्य पद्धतिः, विश्वासाः न कस्यापि अर्थः अवगम्यते । देवस्य नाम्ना एते जनाः प्रचण्डां प्राणिहत्यां कुर्वन्ति । अनन्तरं ते एव गत्वा तावतीम् एव स्वयंहिंसाम् अनुतिष्ठन्ति । महिषाः कुतः हन्यन्ते ? अङ्गाराः कुतः नोद्यन्ते ? एतेषाम् अर्थः कः ?'

'तत्तु वेङ्कटरमणमेव पृच्छेत् ? अहं न जानामि' इति काळिङ्गः अभ्युपगतवान् ।

ते गृहप्रवेशनसमन्तरम् एव शयिताः । हिल्डायाः निद्रा न प्राप्ता । मनः एतेषाम् अज्ञातार्थानां दृश्यानां बिम्बैः करालितम् आसीत् । अनन्तरदिने गत्वा वेङ्कटरमणः द्रष्टव्यः इति निर्णीतवती । किन्तु पुरा एकस्मिन् दिने तेन भाषितेन वचनेन तस्याः नेत्राभ्यां बाष्पनिःसारणदिनात् सः पुनः तत्र नागतः आसीत् । स्वयमेव गत्वा तं द्रष्टुं तस्याः अभिमानः प्रतिरोधकः आसीत् ।

सः स्वयमेव आगच्छेत् इति कियद्भिरपि दिनैः प्रतिपालितवती । तेन सह कियन्तोऽपि विषयाः चर्चनीयाः आसन् । किन्तु मासत्रये यावत् यातेऽपि सः एव नागतः । तस्याः यथार्थतया तस्मिन् कोपः समायातः ।

## 3

एकस्मिन् सायङ्काले चतुर्वादनसमये वेङ्कटरमणः फार्म्गृहम् आगतः । पूजा-कालिकवस्त्रं विहाय अद्य सः वेष्टिं धृत्वा युतकं धृतवानस्ति । पादयोः पादरक्षा आसीत् । केशान् पिण्डवत् ग्रन्थिबद्धान् कृतवान् आसीत् । एतावत्सु दिनेषु तस्य अनागमनेन कोपे विद्यमानेऽपि हिल्डा सन्तोषेण स्वागतं चकार । 'काळिङ्गः कुत्र ?' इति तेन पृष्टे अवदत् – 'नगरं गतः अस्ति । अस्माकम् उपयोगाय एकं व्यान्यानम् आवश्यकमासीत् ।

आदेशदानाय गतः अस्ति । श्वः सायम् अथवा परश्वः आगच्छेत् । तिष्ठन्नेव अस्ति किल, उपविशतु ।'

अस्मिन् पर्याये स्वक्षेत्रस्यापि सीमागोभरम् आयोज्य उत्पन्नं प्राप्तव्यम् इति वेङ्कटरमणेन आलोचितम् । गोभरस्य व्यये सः वारदारहोन्नश्च इति उभावपि समानतया भागिनौ भवितुं निर्णीतवन्तौ । किन्तु भूमिं परिशील्य कः गोभरः केन प्रमाणेन योजनीयः इति काळिङ्गेन एव वक्तव्यम् आसीत् । तस्मिन् विषये निदेशं प्रष्टुं सः आगतः आसीत् । किन्तु हिल्डाम् एतं विषयं नोक्तवान् ।

हिल्डा अवदत् – 'आगच्छतु । तथैव सञ्चरन्तः अस्माकं गोव्रजं गत्वा आगच्छाम । क्षीरदोहकयन्त्रे कोऽपि दोषः अस्तीति जमालः अवदत् । तत् परिशील्य परिष्करणीयम् अस्ति ।'

एते क्षीरदोहकयन्त्रम् आनीतवन्तः इति वेङ्कटरमणेन ज्ञातमासीत् । सः तत् नापि दृष्टवान्, तस्य कल्पना अपि नायाति स्म । 'चलतु, अहमपि तत् न दृष्टवान्' इति सः उत्थितवान् ।

गृहप्रतिपालनाय जमालपत्नीम् उक्त्वा हिल्डा वेङ्कटरमणेन सह प्रस्थिता । इदानीं सा पञ्चमे मासे प्रवर्तमाना गर्भिणी । एषः विषयः तेन न ज्ञातः आसीत् । किन्तु सञ्चरन्त्याः तस्याः अवलोकनेन तत् ज्ञायते ।

सा अपृच्छत् – 'अस्मद्गृहम् आगतस्य भवतः षट् मासाः एव अतीताः खलु ? कुतः ?'

'भवती एव जानाति किल, शालाकार्यम्, समयः एव न लभ्यते ।'

अग्रे तं विषयं सम्पीड्य प्रश्नः न उचितः इति सा अमन्यत ।

'शाला भवतु नाम । भानुवासरे तावत्तु आगच्छतु । तद्दिने अहं किमपि कार्यं न करोमि ।'

वेङ्कटरमणः 'अस्तु' इति अवदत् । फार्म्समन्ततः इदानीं तमाखुसस्यानि नूतनतया प्रवृद्धानि । एकहस्तमितोन्नत्या प्रवृद्धानि तानि हरितवर्णेन हसन्ति स्म । गन्धः इतोऽपि न कटुत्वं प्राप्तः । क्षेत्राञ्चले सञ्चार्य मोटर्मार्गे समीपस्थं द्वारं सन्तार्य गोमालस्य वृतेः द्वारेण अन्तः आगतवन्तौ । तत्र तृणानि वक्षःस्तरम् उन्नत्या प्रवृद्धानि आसन् । एतज्जातीयानि तृणानि वेङ्कटरमणेन अद्यावधि न दृष्टानि । हिल्डा तेषां विशेषगुणं

तेषां वर्धनक्रमं च तं बोधयन्ती गता ।

उभयोरपि गोष्ठगृहगमनावसरे जमालः यन्त्रेण क्षीरदोहनं करोति स्म । एकस्याः गोः पुरतः एकः भृत्यः वत्सं परिगृह्य स्थितः । धेनोः स्तनचतुष्टयेऽपि चतस्रः रब्बर्नालिकाः संयोज्य, ताः तथैव लग्नाः तिष्ठेयुरिति क्लाम्प्बन्धिकाः योजिताः । चतस्रः अपि नलिकाः एकस्यां स्थूलनलिकायां सङ्गताः । स्थूलनलिका ईषद्दूरे स्थिते एकस्मिन् लघुविद्युद्यन्त्रे योजिता आसीत् । तस्याः अन्या शाखा किञ्चिद्दूरे स्थापितस्य एकस्य पात्रस्य अन्तः स्थापिता । पारदर्शिकासु नलिकासु क्षीरस्य सरणं दृश्यते स्म । चतुर्भ्यः अपि स्तनेभ्यः संहत्य सकृदेव क्षीरं नलिकान्तः स्रवति स्म । एतत् वेङ्कटरमणः आश्चर्येण पश्यन् अतिष्ठत् ।

जमालः हिल्डाम् अवदत् – 'मेडं साहेब्, एतत् मोटर् ह्यः आरभ्य करकरिति रवं करोति । अन्तः श्लथयित्वा वियोज्य द्रष्टव्यम् ।'

एकनिमेषकालं शब्दम् अवधारयन्ती सा अवदत् – 'अन्तः वियोज्य सुष्ठु योजनीयम् । इदानीं सर्वासां धेनूनां दोहनं समापय । यानेन क्षीरनयने विलम्बः भवति । तदनन्तरं भवान् गृहं गत्वा टूल्किट् (पेटीम्) आनयतु । पञ्चदशनिमेषैः परिष्करोमि ।'

तावता तासां धेनूनाम् ऊधसः क्षीरं यन्त्रेण पूर्णतया चोषितम् अभूत् । मोटर्सम्बद्धं पिञ्जम् उपशाम्य जमालः नलिकाः ऊधसः बहिः अपाकृतवान् ।

भृत्यः धेनुम् अन्यदिशि नीत्वा अन्यामेकाम् अनीय उपस्थापितवान् । जमालः तस्याः ऊधसि नलिकाः संयोज्य पिञ्जं नुत्तवान् । ततः धेनोः पुरतः तस्याः वत्सम् उपस्थापितवन्तः । धेनुः वत्सम् आलेढि स्म । किन्तु वत्सः एकवारमपि मातुः स्तनं न स्पृष्टवानेव । तथापि नलिकायाः अन्तर्भागात् चतुर्भ्यः स्तनेभ्यः अपि क्षीरं बुद्बुदायमानं स्रवितुं प्रारब्धम् । वेङ्कटरमणः हिल्डाम् अपृच्छत् – 'एतत् यन्त्रं कथं कार्यं करोति ?'

'तत् अतीव सरलम् । एतत् यन्त्रं नलिकासु शून्यं सृजति । तदा ऊधसः आन्तरात् क्षीरं स्वयमेव बहिः निःसरति । क्षीरनिःसरणानन्तरं तस्य पात्रे स्रवणपर्यन्तं शून्यं समाप्तं तिष्ठति । पुनः शून्यं क्षीरं चोषयति । शून्यसृष्टिरेव एतस्य यन्त्रस्य नियमः ।'

'वत्सेन स्तन्ये अपीतेऽपि धेनुः स्नुता भवति किम् ?'

'भवानेव पश्यन्नस्ति खलु ? धेनोः वत्सतः कयापि रीत्या उद्रेकः भवति । सत्यम्, तदुद्रेकेण क्षीरम् अनिर्बन्धं स्रवति । किन्तु वत्सं विनापि सा क्षीरं स्रावयितुं शक्नोति ।

तद्रीत्या तस्याः अभ्यासस्तावत् कारणीयः ।'

'हस्तेन दोहनस्य अनेन यन्त्रेण दोहनस्य च कः भेदः ?'

'यन्त्रेण शीघ्रं भवति, शुभ्रं च तिष्ठति। न केवलं तावत्, ऊधसि एकोऽपि क्षीरबिन्दुः यथा न अवशिष्येत तथा पूर्णतया दोहनं भवति ।'

'एवं चेत् का गतिः वत्सस्य ?'

'वत्सस्य मातुः स्तन्यमेव भवेदिति नास्ति । तस्य कृते अन्यः पुष्टिकरः आहारः दीयते। भवता एव दृष्टं किल ? वत्साः पुष्टाः प्रवृद्धाः खलु ?'

तावता कालेन तस्याः धेनोः क्षीरचोषणं समाप्तम् अभवत्। जमालेन नलिकापनयने कृते तां धेनुं प्रचोद्य गतः भृत्यः अन्याम् आनीतवान् । किन्तु तस्याः वत्सः नासीत् । जमालेन तस्याः स्तनेषु नलिकायोजनवेलायां भृत्यः कृतकवत्समेकम् उद्वाह्य आनीय धेनोः पुरतः परिगृहीतवान्। गोत्वचा आच्छादिता सा पुत्तलिका वत्सः इव उन्नतगात्री आसीत्। अन्तः तृणानि प्रपूर्य तस्याः अन्तर्भागः गोणीस्यूतेन स्यूतः आसीत्। उपरिभागे केवलं चर्मणः आच्छादनम् आसीत् । धेनुः तामेव आघ्रातुम् आरभत । यन्त्रस्य पिञ्जनोदनानन्तरं शून्येन क्षीरचोषणं प्रारब्धम् ।

वेङ्कटरमणः अपृच्छत् – 'वत्सरहितायाः धेनोः क्षीरदोहनं समुचितं किम् ?'

'कुतः, क्षीरस्य वत्सस्य च कः सम्बन्धः ?' हिल्डा अपृच्छत्।

'क्षीरवत्सयोः सम्बन्धः नास्ति किम् ? वत्सरहितायाः धेनोः क्षीरदोहनं महापापम्। वत्से विद्यमानेऽपि यूयं तस्य कृते क्षीरं न मुञ्चथ, कुतः ?'

'भवान् न जानाति किम् ? वत्साय क्षीरमोक्षणम् आर्थिकतया न लाभकरम् । क्षीरार्थं खलु अस्माकं गोपालनम् ?'

'एतत् वचनम् अन्येन केनचित् उक्तं चेत् अपि क्षम्येत । किन्तु महिला भवती एकस्य अपत्यस्य माता सती तं स्तन्यं पायितवती, इदानीं गर्भिणी भूत्वा अन्यस्य अपत्यस्य जन्म दत्त्वा स्तन्यपायिनी भविष्यन्ती एवं वदति चेत् तत् अनागरिकतालक्षणम्, उत अज्ञानस्य लक्षणम् इति वक्तुं नाहं शक्नोमि' इति वदन् वेङ्कटरमणः सद्यःस्थितौ एव स्वस्य औष्ठौ पिधाय तूष्णीं स्थितः। एकनिमेषानन्तरं सः एव 'भवदन्तिकागमनेषु सर्वेषु सर्वदा कलहायमानत्वं न मम इष्टं भवति। भवद्गृहाय ममागमनमेव दोषाय' इति उक्त्वा ततः गन्तुं परावृत्तः ।

किन्तु समीपे एव स्थिता हिल्डा तस्य हस्तं परिगृह्य अवदत् – 'पूज्यपूजक, एवंरीत्या कोपं विधाय न धावितव्यम्। भिन्नाभिप्राये चर्चा कर्तव्या। कोपविधानं मित्रस्य लक्षणं न भवति खलु ? उपविशतु। मयापि भवता साकं बहु भाषितव्यम्।'

कोपः न विधेयः इति एकक्षणं भासितेऽपि वेङ्कटरमणः तदर्थं पश्चात्तापं न अनुभूतवान्। किन्तु स्वलोपं निगृह्य अवदत् – 'अहम् अत्र उपविश्य एतत् दृश्यं द्रष्टुं न शक्नोमि। यत्र कुत्रापि बहिः उपविशाम।'

'जमाल, शीघ्रं शीघ्रं क्षीरं दोहय। यानस्य विलम्बः भवेत्' इति वदन्ती हिल्डा बहिः आगता। उभावपि नूतनतया निर्मितस्य तटाकस्य समीपम् आगतौ। सोपानानि निर्माय अधुना तत्रापि एकं विद्युत्पम्प्यन्त्रं संयोज्य उपरि जलबन्धः निर्मितः आसीत्। वेङ्कटरमणेन तत् न दृष्टमेव आसीत्। 'एतत् सर्वम् अपि कदा कृतम् ?' इति तां न पृष्टवान् अपि। सः तटाकस्य तटे स्थापिते एकस्मिन् शिलापट्टे उपविष्टवान्। तस्य पुरतः अन्यत् पट्टम् आसीत्। किन्तु हिल्डा तदुपरि अनुपविश्य तस्य पार्श्वे एव उपविष्टा। सङ्कोचेन सः अन्तम् अपसृतवान्। तत् सा न लक्षितवती। एकं निमेषं किमपि आलोच्य अनन्तरम् अवदत् – 'पश्यतु, एकैकस्य देशस्य पद्धतिः भिन्ना विद्यते। अस्मद्देशे प्रत्येकं वैज्ञानिकतया गणिताचारेण कुर्वन्ति। यस्मिन् कस्मिन्नपि उद्यमे प्रत्येकेषु विषयेषु जायमानः व्ययः कियान् ? अस्मिन् विषये व्ययः उद्यमदृष्ट्या अनिवार्यो वा इति सर्वम् आलोच्य, तत् न अनिवार्यम् इति दृष्टं चेत् तं विषयमेव परित्यजन्ति। उदाहरणार्थं पश्यतु, क्षीरोत्पत्तिः कश्चन उद्यमः। एतस्य वत्सः अनिवार्यः किम् ? पूर्वम् 'आम्' इति विश्वसितम् आसीत्। किन्तु 'न' इति आधुनिकवैज्ञानिकसंशोधनेन ज्ञातम् अभवत्। किन्तु सर्वेषां वत्सानां विनाशनेन अग्रे धेनूनां सन्ततिः कथं वर्धेत ? अतः सन्ततिं वर्धयितुम् आवश्यकेन प्रमाणेन आरोग्ययुतान् कतिपयवत्सान् अवशेष्य अन्यान् अवशिष्टान् वयं मारयामः। अन्यथा तैः वत्सैः विनाकारणं भक्षयित्वा विनाश्यमानानां तृणानां व्ययः कियान् ?'

वेङ्कटरमणः आघातपूर्वकेन आश्चर्येण भ्रुकुटी उन्नमय्य तां पश्यति। तस्य प्रतीक्षां निरीक्षमाणा तेन किमपि अनुक्ते सा एव अवदत् – 'किन्तु वत्सान् वयं विना कारणं न मारयामः। तेनापि किञ्चित् प्रयोजनम् अस्ति। रोमन्थकजातीयानां प्राणिनां चतुर्थम् उदरम् इत्येकं वर्तते। 'रुमिनण्ट्' इति तस्य नाम। तत्र 'एन्ज़ैम्' इति एकं वस्तु विद्यते। क्षीरेण चीस् उत्पादनार्थं तत् योजनीयं भवति।'

'वत्सं भवन्तः कथं घ्नन्ति ?' वेङ्कटरमणः अपृच्छत् ।

'एन्‌जैम्–उत्पादकाः डैरिजनाः वत्सान् अस्मत्तः नीत्वा घ्नन्ति । साक्षात् कण्ठं छित्त्वा हन्येत । अथवा कशाघातैः हत्वा तस्य चर्मणः मृदुलायां पादरक्षायाम् उपयोगः स्यात् ।'

'तन्नाम किम् ?'

'भवान् तदपि न जानाति किम् ? अस्मिन् देशेऽपि तत् कुर्वन्ति । भवतां कान्‌पुरादिषु प्रदेशेषु तादृशः उत्पाद्योद्यमः अस्ति इति मया श्रुतम् । बालवत्सानां चर्म मृदु भवति । एकस्मिन् शङ्कौ वत्सं दृढतया बद्ध्वा कशया पटपटिति तस्य शरीरपृष्ठे ताडयन्ति । उच्छूनात् चर्मणः रक्तं स्यन्दति । तावदेव वत्सः मृतः स्यात् अथवा इतोऽपि जीवितः स्यात् । तन्न मुख्यम् । अनन्तरं तत् चर्म आर्द्रमेव विदार्य परिष्कृतं चेत् समीकृतं चेत् तेन अतीव मृदुलाः पादरक्षाः करस्यूताः उत्पादयितुं शक्यन्ते । किन्तु ते सर्वे अमूल्याः पदार्थाः ।'

तया उक्तं मनसि कल्पयितुम् अपि अशक्तः वेङ्कटरमणः मूकः इव उपविष्टः । तावता जमालः तत्र आगत्य अवदत् – 'मेडंसाहेब्, द्वयोः धेन्वोः उद्रेकः प्राप्तोऽस्ति । औषधं देयम् ।'

'भवानपि आगच्छतु' इत्युक्त्वा हिल्डा उत्थिता । वेङ्कटरमणः ताम् अनुसृतवान् । हिल्डा गोष्ठस्य एकं प्रकोष्ठं प्रविश्य औषधपेटिकाम् अपनीय ततः एकम् उष्णमापकं परिगृह्य, जमालेन दर्शितयोः धेन्वोः योनिद्वारेण तत् अन्तः प्रणोद्य किञ्चित्कालं संस्थाप्य, बहिः अपनीय दृष्ट्वा अवदत् – 'आम्, एतस्याः उद्रेकः प्राप्तः । गर्भधारणौषधं देयम् । गृहं गत्वा शीतके स्थापितां नलिकाम् आनय ।'

'आनीता अस्ति । तदा टूल्‌पेटीम् आनेतुं गतः खलु, आनीतवान् ।'

हिल्डा तेन दत्तां नलिकाम् आदाय तज्ज्ञः वैद्यः इव ततः अर्धम् एकस्मिन् सिरेञ्ज् मध्ये प्रवेश्य तत् धेनोः योनौ प्रवेश्य औषधम् अन्तः स्थापितवती । तथैव अन्यस्याः अपि कृत्वा अनन्तरम् – 'एतन्नीत्वा तेषां स्थले बधान' इति जमालम् उक्त्वा सिरेञ्ज् क्षालितवती । वेङ्कटरमणः अपृच्छत् – 'किमेतत् ?'

'भवता एतावत् सरलमपि न ज्ञातं किम् ? एतयोः धेन्वोः स्वाभाविकतया उद्रेकः सञ्जातः । तदर्थं वीर्यप्रयोगः कृतः ।'

तया कमपि सङ्कोचं विना उक्तेऽपि वेङ्कटरमणस्य भाषितुं किञ्चित् कष्टम् अभूत् ।

तथापि सः अपृच्छत् – 'कुतः एवं कर्तव्यम् ? अग्रहारस्य चन्नेगौडेन महान् बीजवृषभः पालितः अस्ति । रूप्यकत्रयाय वृषभं ददाति । परम्परया काळेनहळ्ळिजनाः सर्वे स्वधेनुं चेन्नेगौडस्य वृषभाय प्रेषयन्ति ।'

हिल्डा तावति काले टूल्पेटीम् उद्घाट्य क्षीरदोहनयन्त्रस्य अवयवान् वियोजयति स्म । कर्मकरणावसरे एव सा अवदत् – 'तत् अतीव अवैज्ञानिकं विधानम् । तथाकरणेन धेनोः गर्भधारणं न निश्चितं भवेत् । अन्यच्च सः किञ्जातीयः वृषभः स्यान्नु ? अस्मिन् देशे पशुसन्ततिपरिवर्तनाय उत्तमाः वृषभाः भवेयुः । किन्तु एकस्य वृषभस्य एकावसरीयं वीर्यम् एकैकस्याः धेनोः कृते व्ययीकरणम् आर्थिकतया न लाभदायकम् । न्यूज़िलेण्ड्-देशस्य उत्तमं वृषभम् आनाय्य, सर्वकारस्य पशुसंरक्षणाविभागीयाः तस्य वीर्यम् अपनीय, समपदम् आपद्य एतादृशीषु लघुनलिकासु निवेशयन्ति । तत् अद्यतनेषु चतुर्षु दिनेषु आनीय वयं शीतके स्थापितवन्तः । एतयोः धेन्वोः इदानीम् उद्रेकः समायाति इति एतदपि अस्माभिः सूच्यतया ज्ञातमेव । इदानीं प्रयोगः समजनि । एतेन अनयोः धेन्वोः उदरे जायमानं सन्तानं भवानेव तावत् जानीयात् । स्त्रीवत्सा भविष्यति चेत् कियदधिकक्षीरदोग्ध्री धेनुः वर्धेत इति भवता एव भविष्यति काले ज्ञायेत ।'

एतावदुक्त्वा सा यन्त्रं वियोज्य अन्तर्भागं परीक्षितवती । तस्याः लक्ष्यं सर्वम् इदानीं तस्य यन्त्रस्य अन्तारचनायां प्रविष्टम् । जमालोऽपि तत्रैव स्थित्वा तत् ज्ञातुम् अवलोकितवान् । हिल्डा अवदत् 'ग्रीस् करण्डम् आनय । एतत् प्रोञ्छ्य ग्रीस् विलिप्य, लगयित्वा फिट् कर्तव्यम् ।'

## 4

वेङ्कटरमणस्य मनः एते धेनू अधिकृत्य चिन्तयति । पश्चिमदेशे गाः अत्यासक्त्या, वैज्ञानिकरीत्या प्रतिपालयन्ति, हिन्दुस्थानस्य गवाम् इव तासाम् अपूर्णोदरसमस्या न विद्यते, रोगरुजां पीडा न वर्तते; निर्लक्ष्यतायाः क्लेशः नास्ति – इत्येवमादि सः आङ्ग्लपत्रिकायाः कस्मिंश्चित् लेखे पठितवान् आसीत् । किन्तु हिल्डया प्रतिपादितं चित्रं तेषां जनानां क्षुद्रस्वार्थताम् अनावृत्य दर्शयति । अदोग्ध्रीणां धेनूनां कृते तृणानि न विद्यन्ते, जीविताधिकारोऽपि नास्ति । क्षीरदोहनार्थं वत्सस्य अपेक्षा नास्ति । तान् वत्सान् हत्वा, तदुदरे विद्यमानेन वस्तुना चीस् उत्पादयितुम् उपयोजयन्तीति, कशाघातेन रक्तं

निःसार्य, अनन्तरं तस्य चर्म विदार्य मृदुपादुकाः निर्मान्ति इति। यन्त्रेण क्षीरं चोषयन्ति। उद्रेकः सन्निहितश्चेत् नलिकया वीर्यप्रयोगं कुर्वन्ति इति। वृषभस्य साक्षात् आरोपणम् आर्थिकतया नष्टकरम्। तस्य दृष्टिः अकस्मादिव हिल्डायाः आपन्नसत्त्वस्य उदरस्य दिशि गतम्। किन्तु एकक्षणे एव सः दृष्टिम् अन्यत्र अनयत्।

सर्वोऽप्ययं क्रमः कालिङ्गेन स्वपत्नीद्वारा स्वगोष्ठेऽपि आनीतः। एतासां धेनूनां स्ववत्सेभ्यः स्तन्यपायित्वस्य मातृत्वसहजसन्तोषः नास्त्येव। स्वऋतुकाले सन्निहिते वृषभारोपणरूपं सहजसुखमपि न विद्यते। वेङ्कटरमणः किञ्चिद्दूरं गत्वा, पङ्क्तौ बद्धानां धेनूनां मुखानि अपश्यत्। ताः सर्वाः केवलमृगाः इव तस्य नयनयोः अभासन्त। तत्क्षणमेव तस्य गौडज्जस्य गोष्ठस्य स्मरणम् अभवत्। गौडज्जस्य धेनवः नाम स्वमातरः इव भवन्ति। वत्साः स्वपृष्ठे लग्नाः सहोदराः, सहोदर्यः इव आसन्। मनुष्यमातुः स्तनात् क्षीरस्यन्दनं यथा स्वस्य अपत्याय केवलं भवति तथा गोः स्तने क्षीरोत्पत्तिः स्ववत्साय केवलं भवति। अधिकक्षीरस्यन्दनार्थं मात्रे पुष्टिकरम् आहारं दत्त्वा, तस्याः वत्सेन पानानन्तरम् अवशिष्टमात्रं मनुष्येण दोहनीयम् इति गौडज्जस्य श्रद्धा आसीत्। मृतवत्सायाः मानवमातुः स्तनौ यथा अन्यस्य अपत्यस्य जननपर्यन्तम् वन्ध्यौ भवतः तथैव मृतवत्सायाः धेनोः क्षीरं न केनापि दोग्धव्यम् आसीत्।

वेङ्कटरमणः इतोऽपि अग्रे गत्वा समीपतः अपश्यत्। प्रत्येकं धेनोः स्थूणासु 1, 2, 3 इति सङ्ख्याः लगिताः आसन्। प्रत्येकं धेनोः कण्ठेऽपि अल्यूमिनियंलोहपट्टस्य उपरि सङ्ख्याः बद्धाः आसन्। तत्तत्सङ्ख्याका धेनुः तत्तत्सङ्ख्यायुक्तायां स्थूणायां बद्धा आसीत्। प्रत्येकं स्थूणायाः उपरिष्टात् भित्तौ अपि एकैकः पटबन्धः, यत्र कानिचित् पत्राणि सन्ति। तानि चिकित्सालये रोगिणां पार्श्वे लग्नानि प्रकरणचरितानि (केस् हिष्टरि) इव भासन्ते। वेङ्कटरमणः तेषु अन्यतमं परिशीलितवान्। प्रत्येकं धेनोः वत्सप्रसूति-दिनाङ्कः, प्रतिदिनं तया दीयमानस्य क्षीरस्य परिमाणम् - इत्यादीनि अनेकानि विवराणि लिखितानि। कालिङ्गगौडज्जस्य काले प्रत्येकं धेनोः गङ्गा, गौरी, तुङ्गा, भद्रा, कामधेनुः, सीता, सावित्री इत्यादिनामानि आसन्। एकैका अपि धेनुः एकैका देवता आसीत्। किन्तु पौत्रस्य कालिङ्गस्य गोष्ठे एकैका अपि एकैकसङ्ख्यया स्थिता। तासां सर्वासां परिविचारणा एतस्याः विदेशीयमहिलायाः हस्तगता अस्ति।

सः एकवारं स्वेन स्थितात् दूरात् एव गौडज्जपौत्रस्य एतां पत्नीम् अनिमेषम् अपश्यत्।

वीर्यं, गर्भः, योनिः – इत्यादिवचनानि यद्यपि धेनौ अन्वीय उक्तानि, तथापि तेषां वदनावसरे तस्याः न कोऽपि सङ्कोचः जातः आसीत् । वेङ्कटरमणः शालावृत्तेः शाश्वतीकरणात् पूर्वं सर्वकारस्य विधिम् अनुसृत्य वैद्यकीयपरीक्षार्थं ताल्लूकुचिकित्सालयं गतः आसीत् । चिकित्सालयस्य वैद्यः तम् एतादृशानेव प्रश्नान् पृष्ट्वा गुप्ताङ्गम् अपि परीक्षितवान् आसीत् । तदा सः लज्जया निष्पीडितः आसीत् । यथा कथमपि ते वैद्याः । एवमेव तस्य प्रौढशालायां जीवशास्त्रपाठस्य स्मरणम् अभवत् । तस्य शिक्षकः विज्ञानम् इति एतादृशशब्दान् विना कमपि सङ्कोचं वदति स्म । किन्तु एतस्याः काळिङ्गपत्न्याः लज्जा नावश्यकी वा ? तस्याः अपि एतत् सर्वं विज्ञानम् एव स्यात् ननु ? सः पुनरपि एकवारं ताम् अपश्यत् । मोटर्‌यन्त्रस्य पृष्ठभागं पिधाय सा भ्रमिकां भ्रामयति स्म । तस्याः सर्वमपि विज्ञानमेव स्यान्नु ? काळिङ्गः विदेशं न गतश्चेत्, गतश्चेदपि एतां कन्यां न परिणयेच्चेत् गौडज्जस्य गोष्ठस्य पुण्यं नष्टं विना अवशिष्टं स्यात् । एकया कन्यया सह विवाहश्चेत्, तस्याः श्रद्धया सहापि भवतीव – इति इङ्ग्लिष्पत्रिकायाः सम्पादकीयात् उपरि लिख्यमाने सुभाषितवाक्ये कस्मिंश्चित् दिने पठितं तस्य स्मृतौ भासितम् ।

पश्चिमदेशे कनीयसः वत्सान् गतासून् कुर्वन्ति इति श्रुतम् । अस्मिन् गोष्ठे तत् इतोऽपि नारब्धम् । केवलम् एतस्याः महिलायाः शासनाधीनतया परित्यक्तं चेत् सा तथैव कुर्यात् ननु ! पश्चिमदेशे धेनूः कृषिव्यवसायाय न कोऽपि अपेक्षते । किन्तु अस्मिन् देशे अपेक्षन्ते । एकवर्षीयः वत्सः विक्रीयते चेदपि अत्र धनं लभ्यते । अन्यथा एते अपि सर्वान् वत्सान् अमारयिष्यन् ! वेङ्कटरमणस्य शरीरं तिरस्कारेण तप्तुम् आरब्धम् । किञ्चिदिव जठरं वमनोन्मुखमिव जातम् ।

तावता हिल्डा तत्र आगता । 'किम् आलोचयति ? आगच्छतु, तटाकसमीपे उपविश्य संवदेम ।'

एतया सह भाषितव्यं किमस्ति ? इति तस्य मनः अवदत् । सः विना वचनं तत्रैव अवस्थितः आसीत् । 'आगच्छतु, भवान् किमपि गहनं चिन्तयन्नस्तीव भाति । तत् मया सहापि संविभज्यताम् । विचारं सदापि एकस्वाम्ये आयत्तं न कुर्यात्' इति सा तस्य हस्तं परिगृह्य आकृष्टवती । स्वहस्तं प्रत्याकृष्टवानपि वेङ्कटरमणः ताम् अनुसृतवान् । पूर्वम् उपविष्टे मञ्चे तस्य उपवेशनानन्तरं हिल्डा पूर्वापेक्षया इतोऽपि समीपे उपविश्य पृष्टवती – 'वदतु, किम् आलोचयन्नस्ति ?'

तेन न भाषितम् ।

'न उच्यते किम् ?'

'वक्तव्यं किमपि नास्ति ।'

'पश्यतु, भवतः कोपः प्राप्तः ।'

तस्य स्कन्धे स्वदक्षिणहस्तं संस्थाप्य स्नेहपूर्णेन ध्वनिना सा अवदत् – 'मित्रेण कदापि कोपः न आश्रयणीयः । भवतः मुखं स्वयं पश्यतु । एवम् अवस्थितौ किं भवान् अर्भकः ? भवतः अत्र आगमनमेव विरलम् । आगते दिने किमर्थम् एवं करोति ? अस्माकं सुहृत् इति यः कोऽपि न भवेद् वा ?'

तस्याः स्नेहवाक्यं श्रुतवतः वेङ्कटरमणस्य कोपः झगिति दहन् प्रज्वलितः । सः अवदत् – 'भवादृशस्य अनागरिकजातीयस्य जनस्य सन्निधौ कीदृशः विश्वासः आधातव्यः ? भिन्नाभिप्रायः प्राप्तश्चेत् चर्चया परिहर्तव्यः इति वदति । अहं भवती च प्रथमदिनदर्शनात् आरभ्य चर्चां कुर्वन्तौ एव स्वः । भवत्याः जीवनक्रमे, विश्वासे, श्रद्धायां च किमपि परिवर्तनं नाभूत् । भवत्याः चर्चा नाम निर्विण्णतापगमाय कश्चन मार्गः, तावदेव ननु ? प्राणिहिंसा इत्येतत् भवत्याः आत्मानं न तुदत्येव । भवन्तः, भवतां जनसन्ततिः, भवतां जीवनध्येयानि – एतत् सर्वम् अत्यन्तम् आनागरिकम् अस्ति । व्याघ्रचित्रकाभ्याम् अपि क्रूरतराः जनाः । मनुष्यादीनां स्नेहस्य भवन्तः नार्हाः एव ।'

तावदेव जमालः तत्र आगत्य 'अहं टूल्पेटीमादाय गृहं गच्छेयं किम् ?' इति अपृच्छत् । 'हूं गच्छ' इति हिल्डा तं प्रेषितवती । तदैव सन्ध्याकालः अस्तमितः अन्धकारः आवृण्वन् आसीत् । जमालः प्रस्थाय गतः । वेङ्कटरमणेन तिरस्कारपूर्णेन ध्वनिना उक्ते सत्यपि हिल्डा तत् मिथ्याहासेन शृणोति स्म । 'स्ववंशस्य पूर्वजानां धर्मकर्म अनाचरन् पापी अयं काळिङ्गः । सङ्गतस्य गृहस्य आचारविचारौ अननुतिष्ठन्ती दर्पिष्ठा महिला भवती । तादृशस्य पुण्यात्मनः काळिङ्गगौडज्जस्य गृहे भवन्तौ द्वावपि संहत्य तस्य पुण्यं सर्वं विनाशयन्तौ स्तः ।'

'आवां तस्य गृहे कुत्र सङ्गतौ स्वः पूज्य ?' – किलकिलेति हसन्ती सा अपृच्छत् – 'ग्रामात् अपरे पारे वने गृहं निर्माय श्रमेण उदरं पूरयन्तौ स्वः ।'

'पश्यतु, भवत्या सह अपहासं कर्तुम् उत अपहासं प्राप्तुम् अहं न भाषमाणोऽस्मि । गां भवती कस्मिन् स्तरे अवतारितवती, कस्मिन् हीनस्तरे पश्यति इति च मम पूर्णतया

अर्थबोधः जातः। युष्मद्देशे अर्धोदराः गावः न सन्तीति अभिमानेन वदति। अस्मत्पत्रिकासु अपि तथैव लिखन्ति । किन्तु मम वचनं शृणोतु । अस्य हिन्दुस्थानस्य अर्धभागीया जनता अर्धोदरा जीवति । एषैव स्थितिः जनाय, धेनवे च उभाभ्याम् अपि देवेन इतः परमपि अग्रे दीयते चेदपि नास्ति बाधकम्। अस्मद्धेनवः उदराय अलभ्यतया मृताश्चेदपि भवतु नाम । किन्तु मनुष्यार्थं तस्य स्वार्थाय अन्नाय एव गवां जननं, तासाम् ऊधसि क्षीरोत्पादनं मनुष्यस्य तुच्छोदरपूरणाय केवलम् इति क्षुद्रबुद्धिः एतद्देशस्य जनेषु न वर्धते चेत् तदेव अलम्।'

'वर्धते चेत् किं स्यात् ?'

'किं स्यादिति ? अस्य देशस्य आत्मनाशः सम्भवति।'

'तत् कथम् इति ईषद्विस्तरेण वदति किं पूज्यधर्मज्ञ ?' इति चेष्टितयुक्तेन ध्वनिना अपृच्छत्।

तत् वेङ्कटरमणेन न लक्षितम् आसीत्। सः अवदत् – 'गौः इत्युक्ते किमिति परिभावितम् ? अखण्डविश्वस्य प्रतीकं सा । विश्वस्य समस्तक्रियाणाम् अनुष्ठात्र्यः सर्वाः देवताः गवि वसन्ति । तस्याः शृङ्गमूले ब्रह्मविष्णू स्तः । शृङ्गाग्रे सर्वतीर्थानि सन्ति। नेत्रयोरुभयोः सूर्याचन्द्रमसौ, दन्तेषु वायुः, जिह्वायां वरुणः, हूँकारे विद्याधिदेवता सरस्वती, उभयोरोष्ठयोः प्रातःसन्ध्ये, चतुर्षु पादेषु चत्वारः धर्माः, मूत्रे गङ्गा, ऊधसि चतुःसमुद्राः प्रत्येकं लोमसु प्रत्येकं देवता इति संहत्य त्रयस्त्रिंशत्कोटिदेवताः वसन्ति। अत एव महर्षयः आहुः –

विक्रयार्थं हि यो हिंस्याद् भक्षयेद् वा निरङ्कुशः।
घातयानं हि पुरुषं येऽनुमन्येयुरर्थिनः ॥
घातकः खादको वापि तथा यश्चानुमन्यते।
यावन्ति तस्या रोमाणि तावद्वर्षाणि मज्जति ॥

नाम हिंसया खादनाय उत हननाय यः गां विक्रिणीते, विक्रयणाय यः अनुमतिं ददाति सः गोः यावन्ति लोमानि सन्ति तावन्ति वर्षाणि रौरवनरके मज्जति।'

'एवं वा ?' आश्चर्यं प्रकटयन्ती हिल्डा अपृच्छत्।

'किमन्यदिति जानाति ?' सः दृढध्वनिना अवदत्।

प्रशान्तायां तस्यां रात्रौ उच्चैः श्रूयेत यथा तथा सकृत् गहगहिति हसित्वा हिल्डा

अवदत् – 'भवता प्रतिपादिता कल्पना समीचीनास्ति । गौः विश्वस्य प्रतीकम् इति भाविता चेत् तस्याः अङ्गाङ्गानि भवतां पुराणे प्रतिपादितानां देवदेवतानां प्रतिनिधयः भवन्ति । किन्तु तत् प्रतीकं गौः एव कुतः भवेत् । निदर्शनार्थं श्वा, महिषी वा कुतो न भवेत् ?'

एतेन प्रश्नेन वेङ्कटरमणस्य उद्वेगः अभवत् । उत्थाय स्थितः – 'भवत्याः परिहास-योग्यः लघुविषयः न मया उच्यमानः । भवत्या सह सम्भाषणम् एव अयोग्यम्' इति उक्त्वा ततः प्रस्थितः । किन्तु हिल्डा उत्थाय तस्य भुजद्वयं परिगृह्य 'चर्चायाम् उत्तरम् अदत्त्वा एवं पलायनं न कर्तव्यम्, उपविशतु' इत्यवदत् । तया एवं भुजग्रहणेन तस्य सङ्कोचेन साकं कोपः अपि जातः । किन्तु तौ नियन्त्र्य पुनः उपविश्य सः अवदत् – 'कास्ति भवत्याः चर्चा ?'

'गाम् एवंरीत्या पूज्यामिति भावयन्तः भवन्तः महिषान् कुतः निष्कारुण्येन पश्यन्ति ? अहमपि अस्मिन् अवसरे मारम्मायात्रोत्सवं द्रष्टुं गता आसम् । तत्र छिन्नाः महिषाः कियन्तः ? तेन स्यन्दितं रक्तं, स्थापिताः शवाः कियन्तः ? तदपि देवस्य नाम्ना, देवस्य तृप्त्यै तावन्तः प्राणिनः हताः ? एतदेव खलु भवतां धर्मस्य अन्यत् मुखम् ? ईश्वरसृष्टौ सर्वेऽपि प्राणिनः समानाः इत्यभिमानेन वदन्तः भवन्तः एकं प्राणिनं कटिं बद्ध्वा रक्षन्ति, अन्यं तया एव कट्या उत्तभ्य स्थित्वा घ्नन्ति, कुतः ?'

वेङ्कटरमणस्य एतद्वचनस्य उत्तरं न भासितम् । तथापि अवदत् – 'पश्यतु, स च निकृष्टजनानां पूजाक्रमः । देवपूजायाम् एवं जीववधः न कार्यः इति सर्वकारेणैव विधिं विधाय निर्बद्धः अपि अस्ति । जीववधः उच्चशास्त्रेषु यत्र कुत्रापि न प्रतिपादितः । तथापि..' सः स्मृत्वा अवदत् – 'हतेन प्राणिना सद्गतिरेव लभ्यते इति श्रद्धया ते छिन्दन्ति ।'

'प्रियवयस्य, अधुना भवान् कस्मिन् क्लेशे पतितः इति जानाति किम् ?' इति सा द्योतिताभ्यां स्वनेत्राभ्यां तं दृढम् अवलोकयन्ती अपृच्छत् – 'सः निकृष्टजनानां पूजाक्रमः इति भवानेव वदति । किन्तु भवान् कुतः तस्मिन् दिने देवतायै, तस्मै अग्नये, रथाय च पुण्योदकप्रोक्षणार्थं गतः ? छेदनावसरे भवान् नासीदिति सत्यम् । किन्तु उत्सवस्य अन्यस्मिन् अङ्गे भवान् अपि भागं गृहीतवान् । यस्मिन् कस्मिन्नपि अङ्गे अथवा स्तरे भागवहनेनापि समग्रक्रियायाः लोपदोषाणां दायित्वं भवता वहनीयमेव । अन्यच्च सर्वकारेण एव विधिमादिश्य देवस्य नाम्नि प्राणिवधः निषिद्धः इति अङ्गीकारोऽपि

उच्यते । तथा नाम भवतां धर्मकल्पना सर्वकारस्य शिरःप्रवेशेन परिवर्तनीया किमु ? म्रियमाणेन प्राणिना सद्गतिः लभ्यते इति श्रद्धया ते तथा कुर्वन्ति इत्युक्तं खलु, ततोऽपि अधिकं मूर्खम् उत्तरम् अन्यन्नास्ति ।'

एतावद्वचनावसरे हिल्डायाः ध्वनिः गम्भीरत्वं प्राप्य, अन्ते अन्ते कोपेन कम्पमानः आसीत् । 'मां, मम जनसन्ततिम् अनागरिकां वदति खलु । स्वस्वधर्माचरणं प्रथमतः परिवर्तयन्तु । अनन्तरम् अन्येषां जीवनक्रमं टीकयितुम् अधिकारः भवद्भिः प्राप्येत ।'

वेङ्कटरमणः तत्क्षणम् अवदत् – 'अस्माकं मूलभूतदृष्टिः सदापि उच्चतमा । सर्वप्राणिनां जीवितस्वातन्त्र्यम् अस्ति । कस्यापि प्राणिनः अन्यस्मिन् कस्मिन्नपि कयापि रीत्या अधिकारः न विद्यते इति अस्माकं विश्वासः । सर्पमण्डूकौ, हरिणशार्दूलौ परस्पर–प्रेम्णा क्रीडन्तः वसेयुः इति अस्मत्तपोवनानाम् आदर्शः आसीत् । कतिपयक्षुद्रवर्गाणां पूजाक्रमे मेषमहिषाः मार्यन्ते इति तु सत्यम् । एतस्मात् वर्षात् तदपि अन्तिमम् अभवत् । किन्तु इतरप्राणिनाम् अस्तित्वम् एव मनुष्याणां मृगोदरपूरणाय इति भवताम् अनागरिकदृष्टिं परिवर्तयन्तु । तावत्पर्यन्तं भवत्या सह सम्भाषणमपि निरर्थकम् ।'

एतावदुक्त्वा सः ततः उत्थाय प्रस्थितः । तत्क्षणं हिल्डा अवदत् – 'मांसाहारः पापं चेत् सर्वविधः मांसाहारः पापकरः । अजं, मेषं, कुक्कुटं, मत्स्यं च भवद्देशीयाः जनाः भक्षयन्ति । किन्तु गोमांसमात्रं वर्ज्यम् । एषा तर्कहीना श्रद्धा ।'

तावता कालेन वेङ्कटरमणः दूरं गतः आसीत् । गोष्ठे विद्युद्दीपः ज्वलन् आसीत् । तडागस्य समीपे दीपस्तम्भः अस्ति चेदपि तत्र पिञ्जः न नुत्तः आसीत् । बहिः गाढान्धकारस्य अभावेऽपि सामान्यतः अन्धकारः आसीदेव । हिल्डा तम् उच्चैः अवदत् – 'पश्यतु, गोष्ठस्थाः भृत्याः भोजनार्थं गताः । तेषां प्रत्यागमनं रात्रेः नववादनसमये भवति । अहम् एकाकिनी स्त्री कथं गृहं गच्छेयम् ? भवान् सहितः आसीदिति जमालः प्रेषितः । मां गृहाय न प्रहिणोति किम् ?'

'भवादृशानां रक्तपिपासूनां भयं कुत्र स्यात् ? मम आगमनस्य न कापि आवश्यकता विद्यते' इति उच्चैः उक्त्वा सः अग्रे गतः । हिल्डा दहद्भ्यां नेत्राभ्यां तां दिशं पश्यन्ती एकनिमेषम् अवस्थिता । अनन्तरं मन्दं गत्वा गोष्ठस्य अन्तः प्रकोष्ठे स्थितं करदीपं गृहीत्वा मुख्यद्वारं तालिकया पिधाय एकाकिनी एव प्रस्थिता ।

तावदेव कोऽपि अभिमुखम् आगच्छन् दृष्टः । करदीपम् उज्ज्वाल्य सा अपश्यत् । सः वेङ्कटरमणः । 'गच्छतु, भवतीं गृहं प्रापय्य गच्छामि' इत्यवदत् ।

'वन्दनानि । भवतः आवश्यकता नास्ति' सा छटारिति अवदत् । अर्धनिमेषं तूष्णीं स्थित्वा सः शीघ्रं प्रस्थाय गतः ।

## 5

हिल्डायाः मनः कोपेन फूत्कुर्वत् आसीत् । वेङ्कटरमणः सा च यस्मिन् दिने सम्भाषेते चेत् या काऽपि चर्चा भवत्येव । भिन्नाभिप्रायस्य पुनःपरिचायनमेव चर्चायाः अन्तः भवति स्म । कियत्यपि भिन्नाभिप्राये जातेऽपि एतावत्सु दिनेषु स्वयम् अजानत्याः एव तस्य विषये स्नेहः वर्धितः आसीत् । तस्य व्यक्तित्वे तया एव अनवगतार्थतया किमपि आकर्षणं भासते स्म । किन्तु अद्य तत् सर्वं प्रशुष्य तिरस्कारः उदितः । सहनया चर्चां विधाय गृहम् अगच्छन् सः तां तस्याः जनसन्ततिं वा अनागरिकेति पदे पदे उपालभ्य गतः आसीत् ।

तया आरात्रि निद्रा एव न प्राप्ता । एतद्देशजनानां श्रद्धा, आचारः इति सर्वं तस्यां विचित्रमिति भासते स्म । इदानीं तत् सर्वम् आषाढभूतित्वम् इति भासते । प्रातः षड्वादने उत्थिता सा जमालम् उच्चैः सम्बोध्य 'पश्य, अद्य उत्कृष्टं मांसम् आवश्यकम्' इत्यवदत् ।

'करीमः ह्यः सायं प्रेषितवानस्ति, तद् दूषितं किम् ?'

'तत् न मया उच्यते । कस्याश्चन प्रौढायाः धेनोः मांसम् आवश्यकम् ।'

'तत् कुत्र लभ्यते साहेब् ?'

'अस्माकं गोष्ठे । एकां बालां गाम् आनय । भवानेव अत्र हत्वा मांसम् अपनय । पश्य, पुण्यकोटिधेनुः इति भृत्याः वदन्ति खलु । तासु अन्यतमां बालाम् आनय ।'

जमालस्य पत्नी अपि तावता उत्थाय तत्र आगता आसीत् । हिल्डा संयोज्य कन्नडेन भाषते इति सा ज्ञातवती आसीत् । सा अवदत् – 'अम्माजि, तथा मा कारयतु । समन्ततः यः कोऽपि जानाति चेत् अस्मान् सर्वान् गर्ते निवेश्य संलगयेत् ?'

जमालः अपि अवदत् – 'हिन्दुजनानां सहवासं भवती न जानाति । तेषु यं कमपि हन्ति चेत् मौनं तिष्ठेयुः । धेनुं हन्ति चेत् उपरि आक्रामन्ति । अस्मदर्थं मांसं वितरति खलु करीमः, सः कदाचित् रम्ज़ानुत्सवे काञ्चन गां हतवान् । वार्ता अष्टदिनेभ्यः

अनन्तरं ग्रामे अवगता । पुरुषभटाः आक्रम्य आगताः । तस्य गृहमेव दाहितवन्तः । सः यदि गुप्ततया पलायनं कृतवान् न स्यात् तर्हि तमपि हतवन्तः स्युः ।

परन्तु हिल्डा निश्चितध्वनिना अवदत् – 'कथमपि भवतु । अस्मिन् समये तत् मम आवश्यकम् एव । इदानीमेव गत्वा काञ्चन धेनुम् आनय । अत्र कोऽपि न जानाति । आवश्यकं चेत् कर्मभृत्यान् अद्य विरामः इत्युक्त्वा प्रेषय ।'

जमालस्य पत्नी स्वेन सर्वोऽप्यर्थः अवगतः इव मुखे हासं लासयन्ती अवदत् – 'पश्यतु, अम्माजेः अधुना पञ्च मासाः सन्निहिताः खलु । तत् खादनीयम् इति आशा जाता ननु । तस्याः देशे प्रतिदिनं तदेव सुखेन खादितवती आसीत् ।'

जमालः 'अस्तु' इति गोष्ठं गतः । तमाखुक्षुपाणां मध्ये स्थितेन अञ्चलेन शीघ्रं शीघ्रं गत्वा गोष्ठं प्राप्तः । एतावता एव कालेन तेन तत्र गत्वा गोभ्यः क्षीरं दोहनीयम् आसीत् । तस्य आगमनावसरे भृत्यैः सर्वमपि सज्जीकृतम् आसीत् । तस्मिन् आगते एव विना विलम्बं यन्त्रेण एकैकस्याः अनन्तरम् अन्यस्याः क्षीरं चोषितवान् । दुग्धं क्षीरं परिमाप्य धानीषु सम्पूर्य, सः यानपर्यन्तं वोढृभिः भृत्यैः सह प्रेषितवान् । सपादवादने यानमपि आगत्य गतम् । शिष्टान् भृत्यान् 'भवन्तः यत्र कुत्रापि गच्छन्तु । अद्य कर्मणः विरामः अनुमतः अस्ति तावत् । अद्य क्षेत्रकर्म अपि नास्ति इति अन्यानपि वदन्तु इति सर्वान् प्रेषितवान् । धेनूनां तृणानि जलं च परिशीलयितुं मध्याह्नकाले यः कोऽपि आगच्छेत् इति अवदत् ।

सर्वेषां गमनानन्तरं जमालः पुण्यकोटिसन्तानस्य काञ्चन धेनुं स्थूणातः विमोच्य, परिगृह्य प्रस्थितः । इतोऽपि प्रथमवत्सायाः मातुः तस्याः प्रसूय चतुर्मासाः अतीताः आसन् । तस्याः वत्सा पृथक् बद्धा स्वस्थूणायाः समीपे शयिता मातरं पश्यन्ती आसीत् । स्ववत्सायाः दिशं दृष्ट्वा हूँकुर्वती माता जमालम् अनुसृतवती ।

तेन गवानयनकाले हिल्डा निरीक्ष्य निरीक्ष्य ताम्यति स्म । कालः तदानीमेव अष्टवादनम् अतिक्रान्तः आसीत् । जमालस्य शेड्मध्ये एव स्थापितशिलापट्टं किञ्चन स्थलम् आसीत् । तत्रैव पूर्वं कियत्स्वपि अवसरेषु सः कालिङ्गहिल्डयोः पाकाय लघ्वल्पान् अजमेषकुक्कुटान् हत्वा मांसं विशदीकृत्य स्थालिकायां नीत्वा हिल्डायाः पाकगृहस्य उत्पीठिकायाः उपरि स्थापितवान् आसीत् । इदानीमपि धेनुं सः साक्षात् स्वशेड्स्थलान्तः आकृष्य नीतवान् । धेनोः तत् नूतनं स्थलम् आसीत् । न केवलं तत्, न केनापि स्थितं पर्यावरणम् आसीत् । एतदवधि सा एकस्मिन्नपि दिने एकाकिनी नासीत् । किन्तु जमालः

बलेन ताम् अन्तः आकृष्टवान् । कस्यापि विरोधकरणम् अजानती सा विना विरोधं तस्य आकर्षणे स्वात्मानम् अर्पितवती । हिल्डा तत्रैव स्थिता आसीत् । तस्याः पृष्ठतः तस्याः सार्धद्विवर्षीयः पुत्रः जाकः स्थितः आसीत् । जमालस्य पत्नी पाकगृहस्य द्वारे आसीत् ।

धेनोः बद्धां रज्जुम् एव विमोच्य जमालः तस्याः चतुर्षु पादेषु बन्धम् आदाय तां हिल्डायाः हस्ते दत्त्वा आक्रष्टुम् अवदत् । तया आकर्षणावसरे सः तस्याः शृङ्गद्वयमपि परिगृह्य तिर्यक् परावर्तितवान् । विरोधकरणमेव अजानती धेनुः शीघ्रं स्खलित्वा अधः पतिता । चतुरः अपि पादान् सङ्घात्य सः खुरत्रलगयिता इव दृढं बद्धवान् । 'अम्बऽऽ' इति क्रन्दन्ती अधः पतिता गौः अक्षिकनीनिकां समन्ततः भ्रामयन्ती निस्सहायदृष्टिं लक्ष्यं विना प्रसारयति स्म । जमालस्य पत्नी अन्तर्देशात् एकस्मिन् अल्यूमिनियंकलशे जलं निशितां छुरिकामेकां च आनीतवती । जमालः कलशजलं गोः कशेरुकायाः उपरि संसिच्य 'एकां स्थालिकाम् आनय' इति पत्नीम् अवदत् । तया अन्तर्देशात् आनीतां स्थालिकां कण्ठात् अधः तस्मिन् नोदयति सति सा उच्चैः आक्रुष्टवती । शृङ्गं ग्रहीतुं जमालः पत्नीम् अवदत् । सा परिगृह्य पादेन गृहीतवती । स 'बिस्मिल्ला' इति मुखेन वदन् छुरिकां दक्षिणहस्तेन परिगृह्य तस्याः कशेरुकायां प्रवेश्य आकृष्टवान् । तावति काले बहिः गिरौ देवस्थानस्य बृहद्घण्टायाः वादितायाः ध्वनिः श्रुतः । जमालस्य हस्तौ कम्पितौ, मुखं च स्वेदितम् । धेनोः कशेरुकायाः छेदनात् रक्तं दबदबिति स्थालिकायाः अन्तः स्रुतम् । घण्टानादे तारस्तरेण श्रूयमाणे धेनुः सकृत् तारस्वरेण आक्रोशत् । किन्तु बहिः प्रसृता तस्याः जिह्वा बहिरेव लम्बिता अभवत् । बद्धान् स्वपादान् चालयितुं द्विवारं निष्फलयत्नं विधाय, अनन्तरं निश्चलतया शयिता । स्थालिकायां रक्ते परिपूर्णतां प्राप्य उच्चलिते धेनोः नेत्रे स्थिरे जाते, लम्बिता जिह्वा निश्चला जाता । बिभ्यन्नेव जमालः अवदत् – 'मेडं, घण्टाशब्दश्रवणेन मम भयं भवति । सः पूजकः कुतोऽपि अस्यां दिशि आगच्छति चेत् का गतिः ?'

'सः इतःपरं गृहं नागच्छति । मा चिन्तय' इति वदन्त्याः एव हिल्डायाः दृष्टिः तस्याः पार्श्वे अवस्थितस्य जाकस्य दिशि गता । जाकः न रोदिति स्म । किन्तु भयेन थरथरिति कम्पते स्म । तत्क्षणमेव तम् उन्नीय सा तस्य मातृभाषया 'मम वत्स, किमर्थम् एवं कम्पसे ? भयस्य न कोऽपि अवसरः । तूष्णीं तिष्ठ मम वत्स' इत्यालिङ्गितवती । तथापि तस्य कम्पनं न स्तब्धं जातम् । तम् उन्नीय एव सा बहिः आगता । तत्र समन्ततः न कोऽपि आसीत् । सा देवस्थानाभिमुखम् अपश्यत् । न कोऽपि दृष्टः । सः पूजकः

देवस्थानस्य अन्तः अवस्थाय गोः शिलाविग्रहे पुष्पाणि लगयति स्म प्रायः इति भावितवती । तावदेव जमालस्य पत्नी बहिः आगत्य अवदत् – 'रक्तं पूर्णतया स्रुतम् अस्ति । मांसच्छेदनं करोमि किम् इति पृच्छति ।'

'त्वमेव एतम् उद्गृहाण' इति उक्त्वा जाकं तस्य हस्ते समर्प्य हिल्डा जमालस्य आश्रयगृहं गत्वा, अन्यः कोऽपि नागच्छेदिति द्वारं पिहितवती । रक्तं पूर्णतया स्रवित्वा इदानीं धेनोः मृतदेहः केवलं शयितः आसीत् । जमालः तस्याः पादबद्धां रज्जुम् अपनीतवान् आसीत् । सः तस्याः मुखमेव अपश्यत् ।

सा अपृच्छत् – 'जमाल, ह्यः सः पूजकः अवदत्, त्वया श्रुतं किम् ? गोः नेत्रे सूर्याचन्द्रमसौ स्तः इति । स्तनेषु चतुःसमुद्राः इति । देहस्य कस्मिन् कस्मिन्नपि भागे यावन्त्यः तावन्त्यः त्रयस्त्रिंशत्कोटिदेवताः सन्ति इति ।'

'आं मेडम् । हिन्दवः तथा वदन्ति ।'

'कुत्र, तया छुरिकया त्वम् एतस्याः नेत्रं छिन्दि । स्तनं कर्तय । सर्वाण्यपि अङ्गाङ्गानि एकैकशः छिन्दन् उपसर । काः काः देवताः सन्ति इति पश्याम ।'

सा उपहसति, उत यथार्थतया वदति इति जमालः कण्ठम् उद्यम्य तस्याः मुखम् अपश्यत् । तस्याः मुखं गम्भीरम् आसीत् । 'किमर्थं तूर्णीं स्थितोऽसि ? मम मुखं किमिति पश्यसि ? मया यथा उक्तं तथा कुरु । नो चेत् छुरिकां मम हस्ते देहि । अहमेव कर्तयित्वा पश्यमि' इति उक्तवत्येव तस्य समीपे शिलायां स्थापितां छुरिकाम् आदाय गोः नेत्रद्वयेऽपि प्रवेशितवती । अनन्तरं तस्याः स्तनान् विच्छिद्य ऊधः विदारयन्ती आकृष्टवती । उदरे अपि एकवारं प्रवेश्य दृष्टवती । एकनिमेषं मुखे व्यङ्ग्यरेखाः उद्भाव्य, स्वयमेव स्वात्मनि स्वमातृभाषया अवदत् – 'मूर्खाः अनागरिकाः, अवैज्ञानिकमूर्खाः । एतेषां श्रद्धायाः यः कोऽपि वैज्ञानिकः आधारः नास्ति !'

तया स्वात्मनि उक्तं जमालेन न ज्ञातम् । स्वहस्ते स्थितां छुरिकां धेनोः शरीरे संस्थाप्य द्वारम् उद्घाट्य बहिः आगता ।

जमालस्य पत्नी जाकम् उद्गृह्य भ्रमति स्म । अधुना जाकः तूष्णीम् अभवत् । तम् आदाय स्वगृहं गत्वा हिल्डा सोफायां शयिता अभवत् । तस्याः अतीव आयासः आसीत् । सा प्रातः उपाहारं काफीं वा न स्वीकृतवती आसीत्; इदानीम् अपि ग्रहीतुम् इच्छा नाभूत् । अर्धघण्टानन्तरं तत्र आगतां जमालपत्नीम् अवदत् – 'पश्य, अद्य मया पाकः कर्तुं न शक्यते । त्वमेव तत् आनीय कुरु । किन्तु पश्य, करणविधानम् अहं

बोधयामि । यूयं यथा कुरुथ तथा उपस्करं मा योजय ।'

'अस्तु अम्माजि, किन्तु मांसम् एतावत् भवति तावत् । वयमेव खादितुं न शक्नुमः । अवशिष्टं किं करवाम ?'

'अस्माकं यावत् आवश्यकं तावत् विहाय अवशिष्टं यस्मै कस्मैचित् देयम् इति वद' इति उक्त्वा एकं निमेषम् आलोच्य सा अवदत् – 'पश्य, अण्डम् आनेतुं जमालः द्विचक्रिकया कथमपि करीमस्य आपणं गच्छति । एतावत्सु दिनेषु करीमः अस्मभ्यं मांसं ददाति स्म । अद्य तस्मै दत्त्वा आगन्तुं वद । तस्य गृहे स्थिताः अपत्यानि, शिशवः खादन्तु नाम । सः विक्रयणेन धनं सम्पादयितुम् अपि शक्नुयात् ।'

मध्याह्नसमये जमालस्य पत्नी गोमांसस्य पाकं कृत्वा समापितवती । तावदेव जमालः गृहम् आगतः आसीत् । स्वयोः यावदावश्यकं तावत् आदाय अवशिष्टं पिधाय सा गृहं गता । अनन्तरं हिल्डा जाकेन सह अन्तः गत्वा भोजनाय उपविष्टा । जाकः दिनमिव भोजनम् अकरोत् । किन्तु तस्यै पाकः न अरोचत । पाकक्रमे न कोऽपि दोषः आसीत् । जमालस्य गृहिणी हिल्डायाः आदेशानुसारमेव सर्वम् कृतवती आसीत् । किन्तु द्वित्रचमसमितस्य भक्षणेनैव अलम् इति भासितम् । हिल्डायाः अमेरिकातः विमानात् मुम्बयीनगरे अवतीर्य, रैल्यानेन मुम्बयीपरित्यागानन्तरम् अद्यावधि एकस्मिन्नपि दिने गोमांसभोजनस्य अवसरः तया न प्राप्तः आसीत् । स्वेन एव अनवगतेन कोपेन केनापि सा अस्मिन् दिने उदरविदलनं यावत् भक्षणीयम् इति आशावती आसीत् । पर्याप्ततया भुक्तम् उदरं प्रविशतु इति अर्धघण्टातः पूर्वम् एकम् अंशं पानीयमपि स्वीकृतवती आसीत् । किन्तु कुतः एवम् अभवत् ?

जाकः भोजनं समाप्य उत्थितः । स्वयमपि उत्थाय, अवशिष्टम् आच्छाद्य सा उत्पीठिकां मार्जितवती । तया तथास्थितया एव असहनीया एकाकिता स्मृता अभवत् । काळिङ्गस्य आगमनम् अद्य सायम् उत श्वः स्यात् ! एतावत्सु दिनेषु अपि अस्मिन् देशे यः कोऽपि स्नेहितः नास्ति । सा गत्वा मञ्चस्य उपरि शयिता । जाकः अपि निद्रितः ।

किन्तु मध्याह्ने सार्धद्विवादने एव काळिङ्गः गृहम् आगतः । तेन द्रष्टुं गतस्य व्यान्-यानस्य आदेशः दत्तः आसीत् । अन्तिमेऽपि पक्षे एकवर्षात् पूर्वं तत् वितीर्यते इति तस्य वणिक् उक्तवानिति । अस्मिन् देशे एकस्य मोटर्यानस्यापि एतावत् कष्टम् ।

भोजनावसरे काळिङ्गः अपृच्छत् – 'किमिदम् ? विशेषरुचिः अस्ति खलु

पाकस्य ?'

'किं स्यात् ? भवानेव वदतु ।'

पञ्चषवारम् आहारं जिह्वया परिचालयन् अवदत्– 'गोमांसम् । एतत् कुतः प्राप्तम् ?'

'करीमेन प्रेषितम् ।'

'बहुधैर्यस्य कार्यम् । यः कोऽपि जानाति चेत् सः न जीवेत् । इतःपरम् एतत् अस्माकं कृते मा प्रेषय इति सन्दिशतु ।'

'कुतः डियर्, भवतः अपि धर्मबन्धः प्राप्तः किमु अत्र प्रत्यागमनानन्तरम् ?'

'धर्मस्य विषये न । बहु रुचिकरम् अस्ति । किन्तु तत् वयं खादामः इति जानन्ति चेत् समन्तात् ग्रामीणाः जनाः उद्वेगं प्राप्य किमपि कुर्युः । तत् व्यावहारिकनैपुण्यं न भवति ।'

हिल्डा तूष्णीम् अतिष्ठत् । तथास्थितौ एव ताम् एकाकिताभावना आवृता । तस्याः गम्भीरं मुखं दृष्ट्वा काळिङ्गः अपृच्छत् – 'डार्लिङ्ग्, कुतः खिन्नमनस्का जाता ? भवत्या भोजनमेव न कृतम् इति भासते । सत्यं किम् ?'

'हूं, न रोचितम् ।'

'आगच्छतु, मया सह करोतु' इति तस्याः बाहुम् आदाय स्वस्य पार्श्वस्थे आसन्दे उपवेश्य सः एव तस्यै अन्यं चमसं, दंशिकां च दत्त्वा स्वस्थालिकां मध्ये सारितवान् । एकस्यामेव स्थालिकायाम् उभाभ्यामपि खादितुम् आरब्धम् । तस्यै अरोचत । सा अवदत् – 'डियर्, इदनीं भवान् यदि नागमिष्यत् तर्हि अहम् उपवासेनैव अभविष्यम् । भवतः आगमनानन्तरम् एव मह्यम् अरोचत ।'

'तत्तु सहजम् । अस्य देशस्य स्त्रियः पत्युः भोजनपर्यन्तम् उपवासेन तिष्ठन्ति । भवत्याः अपि तदेव जातम् ।'

'माम् एतद्देशीया इति भवान् भावयति किं डियर् ?'

'सन्देहः कः ?'

'न कोऽपि । थ्याङ्क्यू, थ्याङ्क्यू वेरिमच्' इति उक्त्वा पुनरपि स्थालिकापूर्णं परिवेषितवती ।

# चतुर्दशः ध्यायः

## 1

जमालेन यावता रहस्येन कर्म कृतं चेदपि विषयः तद्दिने सन्ध्यातः पूर्वमेव काळेन–पल्ल्या ज्ञातः अभवत् । काळिङ्गेन यदा गोष्ठं निर्माय गावः सञ्चोद्य नीताः तदैव सः गोवधं कारयतीति ग्रामीणैः बहुभिः भावितम् आसीत् । तस्य आधीन्ये कर्म कुर्वेति एकैकस्मिन्नपि भृत्ये इमं सन्देहं निवेद्य गुप्तनिरीक्षणाय तैः उक्तम् आसीत् । तदर्थं मुख्यसूचना तायव्वातः एव प्राप्ता आसीत् । गोष्ठे वसन्त्यः गावः कियन्त्यः, ताभिः प्रसूताः वत्साः संहत्य कियन्तः सन्ति इत्यादिगणना भृत्यैः मनसि एव स्थापिता आसीत् ।

मध्याह्नसमये धेनुभ्यः तृणानि, पौष्टिकाहारांश्च दातुम् आगतेन एका गौः न्यूना अभवदिति लक्षितम् । सः अन्यस्मै अवदत् । तेन धावता गत्वा विषये स्वामिन्यै हिल्डायै निवेदिते सा 'कुत्रापि अन्तर्धाय गता स्यात्, गवेषयत' इत्यवदत् । तेन एव भृत्येन जमालस्य आश्रितगृहं गत्वा निवेदिते सः 'सा मूल्याय विक्रीता' इत्यवदत् । 'वत्सः तत्रैव अस्ति खलु' इति भृत्येन उक्ते, 'तव किमर्थं तत्सर्वम् ? वराक, पिधाय गच्छ तावत्' इति कोपं प्रदर्शितवान् । भृत्यस्य सन्देहः अभवत् । तावदेव तस्य नासिकायाम् आर्द्ररक्तमांसयोः गन्धः अपि संलग्नः । श्वस्तनदिनेऽपि भवतु इति जमालस्य गृहिणी स्वपाकगृहे पर्याप्तं मांसं संस्थापितवती आसीत् । भृत्यः मौनेन बहिरागतः । जमालः भोजनार्थं स्वाश्रय–स्थानस्य अन्तः गतः ।

कस्यचित् भृत्यस्य फार्म्क्षेत्रे एव एकत्र गर्तं विधाय किमपि अन्तर्लगितम् इतिवत् भासितम् अभवत् । अन्तर्लगितस्य भूतलस्य उपरि पार्श्वतृणानि उत्पाट्य क्षिप्तानि आसन् । भृत्यः स्वेन तस्यां दिशि गतमिति यथा न ज्ञायेत तथा मन्दं कल्याण्याः उद्भूमिम् आरुह्य ततः यानमार्गम् आगत्य, वामपार्श्वं परावृत्य गोष्ठम् आगत्य अन्यस्मै भृत्याय विषयं निवेदितवान् । इतरधेनुभ्यः तृणानि, स्यूते स्थितं चूर्णं च वितीर्य, अनन्तरम्

उभावपि ग्रामं धावितवन्तौ । गोहत्या इत्येतत् अद्यावधि एताभ्यां न दृष्टपूर्वम् आसीत् । अधुना तु काळिङ्गगौडज्जस्य गोष्ठे एव संवृत्तम् अभवदेव । गौडज्जवंशस्य पुण्यकोटिजातीया धेनुरेव तैः हत्वा भक्षिता ।

तायव्वा एतावत्पर्यन्तमपि माध्याह्निकं भोजनं न कृतवती । एताभ्याम् उभाभ्यामपि गत्वा विषये निवेदिते तस्याः हृदये घातस्पन्दनं प्रारब्धम् । सा वेङ्कटेगौडम् आहूय आनेतुं संज्ञाम् अकरोत् । सः क्षेत्रं गतः आसीत् । भृत्यौ एव तत्र गत्वा विषयं निवेद्य आनीतवन्तौ । गौडः दश मुख्यजनान् आहूतवान् । ग्रामे महिलाभिः बालैः संहत्य एका महती सभा एव आयोजिता अभवत् । यत्किमपि कर्म उद्दिश्य काळेनपल्लीम् आगतः होन्नः विषयं ज्ञात्वा अग्रहारे स्वस्वामिनः वेङ्कटरमणस्य शालां गत्वा निवेदितवान् । अन्तिमावधिं तथैव परित्यज्य वेङ्कटरमणः काळेनपल्लीं धावित्वा आगतः ।

तस्य आगमनावसरे सभा महता आवेगेन प्रवर्तमाना आसीत् । एवंरीत्या गोवधं कृतवद्भ्यः कः दण्डः देयः इत्यमुं मुख्यप्रश्नं बहुधा चर्चितवन्तः । ग्रामसंहितायै सहस्ररूप्यकाणां दण्डः देयः इति एकेन उक्तम् । ‘एतेषाम् अस्मत्पुत्राणां सहस्रम् इत्युक्ते का गणना स्यात् तात ? एतावत् उच्यते चेत् पिधाय ददाति । इतोऽपि सम्यगेव करणीयम्’ अन्यः उक्तवान् । वेङ्कटरमणम् आगतं दृष्ट्वा सभ्याः तस्मै मुख्यस्थानं दत्त्वा उपवेश्य, गोघातकाय देया दण्डशिक्षा कीदृशी ? इति प्रश्नम् उपस्थापितवन्तः । वेङ्कटेगौडस्य पुत्रः माटः अवदत् – ‘जोयिसः किमिति प्रष्टव्यः ? देवीमाहत्म्यनाटके उक्तं किल, गोवधकर्तुः प्राणान् हरेत् इति । सा एव दण्डशिक्षा ।’

किन्तु तां दण्डशिक्षां विधातुं न शक्यते । देशस्य सर्वकारस्य, रक्षिभटानां न्यायालयस्य च नियमाः भिन्नाः सन्ति । तावदेव अन्यः अवदत् – ‘तेभ्यः किमपि अपहर्तुं न शक्यते । ते भुशुण्डिकां स्वाधीने स्थापितवन्तः । सा अरुणकन्या एव भुशुण्डिकां चालयति । जागृत । तस्य साबस्य हस्ते छुरिका, कृपाणः सर्वम् अस्ति इति ।’

अनेन वचनेन सभ्यानां हृदयकुण्डस्य तापः ईषदिव उपशान्तः । ‘भुशुण्डिकया सः किम् अपहरेदिति अहं पश्याम्येव’ इति माटः हृदयं प्रहृतवान् । तावत्पर्यन्तं तूष्णीं स्थिता तायव्वा माटाभिमुखं श्लाघनहस्तं प्रसारितवती ।

इदानीं वेङ्कटरमणः अभाषत । सर्वे निःशब्दं तस्य वचनम् अवधारितवन्तः । ‘सम्भावितः घटनाविषयः अस्माभिः सुष्ठु अवगन्तव्यः । तत्र एका गौः नास्ति इति तु सत्यम् । सा तैः विक्रीता स्यात् । वयं गत्वा ‘कस्मै विक्रीता ? गौः कुत्र अस्ति ?’ इति

पृच्छाम । अस्माकं कृते तस्याः दर्शनदायित्वं तेषां भवति । अकस्मात् तैः न दर्शिता चेत् तैः हता इति निर्णेतुं शक्येत । यस्यां तावत् भूमौ खातं कृत्वा आच्छादिता तां उत्खात्य पश्याम ।'

इतोऽपि अन्यत् एकं वचनम् । काळिङ्गः ग्रामे नास्ति । एतत् तस्य पत्नी एव कारितवती इत्यत्र ह्यः तया सह जातः दीर्घः कटुश्च संवादः तस्य स्मृतिपटले आगतः । किन्तु तत् किमपि अनुक्त्वा सः अनुवर्तितवान् – 'काळिङ्गस्य आगमनं विना अस्माभिः तत्र गत्वा किं कर्तुं शक्यते ?'

'नहि । स मध्याह्ने लोकयानेन आगतः अस्ति । अहम् अपश्यम्' इति कश्चन अवदत् ।

'तथा चेत् सर्वे गच्छाम । तमेव न्यायं पृच्छाम । तस्य पत्नी अपराधम् अङ्गीकृत्य, पञ्चगव्यप्रायश्चित्तम् आचरेत् । ग्रामाय संहत्यै ते एकसहस्ररूप्यकाणि दण्डरूपेण दद्युः। इतोऽपि एकः विषयः । पुण्यकोटिदेवस्थानस्य कल्याण्याः जलं ते स्वतमाखुक्षेत्राय उपयोजयन्ति । तौ दम्पती उभावपि तस्यां कल्याण्यां तरतः । तथा न कर्तव्यम् इति अहं पूर्वमेव एकस्मिन् दिने उक्तवान् आसम् । तौ न अङ्गीकुरुतः । कल्याणी तयोः स्ववस्तु इतीव जानीतः । अद्य तदपि वक्तव्यम् । ततः तेषां जलयन्त्रम् उत्पाटनीयम् । देवस्य अभिषेचनीये जले यः कोऽपि पादमपि न मज्जयेत् । तथा चेत् तत्र तौ किं तरेताम् ?'

'तदेव सुष्ठु' इति वदन्तः सर्वेऽपि उत्थिताः ।

'उपदिष्टं नाङ्गीकुर्वन्ति चेत् दण्डमादाय ताडनीयाः ते जारजाः दासीपुत्राः ।' माटः पौरुषेण अवदत् ।

'कोऽपि वृथा कोलाहलं मा कुर्यात्' इति उच्चैः उक्त्वा वेङ्कटरमणः तैः सह मिलितः । येन केनापि मुखतः न निर्णीतं चेदपि वेङ्कटरमणः वेङ्कटेगौडश्च तैः नेतारौ कृतौ आस्ताम् । पुरुषाणां पृष्ठतः महिलाः, बालाः अपि प्रस्थिताः । महिलानां समूहे स्थिता तायव्वा सर्वाभिः सह संज्ञया भाषते स्म । मध्ये मध्ये रुदित्वा अश्रु अञ्चलेन प्रोञ्छति स्म।

## 2

गिरितः अवतीर्य सर्वैः फार्मगृहसमीपे अगमनावसरे इतोऽपि सन्ध्याप्रकाशः आसीत् । एतावतः जनान् एकदैव पश्यन्ती जमालस्य गृहिणी हिल्डाम् अवदत् । बहिरागत्य हिल्डा

पश्यति, द्विशताधिकाः पुरुषाः, महिलाः, बालाश्च गणशः अवतीर्य आगच्छन्ति स्म । स्वेन गोवधः कारितः इति ग्रामजनैः ज्ञातम् इति तस्याः अन्तःप्रज्ञया तत्क्षणमेव भासितम् । तथापि किमपि अप्रदर्शयन्ती सा अग्रे आगतं वेङ्कटरमणम् आङ्ग्लभाषया अपृच्छत् – 'एतेषां जनानां शरीरे प्रबोधावस्था विद्यते न वा ? तमाखुक्षुपाणाम् उपरि सञ्चरन्तः आगच्छन्ति ।'

किन्तु तस्य स्थाने वेङ्कटेगौडः अवदत् – 'त्वं धेनुं घातितवती । त्वयि न्यायम् आवेदयितुम् आगताः स्मः । कुत्रास्ति तव पतिः ? तम् आह्वय ।'

हिल्डा एतत् वचनं ज्ञातवती । सा कन्नडेन अवदत् – 'अस्माकं फार्म्क्षेत्रस्य अन्तः आगन्तुम् अधिकारः केन दत्तः ?'

स्वपितुः पृष्ठतः एव स्थितः माटः उच्चैः अवदत् – 'दासीपुत्रि, न्यायम् आवेदयितुम् आगताश्चेत् कलहिनी उत्तरं ददासि किम् ? आह्वय नाम तव पतिम् ।'

वेङ्कटरमणेन माटाभिमुखं परावर्त्य – 'माट, नीचवचनं न वक्तव्यम् । तूष्णीं तिष्ठ' इत्युक्तेऽपि सः नाभ्युपगतवान् । 'एतादृशे दासीजने साधुवचनं युज्यते किम् ?' इत्यपृच्छत् ।

सम्यक् अर्थावबोधः न जातश्चेदपि तेन उक्तानि नीचवचनानि उपालम्भरूपाणि इति हिल्डया ज्ञातम् । सा धृष्टतया स्थित्वा अवदत् – 'भवन्तः सर्वे इदानीमेव बहिः गच्छेयुः । नो चेत् मया भुशुण्डिका प्रेरिता भवेत् ।'

'पश्यतु, सः बालकः । सहसा वदति । तत् न मुख्यम् । इदानीं न्यायार्थं सङ्गच्छेत । काळिङ्गः कुत्र ? आह्वयतु ।' वेङ्कटरमणः अवदत् ।

'तस्य आह्वानं नावश्यकम् । गाम् अहं घातितवती । तत् प्रष्टुम् अधिकारः भवतां नास्ति ।'

एतद्वचनं श्रुत्वा जनाः उद्रिक्ताः जाताः । पृष्ठतः स्थितेषु केचन लोष्टानि आदाय गृहाभिमुखं क्षिप्तवन्तः । एकं लोष्टं रोय्यिति गत्वा हिल्डायाः भुजम् अताडयत् । वेङ्कटरमणः वेङ्कटेगौडश्च जनान् समाधातुं परावृत्ताः । तावति एव हिल्डा अन्तः गता । काळिङ्गः गृहे नासीत् । एकक्षणं तस्याः रोदनम् अभवत् । किन्तु तत्क्षणम् एव भुशुण्डिकां हस्ते गृहीतवती । तस्य अन्तः स्फोटिकां स्थितां परीक्ष्य बहिः आगत्य जानानाम् अभिमुखं लक्ष्यं प्रसारयन्ती अवदत् – 'तत्क्षणं सर्वेऽपि विकीर्य गच्छन्तु ।

अन्यथा ट्रिगर् चालयामि ।'

भुशुण्डिकां दृष्ट्वा तत्क्षणम् अनेके आतङ्केन धावितुं प्रारब्धवन्तः । किन्तु पुरतः स्थिताः केचन तथैव स्थिताः आसन् । एतावत्पर्यन्तमपि पृष्ठतः महिलाभिः सह स्थिता तायव्वा पुरतः आगत्य वेङ्कटरमणेन साकम् अतिष्ठत् । वेङ्कटरमणः आक्रुश्य अवदत् – 'भुशुण्डिकाभयं मा उद्भावयतु, एतस्य परिणामः कः इति जानाति किम् ?'

हिल्डा भुशुण्डिकाम् आकाशाभिमुखं परावर्त्य एकां गोलिकां चालितवती । विकीर्णाः जनाः इतोऽपि कम्पिताः जाताः । पुरतः स्थितानां हृदयमपि कम्पितम् आसीत् । वेङ्कट–रमणः झटिति पुरतः उपसार्य तस्याः हस्तं परिगृह्य माटम् उच्चैः आहूतवान् । माटः, तस्य पिता, तायव्वा इत्यादयः धावन्तः आगत्य तां परिगृहीतवन्तः । तावति एव गृहपार्श्वतः धावन्नागतः काळिङ्गः तान् अपसार्य अभिमुखम् आगत्य भुशुण्डिकाम् आक्षिप्तवान् । तस्य पृष्ठतः जमालः अपि आगतः । काळिङ्गः गोष्ठं गतः आसीत् । एतावन्तः जनाः गिरिपार्श्वतः फार्म्क्षेत्रम् अवतीर्णाः इति दूरतः एव पश्यन् सः शीघ्रं शीघ्रम् आगतः । हिल्डायाः प्रथमगोलिकायाः उत्क्षेपणावसरे एव सः गृहस्य पार्श्वम् आगतः आसीत् ।

कमपि विषयम् अजानन् सः अपृच्छत् – 'किमिदं वेङ्कटरमण ?'

वेङ्कटेगौडः अवदत् – 'जगच्चारिणां मत्पत्नीपुत्राणां मुखदर्शनं न शक्यते किम् ? किमिदम् इति पृच्छसि किम् जारज मत्पुत्र ?'

ग्राम्यसम्भाषणे एतादृशवचनानि न विशेषमर्हन्ति चेदपि स्वान्वयेन पुरतः एव येन केनापि एवंरीत्या भाषितम् आसीत् । तस्य अपमानम् इव जातम् । तथापि सहनाम् आश्रित्य अपृच्छत् 'सत्येन वदामि, अहं किमपि न जानामि । तत् किमिति प्रथमतः वदतु ।'

वेङ्कटरमणः अवदत् – 'भवतां गोष्ठस्य एकां धेनुम् अद्य प्रातः हत्वा भवन्तः खादितवन्तः । तदर्थं न्यायम् आवेदयितुं ग्रामीणाः सर्वे आगताः सन्ति ।'

मध्याह्ने गोमांसपाकः स्वस्मै परिवेषितः इति तत्क्षणं काळिङ्गेन स्मृतम् । तेन सह सम्भाव्यमानः वृत्तान्तः अपि भासितः अभवत् । पत्न्याः बाहुम् आदाय सः अपृच्छत्, 'हिल्डे, घटितं यथार्थतया वदतु । असत्यं मा वदतु ।'

अपमानेन तप्तायाः तस्याः नेत्राभ्यां बळबळिति अश्रु निःसृतम् । किन्तु उत्तभ्य

स्थिता अवदत् – 'अथ किम्, अहमेव घातितवती । मम गोष्ठस्य गाः घातयित्वा वयं भक्षयामः यत् तत् आक्षेप्तुं यस्य कस्यापि अत्र अधिकारः नास्ति । अहमेव ममाज्ञया जमालम् उक्त्वा, घातयित्वा पाकं कारितवती ।'

एतावत् उक्त्वा सा गृहस्य अन्तः गता । जनानां दृष्टिः इदानीं जमालस्य उपरि अपतत् । तावति एव सः क्षेत्रस्य उपरिष्टात् धावं धावं गतः आसीत् । काळिङ्गः क्षणकालं स्वस्मिन् स्वयमेव किमपि आलोच्य, अग्रतः स्थितं ग्राममुख्यम् अवदत् – 'मया वृत्तान्तः न ज्ञातः एव । इदानीं भवितव्यम् अभवदेव । किं कर्तव्यम् ? भवानेव वदतु ।'

तावता कालेन विकीर्णाः जनाः सर्वे पुनः गणशः मिलिताः । माटः, अन्यौ द्वौ पुरुषभृत्यौ जमालं पलायमानम् अनुधाव्य गतौ । स्थितान् सर्वान् उपवेष्टुम् अवदत् यजमानः वेङ्कटेगौडः – 'भवान्, भवतः पत्नी, उभावपि पञ्चगव्यं स्वीकुर्याताम् । ग्रामसंहत्यै एकसहस्रदण्डं दद्यात् । देवस्य मन्दिरकल्याण्यां भवता योजितं पम्प्यन्त्रम् उत्पाटनीयम् ।'

'एकसहस्रं चेत् दातुं शक्नोमि । पञ्चगव्यविषयः तेषां तेषां श्रद्धायाः सम्बद्धः भवति । आवश्यकं चेत् अहं स्वीकुर्याम् । अन्यजातीयां तां बलात्कर्तुं कथं शक्येत ?'

'भवता परिणीता इति तस्याः जातिः अन्या भवितुं कथं शक्यते ?' वेङ्कटेगौडः अपृच्छत् ।

'तस्याः जातेः वचनम् अधुना मास्तु । सा तत् न अङ्गीकरोति ।'

'नाङ्गीकरोति चेत् उत्क्षिप्य, हृदयं प्रहृत्य अङ्गीकारय । भवान् किं न पुरुषात् जातः पुत्रः ननु ?'

काळिङ्गः एतस्य वचनस्य उत्तरं नावदत् । अपृच्छत् – 'कल्याण्यां योजितस्य पम्प्यन्त्रस्य उत्पाटनं किमर्थम् ? एतस्य तस्य च कः सम्बन्धः ?'

'देवस्य कृते कल्याणी निर्मिता चेत् तस्याः जलं भवतः स्वकार्याय कथं स्वीकुर्यात् ?'

'मम पितामहेन निर्मितायाः कल्याण्याः जलस्य उपयोगे अधिकारः मम अस्त्येव । सः मम क्षेत्रे विद्यमानः कूपः ।'

इदानीं वेङ्कटरमणः अवदत् – 'भवतां अधिकारः अस्ति । किन्तु धर्मार्थं कृते वस्तुनि यः कोऽपि अधिकारः नास्ति । भवतां पितामहः जीवितः एव अस्ति चेदपि

तस्यापि न कोऽपि अधिकारः अभविष्यत् । शास्त्रमेव तथा अस्ति ।'

एतद्वचनस्य तायव्वा साधुता इव स्वदक्षिणमुष्टिम् आदाय वामहस्ततले नोदितवती । वेङ्कटेगौडः ध्वनिं योजितवान् – 'भवतां पितामहः तक्षकेभ्यः धनं दत्तवान् ननु, एतदर्थं वृषभशकटम् आनीय, पुरुषभृत्यैः सह श्रमकर्म कैः कृतम् इति जानाति किम् ? ग्रामजनैः संहत्य कृतमिदं कर्म ।'

'तस्याः जलम् अहं क्षेत्रार्थं प्रवाहयामि चेत् देवस्थानस्य जाता हानिः का स्यात् ?'

वेङ्कटरमणः अवदत् – 'पश्यतु, अस्मिन् विषये भवान् कियदपि वारं मया सह वादं कृतवानस्ति । अहं समञ्जसेन शास्त्राधारेण उत्तरं दत्तवानस्मि । पौनःपुन्येन मा पृच्छतु ।'

तावति काले जमालस्य ग्रहणाय गताः त्रयोऽपि प्रत्यागताः । तेषु अन्यतमस्य बाहोः रक्तं स्रवति स्म । हस्ते एकां छुरिकां गृह्णन् मातः समीपे आगत्य अवदत् – 'दासीपुत्रम् अनुधाव्य गताः वयम् । यानमार्गस्य अपरपारे गृहीतः इव आसीत् । मत्पुत्रः अर्धोरुकस्य कोशात् एतां छुरिकाम् आदाय क्षिप्तवान् । पुट्टस्य बाहौ पतिता । एषः अय्यय्यो इति आक्रुष्टवान् । वयम् इतः प्रत्यावृत्ताः । सः पलायनं कृतवान् । अन्धकारे न दृष्टः एव ।'

काळिङ्गः अन्तः गत्वा जलं बोरिक्चूर्णं, टिञ्चर्, कार्पासब्याण्डेज् सर्वम् आनीय स्वयं क्षतं क्षालयित्वा औषधं संयोज्य बद्धवान् । क्षतं तावत् गभीरं नाभवत् । एते त्रयः अपि अधुना पञ्चायततानां समीपे एव उपविष्टाः । वेङ्कटरमणः काळिङ्गम् अवदत्– 'पश्यतु, अस्मिन् विषये वादं मा करोतु । विना व्याजं कल्याणीतः पम्प्यन्त्रम् उद्धरतु ।'

दशनिमेषेषु आलोच्य, अनन्तरं काळिङ्गः अवदत् – 'उद्धरामि । अन्यस्य कूपस्य खननं चेत् एकशः दशसहस्ररूप्यकाणां व्ययः स्यात् । तत् मम महत् गणनं न भवति । किन्तु अन्यस्य कूपस्य खननपर्यन्तं तमाखुसस्यानां का गतिः ? अन्यकूपस्य सिद्धतानन्तरम् एतत् उद्गृहामि ।

वेङ्कटरमणस्य मनसि तत् स्वीकारार्हं वचनम् इति अभासत । सः तथैवेति वदेत् । तावत् एव वेङ्कटेगौडः अवदत् – 'तत् किमपि मास्तु । ज्ञातव्यं चेत् इदानीमेव जानातु नाम । जलम् आवश्यकं चेत् भवतः गोष्ठस्य कूपात् उद्धरतु ।'

किन्तु गोष्ठस्य कूपः फार्म्कूपात् किञ्चित् निम्नस्थले अस्ति । तस्य जलागारस्य औन्नत्यस्य निर्णयावसरे फार्मर्थं जलस्य प्रवाहणस्य दृष्ट्या न चिन्तितम् असीत् । तथापि काळिङ्गः एकं निर्धारम् अङ्गीकर्तुं निश्चितवान् । गोष्ठस्य आयसं जलागारम् । निम्नस्थं

भवनम् उन्नतीकृत्य उच्चताधिक्यं सम्पादयति चेत् तस्य जलं फार्मर्थं प्रवाहयितुं शक्यते । किन्तु यानमार्गस्य अन्तः एकः नालः गच्छेत् । एतावत् इतः अष्टसु दशसु वा दिनेषु एव कृत्वा समापयितुं शक्यते ।

'भवतु, श्वः एव उद्गृह्णामि' इति तेन उक्तं गणजनैः नाङ्गीकृतम् । 'इदानीमेव उद्धरेत्, आगच्छतु' इति अवदन् ।

कयाचित् रीत्या अपमानं, निस्सहायकता, किन्तु दूरदृष्टियुतया सहनया कालिङ्गः उत्थाय गृहस्य अन्तः गत्वा टूल्पेटीं, खनित्राणि गृहीत्वा आगत्य अवदत् – 'गच्छन्तु, भवन्तः अपि सहायाः भवन्तु ।'

वेङ्कटेगौडोऽपि कतिचनपुरुषभृत्यैः सह तस्य पृष्ठतः गतः । स्तम्भे लगितः विद्युद्-गोलदीपः प्रकाशते स्म । सः एकैकशः यन्त्रस्य पिधानानि विमोचयितुम् आरब्धवान् । सर्वेषां विमोचनानन्तरं, तस्य निर्देशानुसारेणपुरुषभृत्याः एकैकं भागम् उद्वाह्य निम्नस्थलम् आनीय स्थापितवन्तः । अनन्तरं ते एव सर्वाण्यपि ट्र्याक्टर्गृहाय वाहितवन्तः । पम्प्यन्त्राय निर्मितां सिमेण्ट्वेदिकां भृत्याः एव खनित्रेण भेदितवन्तः ।

एतावत्समापनावसरे मध्यरात्रः अतीतः । यत्र यत्र सर्वत्रापि गाढान्धकारः गंविति ध्वनति स्म । तावति काले महिलानां बालानां गणाः सर्वे ग्रामं गताः आसन् । कालिङ्गः गृहम् आगत्य वेङ्कटेगौडस्य हस्ते एकसहस्रं रूप्यकाणि दत्तवान् । 'श्वः प्रातः पूजावसरे देवस्थानम् आगत्य, दम्पती उभावपि पञ्चगव्यं स्वीकुरुताम्' इति उक्त्वा शेषः गणः ततः निर्गतः ।

## 3

अपमानेन तप्ता हिल्डा तावत्पर्यन्तं जागरिता एव शयिता आसीत् । जमालस्य बीबी अपि शेड्स्थाने एकाकिनी स्थातुं भीता हिल्डायाः वास्तव्यगृहस्य अन्तः अनिद्रा शयिता आसीत् ।

सर्वेषां गमनानन्तरं पत्या अन्तः आगत्य द्वारपिधानानन्तरं हिल्डा अवदत् – 'भवान् अद्य अतिभीरुः इव आचारितवान् ।'

'किमन्यत् कर्तव्यम् आसीत् ?'

'मया एकस्य एर् शाट् स्फोटनेन अर्धजनाः विकीर्णाः आसन् । अन्यत् अर्धम् अपरेण शब्देन गतं भवेत् ननु ।'

'ते न अगमिष्यन् । ते एव उत्पत्य भवत्याः हस्तात् भुषुण्डिकाम् आक्षिप्तवन्तः खलु ?

'आत्मरक्षणार्थम् इति गणस्य उपरि गोलिकास्फोटनेन किम् अभविष्यत् ?'

'वयं सर्वे पाशिनः अभविष्याम । एतादृशविषये सहसागमनं किं विवेकः ?'

'तथापि डियर्, भवान् भीरुः इव प्रवृत्तः । अस्मिन् देशे पोलीस्, सर्वकारः यः कोऽपि नास्ति किम् ? ते अवदन् इति कुतः पम्प्यन्त्रम् उद्गृह्य आनीतवान् ?'

'पोलीस्जनाः सदा अस्माकं प्रतिपालने तिष्ठन्ति किम् ? अत्रत्यानां ग्रामाणां सहवासं भवती न जानाति । उद्रिक्ताः भवन्ति चेत् अस्माकम् एकवर्षीयम् उत्पन्नम् एकस्यां तामस्यां रात्रौ आगत्य विनाश्य गच्छन्ति । त्रिशतषष्टिदिनेषु अपि कः रक्षिभटः आगच्छेत् अस्माकं प्रतिपालनाय ? तां कल्याणीं त्यजामश्चेत् किं स्यात् ? इतः दश द्वादश वा सहस्रं रूप्यकाणि वीतानि स्युः । व्यान्यानाय दत्तम् आदेशं श्वः एव अपास्तं करिष्यामि । अन्यं जलाशयं तटाकं कूपं वा खनामः । संहत्य एतावता एव समाप्तः खलु उपप्लवः ।'

'किन्तु भवान् मम हस्तावलम्बनं त्यक्तवान् डियर्, मम मानः न रक्षितः ।'

एतद् वचनं कालिङ्गस्य अनिष्टमिति भासितम् । सायङ्कालतः जाताः पराभवघटनाः सः सहनया निगृह्य व्यावहारिकविवेकन प्रवृत्तः आसीत् । इदानीं पत्न्या क्रियमाणेन आरोपेण क्रुद्धः अवदत् – 'भवत्याः मानपरिपालनाय मया किं करणीयम् आसीत् ? स्थानीयः प्रसङ्गः कीदृशः इति भवती न जानाति किम् ? जानं जानं भवती किमर्थं गां घातितवती ?'

'ओ, सः पूजकः माम् उद्वेजितवान् । ह्यः सायङ्कालतः अहं कियतीं वेदनाम् अनुभूतवती इति भवान् कल्पयितुं न शक्नुयात् !' इति सा सगद्गदं रुदितवती ।

शयितायाः तस्याः मस्तकम् उन्नीय स्ववक्षःस्थले नामयित्वा सान्त्वयन् सः अपृच्छत् 'कुतः, किमभूत् ?'

'ह्यः कुतोऽपि सः आगतः आसीत् । मया साकं गोष्ठम् आगतः । यन्त्रेण क्षीरदोहनम् अपश्यत् । 'वत्साय क्षीरं कुत्र ? स्त्रिया भवत्या तत् किं न ज्ञेयम् ?' इति अपृच्छत् । अस्मद्देशे एन्जैम् कृते वत्सानां हननम् उक्तवती । भवन्तः अनागरिकाः अनागरिकजन–

सन्ततौ निविष्टा भवती इति किमपि किमपि उपालभत । ततः पश्चात् गोः अङ्गाङ्गेषु अपि देवदेवताः तिष्ठन्ति । जागृहि इत्युक्त्वा गतः । एतत् अपमानं कः सहेत ? अद्य प्रातः एकां गां घातयित्वा तस्याः अङ्गाङ्गानि परीक्ष्य परिशीलितवती ।'

'तेन भवत्याः अपमानं गतं किम् ?'

'तथा न वदामि । यथा कथञ्चित् किमपि समाधानं मनसः अभवत् ।'

काळिङ्गः न भाषितवान् । एतत् स्वस्य ललाटलिखितम् इतीव मुखे रेखाम् आनीय नेत्रे निमीलितवान् । हिल्डा अपि नेत्रे निमील्य तस्य अङ्कयोः उपरि मस्तकं निधाय शयिता । भारवति स्वस्य उदरे तस्याः अवधानं गतम् । अनन्तरं तथैव स्थिता अवदत् – ''डियर्, एवं वदामीति खिन्नः माभूः । अस्मिन् देशे आगमनात् आरभ्य अहम् एकाकितां सहमाना अस्मि । ह्यः आरभ्य एषा एकाकिभावना मम व्यक्तित्वम् एव निष्पीड्य खादन्ती अस्ति । अद्य सायम् अनागरिकाणां क्रूराणां, पशूनां गणस्य उपद्व्यापितायाः भयेन भवता मम मानस्यैव बलिदानादारभ्य मम न कापि दिशागतिः इतीव भासते । अस्मिन् विशाले अपरिचितदेशे अहमेका निःसहाया एकाकिनीति च भासते ।'

एतद्वचनं श्रुतवतः काळिङ्गस्य मनः तस्याः कृते खिन्नम् अभूत् । ताम् एकवारम् आलिङ्ग्य, परिचुम्ब्य अवदत् – 'डार्लिङ्ग्, किमर्थम् एवं वदति ? यावदहं भवामि तावत् भवत्याः एषा भावना न उदियात् । अस्मिन् परिसरे वयं किञ्चिच्चतुरतया व्यवहरेम ।'

इदानीं सा किञ्चित् समाहिता इव अभवत् । तम् आलिङ्ग्य अवदत् – 'भवतः कृते अहं मम देशं विहाय प्रस्थिता । अन्यं देशं गमिष्यामि, मम ज्ञानेन विज्ञानेन तत्र निःसत्त्वभूतले सुवर्णम् उत्पादयामि इति रोमाञ्चकारकेन उत्साहेन भवन्तम् अहं परिणीतवती । किन्तु अत्र आगतं चेत्, जलं, भूतलं विहाय माम् आद्रियमाणः कोऽपि नास्ति ।'

'अहं किं नास्मि ?'

'अस्त्येव । अहं भवतः कृते एव जीवामि । भवतः कृते एव श्रमं वहामि । अपरिचितैः स्नेहशून्यैः ग्रामैः आवृते अस्मिन् क्षेत्रे आवाम् उभावेव परस्परप्रेमिणौ खिन्नमनस्कौ जीवौ' इति उक्त्वा सा उत्थाय मञ्चस्य मशकजालात् बहिः गत्वा, तस्मै अपि दत्त्वा, स्वयमपि किञ्चित् पानीयं स्वीकृतवती । यवनिकां व्यवस्थितां कृत्वा अन्योन्यम् आलिङ्ग्य शयितौ । जाकः अन्यत्र प्रकोष्ठे शयित्वा निद्रितः आसीत् । स्वल्पेनैव कालेन

हिल्डायाः निद्रा आवेशिता। काळिङ्गस्य तु नेत्रे शान्ते एव। किमपि किमपि कल्पनम्, किमपि किमपि स्मरणम् तस्य मनः उत्कृत्य उत्कृत्य खादति स्म। पितामहकालिकस्य ग्रामजीवनस्य स्मरणं प्राप्तम् आसीत्। सङ्क्रान्तौ गोपूजा, ग्रीष्मोत्सवे वृषभाणां धावनम्, शुक्रवासरे पूजनम् इत्यादयः सर्वे उत्सवाः प्रवाहरूपेण आगताः आसन्। पितामहस्य पितामह्याः स्वमातुश्च गोभक्तिः नेत्रयोः बद्धा इव अग्रे आगत्य तिष्ठति। सायं जनगणेषु तस्य माता अपि आगता आसीत्। वेङ्कटेगौडेन भाषिते, तत् स्वस्य एव वचनम् इव शिरःश्लाघनेन दक्षिणमुष्टिं वामहस्ततले सन्ताडयन्ती आसीत्। देवस्य कल्याणीतः पम्प्यन्त्रं विमोच्य अत्र आनयनपर्यन्तं सा अपि पुरुषैः सहैव स्थिता आसीत्।

काळिङ्गस्य तथैव स्थितौ स्वयमेव एकाकी इति भावना उच्छ्रिता अभवत्। ग्रामस्य एव गौडस्य पितामहस्य पौत्रेण सता स्वेनापि गौडत्वस्य किरीटं धर्तुं शक्येत। किन्तु अस्मिन् दिने ग्रामजनाः सर्वे आगत्य तस्मात् अपराधदण्डं स्वीकृत्य गताः। श्वः प्रातः पूजासमये आहूय पञ्चगव्यं पाययन्ति। हिल्डायाः एकाकितायाः औषधमपि स्वयम् अस्मि। किन्तु स्वस्य एकाकितायाः का दिक् स्यात् ? हिल्डा अपि नास्ति, जाकः अपि नास्ति। तस्य दृष्टिः आपन्नसत्त्वेन वर्धितस्य हिल्डायाः उदरस्य अभिमुखं गता। तेनापि मनसि उत्तरं न भासितम्।

पञ्चषवारम् इतस्ततः पार्श्वयोः लुठता आलोचने मग्नेन एव तेन बहिः काकरटन-शब्दः श्रुतः। समीपे एव स्थितेन करदीपेन हस्तघटीम् अपश्यत्। तदैव प्रातः सार्धपञ्च-वादनम् अभवत्। निद्रितायाः हिल्डायाः प्रबोधनं यथा न स्यात् तथा मन्दम् उत्थाय, मशकजालतः बहिरागत्य मञ्चतः अवतीर्य गृहात् बहिः आगतः। बहिः तावता एव कालेन सामान्यतः प्रकाशः प्रसरन्नासीत्। एकवारं दृष्टिः देवस्थानस्य कल्याण्याः दिशि प्रसृता। तस्य समीपे स्थितस्य काष्ठविद्युत्स्तम्भस्य दीपः प्रज्वलन्नेव आसीत्। इतःपरं सः स्तम्भः अपि उत्पाटनीयः। नूतनकूपस्य खननस्थलमपि संशोध्य निश्चेतव्यम् – इति चिन्तयन् गोष्ठाभिमुखं गतः। तावता स्पष्टतया प्रकाशः जायमानः आसीत्। अभिमुखं दृश्यं तं दिङ्मूढम् अकरोत्; समग्रस्य फार्म्परिसरस्य तमाखुक्षुपाः उत्पाट्य, निष्पीड्य विकीर्णतया क्षिप्ताः आसन्।

नष्टचैतन्यः पादौ आकर्षन् विन्यस्यन् सः अञ्चलानाम् उपरि पुरोगतः। अन्धकारे अदर्शनेन अवशिष्टान् एकैकान् क्षुपान् विहाय सर्वे धूमक्षुपाः नष्टाः आसन्। न्यूनान्यूनं पञ्चाशत्सहस्ररूप्यकाणां हानिः आसीत्। एतत् कार्यं कदा कृतम् ? रात्रौ आवयोः

शयनानन्तरं कृतं किम् ? तैः उक्ते अपराधदण्डे दत्तेऽपि, पञ्चगव्यम् अङ्गीकृत्य, कल्याण्याः पम्प्निष्कासनेऽपि कुतः एवं कृतवन्तः ? एतत् पूर्वमेव निश्चितम् आसीत् किम् ? अथवा समुदाये क्षणस्फूर्त्या जातम् आलोचनमिदं किम् ? सः पदचिह्नानि परीक्षितवान् । महिलाः बालाश्च भागिनः इति सुस्पष्टम् अभूत् ।

हिल्डावचनमिव रक्षिभटेषु आपादनं देयम् इति मनसि प्राप्तम् । किन्तु तेन किं स्यात् ? अग्रे कदापि पुनः एवं कर्तुं ग्रामीणानां धैर्यं यथा न स्यात् तथा त्रिचतुराणां निगडबन्धः कारणीयः किम् ? तथा कारितं चेत् कस्य कस्य ग्रहणं भवेत् इति चिन्तयन् गोष्ठं गतः ।

गोष्ठे अपरमेकं दृश्यं प्रतिपालयदासीत् । प्रमुखद्वारं छिन्नं भिन्नम् आसीत् । गावः सायं यत्र तत्रैव स्थले बद्धाः आसन् । परं संहत्य पञ्च धेनवः षट् वत्साश्च ततः अदृश्याः आसन् । ये केऽपि भृत्याः नासन् । अस्मिन् समये धेनूः स्थूणातः बहिः बद्ध्वा क्षीरदोहनं प्रारब्धव्यम् आसीत् । किन्तु क्षीरदोहनयन्त्रस्य चालकः जमालोऽपि नासीत् । एकोऽपि भृत्यः नासीत् । अदृश्यानां धेनूनां खङ्ख्यां कालिङ्गः परिशीलितवान् । ताः समानक्रमेण न गताः आसन् । तस्य झटित्येव एकः अंशः भासितः । गताः सर्वाः पुण्यकोटिसन्तानस्य धेनवः । गोष्ठे तत्सन्तानस्य आहत्य षट् धेनवः आसन् । एका हिल्डाजमालाभ्यां हता चेत् संहत्य षडपि पुण्यकोटिधेनवः एव नासन् । तथा नाम ह्यः एताभ्यां हता अपि पुण्यकोटि–सन्तानगता एव । पञ्च धेनवः, तासां वत्साश्च, किञ्च ह्यः मृतायाः धेन्वाः वत्सः अपि नीताः आसन् । एतत् चौर्यकार्यं तु नासीत् । रात्रौ पम्प्यन्त्रस्य निष्कासनानन्तरं स्वस्य माता एव अत्र आगत्य धेनूः विमोच्य नीतवती । पुण्यकोटिजातिः तस्याः गृहदेवतासमाना इति तस्य मनसा ऊहः कृतः ।

क्षीरं दोग्धुं सहायाः भृत्याः न सन्ति । एकैकशः स्तनान् प्रक्षाल्य यन्त्रेण स्वयं दोग्धुं खेदम् अनुभूय, सः एकस्य दिनस्य क्षीरमेव मास्तु इति निर्णीतवान् । ह्यः रात्रौ जातायाः पञ्चाशत्सहस्राधिकरूप्यकहानेः गणनया दिनार्धस्य क्षीरहानिः अगण्या एव इति विचिन्त्य पञ्चषान् वत्सान् विमोच्य शेषान् विमोचयन् आसीत् । किन्तु वत्सैः गत्वा मातुः ऊधः प्रणुद्य आस्वादयितुम् आरब्धं चेत् धेनवः असहमानाः उत्क्षिप्य, उत्क्षिप्य पादैः प्रहर्तुम् आरब्धवत्यः । स्वभावतः तेन मोचिताः वत्साः सर्वे तेषां मातॄणां प्रथमप्रसूताः । पुरतः स्थितानां वत्सानां लेहनम् रब्बर्नलिकाभिः चोष्यमाणस्य क्षीरस्य मूत्रवत् स्रावणं केवलं ताभिः अभ्यस्तम् आसीत् । किन्तु वत्सानां स्तन्यपानप्रवृत्तिः न नष्टा आसीत् ।

कालिङ्गेन वत्साः बद्धाः । स्वयमेव एकैकशः धेनूः आनीय शीघ्रं शीघ्रं यन्त्रस्य

नलिकाम् आयोज्य सर्वाभ्यः धेनुभ्यः अपि क्षीरं स्रावितवन्। प्रक्षाल्य सज्जीकृतेषु भाण्डेषु प्रपूर्य स्वतः एव त्रिवारं यानमार्गपर्यन्तं नीत्वा काले यानाय प्रापितवान्। धेनूः स्थितस्थले एव परित्यज्य गोष्ठस्य पुरोद्वारस्य कीलिकाबन्धं विधाय यानमार्गम् अतिक्रम्य, उत्पाट्य स्थितान् धूमक्षुपान् पश्यतः तस्य गृहागमनावसरे सार्धाष्टवादनम् अभवत्।

जमालस्य गृहिणी उत्थाय स्वस्य आश्रयगृहं गता आसीत्। जाकः अस्य शेड्तः अग्रे क्रीडन् आसीत्। हिल्डा इतोऽपि न उत्थिता। सम्पूर्णरात्रौ निद्राभावात् कालिङ्गस्य नेत्रे बुगबुगिति तपतः स्म। देहहस्तानां तोलनं च्युतं भवति स्म। मुखप्रक्षालनार्थं स्नानगृह-गमनावसरे स्मृतम् अभवत्, गृहोपयोगाय निर्मितं जलागारं पूर्णम् आसीत्। किन्तु अद्य सायं तत् रिक्तं स्यात्। तदनन्तरं पानीयं जलं गोशालातः उत कल्याणीतः आनेयं भवति। ह्यः रात्रौ जातस्य सस्यसमृद्धिनाशहेतोः रक्षिभटेषु आपादनं देयम् इति चिन्तनं तेन परित्यक्तम्। न केवलं फार्म्मध्ये, अपि तु गोष्ठे अपि श्रमकार्यकरणे भृत्याः एव नासन्। ग्रामीणेषु सपादग्रहणम् आवेदनेन विना एकोऽपि भृत्यः न लभ्यते। इतःपरम् अहम् एतस्मिन् फार्म्मध्ये किं कुर्याम् ?

मुखं प्रक्षाल्य बहिरागमनावसरे देवस्थाने घण्टावादनं श्रुतम्। तावति काले कश्चन बालकः गृहम् आगत्य अवदत् – 'सर्वे मन्दिरम् आगताः सन्ति इति, युवाभ्यां दम्पतिभ्यां आगन्तव्यम् इत्युक्तम्।'

स्वागमनं निवेद्य कालिङ्गेन बालकः प्रेषितः। हिल्डा इतोऽपि न उत्थिता। आहूता चेत् नागच्छेत् इति तस्य मनः वदति स्म। स्वप्राणहानौ अपि एतत् अपमानकारकं प्रायश्चितं नाङ्गीकुर्याम् इति सा वदेत्। गृहद्वारं तथैव अग्रे कृत्वा जाकं सहैव नीत्वा कल्याण्याः समीपतः एव सः देवस्थानं गतः। जलोन्नयनयन्त्रेण स्थितस्य स्थलस्य दर्शनेन मनः दुःखनिमग्नम् अभवत्।

देवस्थानस्य आन्तरम् अङ्गणं वेङ्कटरमणः शुचिं कुर्वन् आसीत्। बहिः वेङ्कटे-गौडः, माटः इत्यादयः दश जनाः आसन्। एतं पश्यन् वेङ्कटेगौडः 'त्वम् एकाकी आगतः। तव पत्नी कुत्र ?' इति अपृच्छत्।

'आरात्रि शीतज्वरेण शयिता आसीत्। पञ्चगव्यं मम हस्ते ददातु। अहमेव गत्वा पाययामि।'

कालिङ्गस्य उत्तरस्य पृष्ठभूमिका वेङ्कटरमणेन तत्क्षणम् एव ज्ञाताम्। किन्तु सः मौनेन आसीत्। गौडः अपि तस्य न कमपि आक्षेपम् उद्भावितवान्। वेङ्कटरमणः

पूजयितुम् आरब्धवान् । वेङ्कटेगौडः काळिङ्गम्, 'स्नातं किम् ?' इति अपृच्छत् । तेन 'न' इत्युक्ते वेङ्कटरमणं निवेद्य, देवस्थानस्य कलशं स्वीकृत्य काळिङ्गं, तस्य पुत्रं च कल्याणीतटं नीतवान् । काळिङ्गेन स्वयुतकस्य, काखि-अर्धोरुकस्य, पुत्रस्य रात्रियुतकस्य च विमोचनानन्तरं तयोः उभयोरपि शिरसि दडदडिति संहत्य कलशत्रयजलम् आनीय अभिषिक्तवान् । केवलम् आर्द्रेण चण्डातकेन शरीरं कम्पयन् बद्धहस्तः काळिङ्गः पुत्रेण सह देवस्थानस्य द्वारं गत्वा स्थितः । वेङ्कटेगौडः अन्तर्द्वारस्य उपरि द्वारबन्धे स्थिते विभूतिपिण्डे स्वयम् अङ्गुलित्रयेण घर्षयित्वा पितापुत्रयोः उभयोरपि ललाटे लेपितवान् । जाकस्य अरुणललाटे सितविभूतिः धूम्रवर्णं भस्म इव लिप्तम् ।

अर्धघण्टायां पूजा समाप्ता । अनन्तरं वेङ्कटरमणः मन्त्रं पठन् बहिः आगत्य प्रथमतः काळिङ्गाय उद्धरणत्रयं पञ्चगव्यं दत्तवान् । काळिङ्गः तत् नेत्रे परिमार्ज्य, पानानन्तरं पुनः उद्धरणत्रयं हस्ततले प्रदाप्य जाकं पायितवान् । जाकः औषधपाने इव मुखं कृत्वा तत् गीर्णवान् । अनन्तरं पलाशदलेन लघुद्रोणीं विरचय्य काळिङ्गपत्न्यै उद्धरणत्रयस्य तत्र स्थापनानन्तरं तत्र सङ्गताः समस्ताः पञ्चगव्यं स्वीकृतवन्तः ।

देवस्य महामङ्गलनीराजनानन्तरं सर्वेभ्यः नीराजनं तीर्थं च वितीर्य पलाशदलानाम् उपरि प्रसादरूपेण कदलीफलरसायनस्य विनियोगानन्तरं वेङ्कटरमणः अपि प्रसादं स्वीकृत्य, बहिरागत्य उपविष्टः । तदा काळिङ्गः वेङ्गटेगौडम् अपृच्छत् - 'ह्यः भवद्भिः उक्तं सर्वं नाङ्गीकृतं किम् ? तावत् न पर्याप्तम् इति क्षेत्रस्य धूमक्षुपान् सर्वान् किमर्थम् उन्मूल्य क्षिप्तवन्तः ?'

'किम् ? धूमक्षुपाः उन्मूलिताः ?' किमपि अजानता गौडय्येन पृष्टम् ।

'क्षेत्रे एकोऽपि क्षुपः न त्यक्तः । सर्वानपि उत्पाट्य छित्त्वा क्षिप्तवन्तः खलु । पञ्चाशत्-सहस्ररूप्यकाणि गतानि । तस्य बीजम्, गोभरः, जलस्य विद्युत् इति व्ययः कियान् कृतः ? भवद्भिः कः लाभः प्राप्तः ?' इति वदतः काळिङ्गस्य स्वरः सभारः आसीत् ।

'को नु खलु बालहरितक्षुपेषु न्यस्तहस्तः चोरः मत्पुत्रः ? रे, देवमन्दिरे उपविष्टाः स्थ, सत्यं वदत' इति वेङ्कटेगौडः सर्वान् अपश्यत् ।

काळिङ्गम् आनेतुं गतः द्वादशवर्षीयः बालकः अवदत् - 'रात्रौ यूयं सर्वे अत्र यन्त्रस्य विमोचनतत्पराः यदा आस्त तदा वयं महिलाश्च सर्वे संहताः उत्पाटितवन्तः ।'

'थू, युष्माकं गृहं नश्यतु तावत् । दासीपुत्राः' इति वेङ्कटेगौडः समूहेन उपालब्धवान्,

'तथा कुरुत इति कः अवदत् ?'

'कोऽपि न, बालाः उत्पाटयितुम् आरब्धवन्तः, ज्येष्ठाः अपि सङ्गताः अभवन्।'

कालिङ्गः अपृच्छत् – 'मम गोष्ठे स्थिताः धेनूः कः प्रचोद्य नीतवान् ?'

'संहत्य कति धेनवः गताः ?'

'पञ्च धेनवः, षट् वत्साः ।'

'तव माता एव । ह्यः एकां पुण्यकोटिधेनुं तव पत्नी घातयित्वा भक्षितवती । अतः तत्सन्ततिगावः त्वदधीने न त्यक्तव्याः इति सा रात्रौ इतः गमनावसरे गोष्ठं गत्वा विमोच्य आनीतवती । वयमपि सङ्गताः आस्म ।'

कालिङ्गः पुनः न भाषितवान् । सर्वेषां प्रसादसमाप्त्यनन्तरं सः यजमानगौडम् अपृच्छत् – 'भृत्याः सर्वे शिरः तिरोधाय गताः । इतःपरं मया कथं कृषिव्यवसायः कर्तुं शक्यते ? भवद्भिः निवेदितम् एकसहस्रं दत्तवानस्मि । कल्याणीतः पम्प् उद्गृह्य नीतवानस्मि । पञ्चगव्यं स्वीकृतम् अभवत् । न पर्याप्तमिति पञ्चाशत्सहस्ररूप्यकाणाम् उत्पन्नमपि नष्टम् । इदानीं भृत्याः अपि हस्तच्युताः भवेयुः किम् ?'

'इतःपरं किमपि न चिन्तय । इदानीं पञ्चगव्यं स्वीकृतम् अभवत् खलु । तेभ्यः सर्वेभ्यः आगन्तव्यम् इति वार्तां प्रेषयाम' इति वेङ्कटेगौडेन आश्वस्तम् । वेङ्कटरमणः देवस्थानस्य द्वारं पिधाय पुनरेकवारम् अङ्गणस्य घण्टावादनानन्तरं सर्वेऽपि स्वस्य स्वस्य गृहं गताः ।

एकादशवादनावसरे गृहम् आगतस्य पत्युः पुत्रस्य च ललाटं दृष्टवती हिल्डा तिरस्कारेण अवदत् – 'किमेतत्, अपराधः इति निर्लज्जम् अभ्युपगन्तुं गतः किमु ? भवतः हस्ते स्थितं मदर्थम् आनीतं किम् ?'

'हूम् ।'

'अत्र किं संवृत्तम् इति ज्ञातं किम् ? अत्र अवस्थानेन अपायः इति बीबीम् आनेतुं जमालः यं कमपि प्रेषितवान् । सा प्रस्थाय गता । कुत्र ? किम् ? – इति न किञ्चिदपि उक्तम् । क्षेत्रे एकोऽपि धूमक्षुपः नावशिष्टः ।'

'तत् सर्वं जानाम्येव । एकोऽपि भृत्यः नास्ति ।'

'डियर्, अहं यथा वदामि तथा अनुतिष्ठतु' तस्य कण्ठं स्वबाहुना आलिङ्ग्य सा अवदत् – 'अस्मिन् देशे अस्माकं प्रष्टारः केऽपि न सन्ति । एतत् सर्वं विक्रीय गच्छाम ।

प्रतिष्ठस्व, अस्मद्देशं गच्छाम। तत्रैव कृषिक्षेत्रं क्रीत्वा कृषिव्यवसायं करवाम। नो चेत् उद्योगं करवाम।'

'नहि, इदानीं ग्रामजनानां कोपः शान्तः अस्ति। भृत्यान् प्रेषयन्ति। वयं पराजिताः न भवेम। एतत् उत्पन्नं गतम्। किन्तु अन्यं कूपं खनित्वा पुनः उत्पन्नं प्राप्नुम। एतैः जनैः सह चातुर्येण व्यवहार्यम्। एकवारं देवालयं गत्वा आगच्छति चेत् सर्वं युक्तं भवति।'

'डियर्, भवतः चातुर्यं माम् इतोऽपि एकाकिनीं करोति। भवान् चातुर्याय अथवा पुनरन्यहेतोः तैः सह क्रीडेत्। किन्तु अहम्, अहम् एतां एकाकितां न सहे।'

'हिल्डे, सहेत। एतस्य वातावरणस्य किञ्चित् संवादिनी भवेत्।'

'नो नो नो। अहं मृत्युना सह संवादित्वं वहामि केवलम्। भवतः कार्येण एतेषां ग्रामीणानां 'वयं जेतारः' इति भावना उदिता अस्ति। अन्यस्मिन् दिने यत् किमपि अल्पकारणाय ते एवं कर्तुं न जुगुप्सन्ते। भवान् इदानीमपि पोलीस् कम्प्लेण्ट् विदधातु। तेषु भयम् अनुत्पाद्य वयं जीवितुं न शक्नुमः।'

काळिङ्गः किञ्चित्कालं स्वात्मनि एव चिन्तितवान्। तस्याः वचनं युक्तम् इति तेनापि भावितम्।

# पञ्चदशः अध्यायः

## 1

अस्मिन् मासे वेङ्कटरमणस्य तालूकुकोशागारं गतस्य वेतनप्राप्तिः सायं पञ्चवादने अभवत्। तावति काले अन्तिमयानं गतम् आसीत्। तालूकुवस्तुविक्रेयदिनमिति कारणेन अग्रहारस्यैव त्रिचतुराणि वस्तुशकटानि आसन्। एतेन विचार्यमाणे तेषां प्रस्थानं रात्रौ नववादनानन्तरम् इति ज्ञातम्। शाकटिकाः पाकं विधाय, भुक्त्वा कण्ठम् उन्नयन्ति स्म। तावत्पर्यन्तं कर्तुं कार्याभावात् सः अटितुं गतः।

तालूकुसार्वजनिकप्राङ्गणे किमपि भाषणं प्रवर्तमानम् आसीत्, ध्वनिवर्धकं संयोज्य। तत् श्रोतुं चतुःपञ्चसहस्रजनाः प्रायः सम्मिलिताः स्युः। एषः अपि गत्वा एकस्मिन् पार्श्वे उपविष्टः। भाषणकारः कोऽपि उत्तरहिन्दुस्थानगतः आसीत्। तेन हिन्दीभाषया भाष्यमाणं तत्पार्श्वे स्थितेन अन्येन स्पष्टकन्नडेन अनूद्य भाष्यते स्म। 'भारतस्य गोपरम्परा अद्यतन–स्थितिश्च' इत्यासीत् विषयः। वेदेषु, उपविषत्सु, पुराणादिषु च गौः अस्मदीयैः कथं भाविता आसीत् इतीदं तेन वैदुष्यपूर्णतया विवृतम्। ते सर्वेऽपि विषयाः, तेन उद्ध्रियमाणाः संस्कृतश्लोकाश्च न्यूनान्यूनं वेङ्कटरमणेन ज्ञाताः आसन्। किन्तु तेन आधुनिककाले भारतस्य गवां स्थितौ वर्ण्यमानायाम् अद्यावधि तेन अज्ञातः कश्चन नूतनप्रपञ्चः एव अवलोकितः। सः अवदत् –

'जनसंख्या अधिका जाता इति हेतोः सर्वकारेण गोचरभूमयः क्षेत्ररूपेण परिवर्तिताः। परिणामतः गवां तृणानि न लभ्यानि अभवन्। तृणाय जलाय च धनं देयम् इति प्रसक्तौ जातायां क्षीरं नवनीतमपि आर्थिकदृष्ट्या दर्शनीयमिति प्रवृत्तिः जनेषु प्रवृद्धा।'

'गोमांससेवनं न कर्तव्यम् इति सम्प्रदायः केषुचित् मुसलमानराजेषु अपि आसीत्। किन्तु ब्रिटिशकालागमनानन्तरम् एव गोमांसभक्षणम् अधिकम् अभवत्। स्वदेशे आहाराभावम् अनुभवन्तः ते शुष्कं गोमांसम् एतद्देशात् तत्र प्रेषयितुम् आरब्धवन्तः। केषुचित् प्रदेशेषु तृणानां क्षामे प्राप्ते कृषकाः सहजतया गाः विक्रीणते स्म। तदा

गोमांसं संगृह्य प्रेषकाः प्रतिनिधयः किञ्चित् अधिकमेव मूल्यं दत्त्वा गाः क्रेतुं प्रवृत्ताः । अजानन्तः कृषकाः सौनिकेभ्यः स्वगृहस्य गोमातरं विक्रीतवन्तः । केषाञ्चित् नगराणां वध्यशालासु गोवधस्य निषेधेऽपि नगरसभानां केचन हिन्दुसदस्याः एव गोमांसवणिग्भ्यः लञ्चम् आस्वाद्य नीतिं शिथिलां कृतवन्तः सन्ति । तत् अद्यापि प्रवर्तमानम् अस्ति ।

हे गोमातुः पुत्राः, पुत्र्यः ! गोहत्या भवतां ग्रामे प्रवृत्ता न स्यात् । किन्तु भवतां ग्रामस्य गवां हननम् अन्यस्मिन् ग्रामे प्रवर्तमानम् अस्ति । मुम्बयीनगरस्य एकस्यामेव वध्यशालायां प्रतिदिनं द्विसहस्रं गाः हत्वा मांसार्थं विक्रेतुं प्रेषयन्ति । कल्कत्तायां सार्धद्विसहस्रतः अपि अधिकाः वधाः भवन्ति । कानपुरे दिने सार्धैकसहस्रं गावः कण्ठं छित्त्वा हन्यन्ते । इतोऽपि अनेकेषु नगरेषु एतत् हननकाण्डं प्रतिदिनमपि प्रवर्तते । पुरा ब्रिटिश्काले केचन हिन्दुनृपाः स्वसंस्थानेषु गोवधं निषेधितवन्तः । किन्तु इदानीं स्वतन्त्रताप्राप्तेः अनन्तरम् एतत्संस्थानस्तरे अपि विधिः दुर्बलः जातः ।'

वेङ्कटरमणस्य मनः इदानीं चतुर्दिनेषु काळिङ्गस्य फार्म्स्थले प्रवृत्तं गोवधं स्मरति । काळेनपल्ल्यां स्वेन विषये ज्ञाते तत्क्षणं काळिङ्गम् उद्दिश्य रक्षिभटेषु आपादनं देयम् इति स्वमनसि उदितम् आसीत् । किन्तु विधेः अयं भागः स्वेन अज्ञातः आसीत् । 'सर्वकारः काळिङ्गस्य अनुकूलः एव वर्तते । एषः कीदृशः सर्वकारः ? कीदृशोऽयं विधिः ?' इति वेङ्कटरमणः मनसि एव तप्तः आसीत् ।

भाषणकारः वदन् एव आसीत् – 'एतं धर्मविरुद्धं व्यापारं भक्षणं चापि प्रतिरोद्धुम् 'अखिलभारतगोरक्षणासमितिः' इति महासङ्घः अस्माभिः रचितः अस्ति । समग्रदेश-जनेभ्यः नाम कनिष्ठपक्षेण विंशतिकोटिजनेभ्यः अपि तावत् 'गोहत्या निषेद्धव्या' इति हस्ताङ्कनं संगृह्य, तत् सर्वम् अग्रिमगोकुलाष्टमीदिने देहल्यां शोभायात्रया नीत्वा राष्ट्राध्यक्षाय समर्पयितुं कृतनिश्चयाः स्मः । अनेन क्रमेण सर्वकारः गोहत्यां न निषिद्ध्यति चेत् अग्रे उग्रम् आन्दोलनं प्रारभामहे । सद्यः एव अस्माकं स्वयंसेवकाः भवतां गृहम् आगच्छन्ति । तदा तैः आनीयमानेषु पुस्तकेषु भवन्तः भवद्गृहसदस्याश्च हस्ताङ्कनं कुर्युः । किञ्च भवतां वीथिकायाः, ग्रामस्य समन्ततः ग्रामाणां प्रत्येकेन प्राप्तवयस्केन हस्ताङ्कनं कारणीयम् इति प्रार्थये । अस्माकं सहकारेच्छवः अधुना एव स्वनाम सङ्केतान् अस्यां सभायां विद्यमानेषु कुत्रापि स्वयंसेवकेषु निवेदयन्तु इति प्रार्थना । जय जय भारतमातः । जय जय गोमातः ।'

तस्य भाषणसमाप्त्यनन्तरम् अपि सभा शान्ता एव उपविष्टा आसीत् । वेङ्कटरमणः

एकवारं सभां सम्यक् अवलोकितवान्। समन्तात् सङ्गतानां जनानां मध्ये व्यवस्थिततया केचन स्वयंसेवकाः उपविष्टाः आसन्। काखिवस्त्रस्य अर्धोरुकम्, श्वेतयुतकं, शिरसि कृष्णवर्णां टोपिकां धृतवत्सु तेषु बालकाः अपि आसन्। तरुणाः अपि आसन्। वेङ्कटरमणस्य राष्ट्रियस्वयंसेवकसङ्घस्य परिचयः नासीत्। किन्तु सायङ्काले केषुचित् प्राङ्गणेषु तेषां व्यायामकरणम्, देशभक्तिगीतगानं च मैसूरुनगरे सः दृष्टवान् आसीत्। संस्कृतश्लोकानां तैः शुद्धतया समूहेन पठनं तस्मै अतीव रोचते स्म। अस्य सङ्घस्य स्थापकानां नामानि, मुख्यानां नामानि च स्वेन पठ्यमानासु आङ्ग्लपत्रिकासु कदापि आगतानि पठित्वा ज्ञातवान् आसीत्।

सः पृष्ठतः परावृत्य अपश्यत्। सभायाः बहिर्वलये अपि केचन स्वयंसेवकाः अनुशासनेन स्थिताः आसन्। तस्य शकटवेला सन्निहिता आसीत्। मन्दं शब्दम् अकुर्वाणः इव ततः गत्वा सभातः बहिः आगत्य कस्यचन बालकस्य अधीने स्थिते पुस्तके स्वनामसङ्केतौ विलिख्य 'हस्ताङ्कनसंग्रहाय अस्मद्ग्रामागमनावसरे अस्मद्गृहम् आगच्छन्तु' इति उक्त्वा ततः वस्तुविक्रयमालं गतः।

## 2

तदनन्तरे द्वितीये एव दिने उभौ बालकौ तस्य गृहम् आगतौ। इतोऽपि सप्तदशाष्टादश-वयस्कौ तौ उभावपि प्रौढशालाच्छात्रौ इति ज्ञातम्। काखि-अर्धोरुकं श्वेतं युतकं कटौ कटिपट्टं च धृतवन्तौ तौ तालूकुकेन्द्रतः तत्र पद्भ्यामेव आगतौ आस्ताम्। 'लोकयानम् अस्ति खलु' इति वेङ्कटरमणेन उक्ते 'अस्माकं गोरक्षणासमितौ धनं न वर्तते महोदय ! समितिजनाः एतत् पुस्तकं निःशुल्कं वितरन्ति। स्वयंसेवकाः तेषां प्रवासव्ययं स्वयमेव वहेयुः' इति तौ उक्तवन्तौ।

'भवन्तौ निर्धनबालकौ किमु ?'

'निर्धनौ तावन्न महोदय ! क्षेत्रं केदारं गृहं सर्वम् अस्ति आवयोः पित्रोः। किन्तु एतादृशं कार्यं यथासाध्यं दैहिकश्रमेण कार्यम् इति समितिस्थाः उक्तवन्तः सन्ति।'

वेङ्कटरमणस्य एतस्य वचनस्य श्रवणेन सन्तोषः अभवत्। तस्य माता बालकाभ्यां भोजनं परिवेषितवती। एतस्य पुस्तकस्य प्रथमं हस्ताङ्कनं काळेनपल्लीतः एव प्रारम्भणीयम्, तत्रापि तायव्वया एव भवेत् इति तस्य मनसा अभीष्टम्। बालकौ सहैव

नीत्वा सः काळेनपल्लीं गतः ।

तायव्वा गृहे एव आसीत् । एतेषां गमनावसरे गृहस्य पुरतः छदेः अधः उपविश्य एकं बृहत्कलशं मार्जयन्ती सा तीक्ष्णेन केनचित् रोगेण गृहीता इव दृष्टा । इतः षड्भ्यः दिनेभ्यः पूर्वं काळिङ्गगृहस्य गोहत्यावसरे दृष्टा सा कुशलिनी एव आसीत् । अधुना किमेवं संवृत्ता ?

'किमम्ब, कुशलिनी नासि किम् ?'

अन्तः आगमनाय आमन्त्र्य सा एतेषां त्रयाणामपि पाणिपीठं वितीर्णवती । अन्तः गत्वा क्षीरं शृत्वा तत्र घृतं गुडं च संयोज्य सर्वेषां पुरतः एकैकं बृहच्चषकं संस्थाप्य स्थिता।

'कुतः एवं जाता ?' वेङ्कटरमणः पुनरपि अपृच्छत् । किमपि न जातमितीव सा हस्तेन संज्ञापितवती ।

'गृहे येन न भवितव्यं तत्तु संवृत्तम् । तथापि समाधानं प्राप्नुहि । अग्रे एवं न भवेत् । सर्वकारेणैव गोहत्या निषेधाय विधेयकम् आनेतुम् एतत् पुस्तकम् आनीतवन्तौ एतौ बालकौ । एतस्य उपरि भवत्याः वामाङ्गुष्ठं नोदय ।'

तायव्वायाः अङ्गुष्ठे वेङ्कटरमणः मसीं विलिप्य नोदितवान् । तस्य पार्श्वे, 'काळेन-पल्ल्याः गोष्ठयजमानस्य काळिङ्गगौडज्जस्य स्नुषायाः तायव्वायाः वामाङ्गुष्ठचिह्नस्य शालाशिक्षकस्य वेङ्कटरमणशास्त्रिणः लिपिः' इति अलिखत् । ततः बालकाभ्यां सह ग्रामस्य सर्वाणि गृहाणि गतः । स्वेन तालूकुकेन्द्रे श्रुतं भाषणं विवृतवान् । ग्रामीणाः सर्वे अधुना विजयलहर्याम् आसन् । ते एव वेङ्कटरमणाय वार्ता प्रेषणीया इति चिन्तयन्तः आसन् । काळिङ्गात् सन्दापितम् एकसहस्रं दण्डरूपं धनं वेङ्कटेगौडस्य आधीन्ये आसीत् । तेन किं करणीयम् इति ग्रामसमुदायेन निर्णेतव्यम् आसीत् । एतद्विषये किञ्चित्प्रमाणेन चर्चा अपि अभवत् । देवस्थानस्य निर्माणावसरे संवृत्तं विहाय पुनः तत्र यात्रोत्सवः नाभूत् । इदानीं कथञ्चित् अपि कल्याणी स्वतन्त्रा जाता । अग्रिमसङ्क्रान्तौ काळिङ्गस्य क्षेत्रवृतेः अस्मिन् पार्श्वे एकः यात्रोत्सवः सङ्घटनीयः । एतेन साकम् इतोऽपि यत्किञ्चित् धनं सङ्ग्रहणीयम् इति च निर्णयः अभवत् । तावता एव ग्रामस्य प्रत्येकं प्रौढाः, महिलाः, पुरुषाः इति भेदं विना पुस्तके अङ्गुष्ठं नुत्तवन्तः, अथवा हस्ताङ्कनं कृतवन्तः आसन् ।

उभौ अपि बालकौ वेङ्कटरमणः अष्ट दिनानि यावत् स्वगृहे वासितवान् । सोऽपि

शालाविरामं स्वीकृतवान् । तस्य कथमपि द्विचक्रिका आसीदेव । अन्यस्य शिक्षकस्य द्विचक्रिकामेकां ताभ्यां दापितवान् । तौ उभावपि युगलचालनं कुरुतः । प्रतिदिनं प्रातः पूजां समाप्य ग्रामान् गच्छन्ति स्म । अष्टसु दिनेषु त्रयः अपि सङ्गत्य समन्ततः षष्टिग्रामान् सञ्चरितवन्तः । संहत्य सार्धत्रयोविंशतिसहस्रहस्ताङ्कनानां सङ्ग्रहः अभवत् । ते सर्वे एतस्य पौरोहित्यग्रामाः । इदानीं त्रिचतुरवर्षेभ्यः सः पौरोहित्यार्थं न गच्छति । तथापि तेषां सर्वेषामपि अयं परिचितः । केचन एतेन उक्ते तत्क्षणं हस्ताङ्कनं कुर्वन्ति । अन्ये केचन हस्ताङ्कनम् इत्यनेन भीताः । 'पश्यन्तु, एतादृशाः तादृशाः कृतवन्तः । न किमपि भयं वर्तते' इति सः तान् तदुद्देश्यं विवृणोति । किन्तु काङ्ग्रेस्प्रभाववन्तः केचन ग्रामीणाः नामाङ्कनं न कुर्वन्ति । 'नेहरुवर्येण उक्तं किं हस्ताङ्कनं कुर्वन्तु इति ?' इति पृच्छन्ति ।

'गोहत्या निषेद्धव्या इति मनः कृतं चेत् नेहरुः विधेयकं कर्तुं शक्नुयात् । तेन न कृतम् एतावत्पर्यन्तम् । अतः वयम् एव हस्ताङ्कनसङ्ग्रहं कुर्मः' इति बालकौ वदतः ।

'तर्हि भवन्तः नेहरुसर्वकारस्य विरुद्धं कार्यं कुरुतः इति भवति ।'

'गोहत्या निषेद्धव्या इति वचनं सर्वकारस्य विरुद्धं कथं भवेत् ? जनानाम् इष्टम् एवम् अस्ति । तदनुसृत्य कुर्वन्तु इति सर्वकारीयेभ्यः प्रदर्शयितुम् एतत् क्रियते । एतत् न कस्यापि विरुद्धम् अस्ति' इति वेङ्कटरमणः वदति । तेषु केचन अभ्युपगम्य हस्ताङ्कनं कुर्वन्ति । अन्ये केचन एतेषां मुखभङ्गं कुर्वन्तः इव सम्भाष्य प्रेषयन्ति ।

परन्तु अन्ततो गत्वा एतेषाम् अष्टदिनानाम् अटनं निष्फलं नाभूत् । पुस्तकानि हस्ताङ्कनैः पूर्णानि अभवन् । वेङ्कटरमणेन यानशुल्कं दीयमानम् अनङ्गीकृत्य बालकौ पद्भ्यामेव ताल्लूकुकेन्द्रं गतौ ।

## 3

बालकयोः गमनात् चतुर्थे दिने वेङ्कटरमणम् उद्दिश्य परिवीक्षककार्यालयात् एका सूचना अधिगता – 'स्वकार्यम् इति शालातः विरामं स्वीकृत्य, भवान् राजनैतिकपक्षस्य कार्ये भागं गृहीतवान् इति अधिगतम् अस्ति । सर्वकारोद्योगी भवान् विधिविरुद्धम् एतत् कार्यं कृतवान् इति युक्तं दण्डनं किमर्थं न विधेयम् – इत्यस्य एतत्सूचनाधिगमनात् तत्क्षणं भवतः समाधानं लिखितरूपेण देयम्' इति ।

सूचना मुख्याध्यापकद्वारा अधिगता । किन्तु मुख्याध्यापकेन एतद्विषये न कोऽपि क्रमविधिः विहितः आसीत् । परम्परासु श्रद्धावान् सः वेङ्कटरमणस्य कार्ये श्लाघनं व्यक्तीकृतवान् । इदानीं सः अवदत् – 'हस्ताङ्कनसङ्ग्रहार्थं साहाय्यकरणं येन केनापि करणीयं सामान्यकार्यम् । केवलम् एतदर्थं किमपि न कृतम् । येन केनापि बुद्धिपूर्वकः उपद्व्यापः कृतः स्यात् '।

'अधुना परिवीक्षकाय किमिति उत्तरं देयम् ?'

'न मया किमपि अपराद्धम् । अज्ञात्वा कृतश्चेत् क्षमा विधेया इति निवेदयतु ।'

तदेव युक्तम् इति वेङ्कटरमणः उत्तरं लेखितुम् उपविष्टः । तेनैव अज्ञेयरीत्या लेखनी अन्यरीत्या आकृष्य गता – 'स्वकार्यम् इति विरामस्वीकारः यथार्थः । गोहत्यानिषधार्थं हस्ताङ्कनसङ्ग्रहकार्ये मया सहकारः कृतः । किन्तु तत् न कस्यापि राजनैतिकपक्षस्य कार्यम् । अस्याः पवित्रभूमेः प्रत्येकं पुत्रस्य कर्तव्यमपि तदेव । न कोऽपि अपराधः मया कृतोऽस्ति । अतः मदर्थं दण्डविधानस्य प्रश्नः एव नोदेति' इति तेन लिखितं दृष्ट्वा मुख्याध्यापकः – 'एषा शैली न समीचीना । न किमपि कृतवानहम् इति लिखतु । भवतः गृहे श्राद्धो वा पाद्धो वा आसीत् । अतः विरामः स्वीकृतः इति वदतु । आवश्यकं चेत् अहमपि तथैव साक्ष्यं वदामि' इत्यवदत् ।

वेङ्कटरमणः अर्धघण्टां यावत् आलोचितवान् । अष्टसु दिनेषु ग्रामान् सञ्चार्य कृतेन कर्मणा तस्य नैतिकतृप्तिः प्राप्ता आसीत् । तत् स्वेन न कृतमेव इति पलायनं तस्य आन्तर्येण विरोधितम् अभवत् । 'नहि महोदय, अहम् एवमेव लिखामि' इत्युक्त्वा तदेव मुख्याध्यापकद्वारा उपरिष्टात् प्रेषितवान् ।

तस्मात् षष्ठे दिने तेन एकः आदेशः प्राप्तः । सर्वकारोद्योगिनः एतादृशे जातीयकर्मणि भागग्रहणेन उच्चाधिकारिभिः तस्मै तीव्रं प्रबोधनं दत्तम् आसीत् । एतत् प्रबोधनं तस्य सेवोल्लेख्ये (सर्विस् रिजिष्टर्) योजितम् आसीत् । अन्यच्च इदानीं कृताय अपराधाय ततः शतमैल्दूरे स्थितायै अन्यजनपदशालायै तस्य स्थानान्तरं कल्पितम् आसीत् । एतस्य आदेशस्य प्राप्तिसमनन्तरमेव सः प्रभारं दत्त्वा, ततो मुक्तिं प्राप्य नूतनशालां प्रविष्टः भवेत् इति लिखितम् । अपि च तत्क्षणं तस्य मोचनं कर्तव्यम् इति मुख्याध्यापकाय निदेशः अपि दत्तः आसीत् ।

तत्क्षणं किमपि यानं न प्राप्तम् इति वेङ्कटरमणः द्विचक्रिकाम् आरुह्य तालूकुकेन्द्रं गतः । एतं दृष्ट्वा तत्क्षणं परिवीक्षकः उच्चैः उद्विज्य अवदत् – 'कथमपि स्थलीयः

इति भवतः ग्रामे एव नियुक्तश्चेत् राजकीयं कर्तुम् आरब्धं किम् ? वराकः यथास्थापितः तथा तिष्ठेत् इति आभाणकम् अनुसृत्य तूष्णीं स्थातुं न शक्यते किं भवता ?'

वेङ्कटरमणः सावधानं तस्मै सर्वमपि विवृतवान् । गोमहिमपरान् कियतोऽपि मन्त्रान् पठित्वा, स्वेन न किमपि राजकीयं कृत्यं कृतमिति वादम् उपस्थापितवान् । एतस्य संस्कृतज्ञानं पश्यतः परिवीक्षकस्य आश्चर्येण साकं गौरवम् अपि उदभूत् । सः एव सहानुभूत्या अवदत् – 'पश्यतु, एषः आदेशः न केवलं जिल्लास्तरतः प्राप्तः । इतोऽपि उपरिष्टात् प्राप्तः । अस्माभिः किमपि क्रियते चेदपि स्थानान्तरादेशः अपास्तः न भवत्येव । भवान् नूतनग्रामं गत्वा द्वित्रवर्षाणि तिष्ठतु । तावता सर्वं पुरातनं भवति । ततः पुनः अत्रैव देशे कारयितुं शक्यते ।'

एतावत् उक्त्वा स गृहं गतः । वेङ्कटरमणः पुनः द्विचक्रिकाम् आरुह्य ग्रामाभिमुखं चालितवान् । एतत् केन कारितं स्यात् ? काळिङ्गस्य कृत्यं किम् ? इति मनः शङ्कितम् । किन्तु तत् तस्य अन्तरात्मना कुतोऽपि न विश्वसितम् । ग्रामेषु तेन सह वादं कृतवतां काङ्ग्रेस्जनानां कृत्यं स्यात् किम् ? इत्ययं प्रश्नः अपि उदितः । किन्तु एतदेव यथार्थम् इति वक्तुं तेन न कोऽपि आधारः प्राप्तः आसीत् । एतद्विषये चिन्तनापेक्षया सद्यःकालिक–समस्यापरिहारे मनः संसक्तम् । वर्षद्वयं बहिः गच्छति चेदपि देवस्थानस्य पूजायाः का गतिः ? गौडज्जः तस्य समस्तविश्वासेन पूजायाः भारं स्वस्मिन् न्यस्य, जीवनस्य बाधकं माभूत् इति उदरपूरं भक्षयितुं पर्याप्तां दत्तिं गां च दत्त्वा गतः । इदानीं पूजायाः एव अन्तरायश्चेत् !'

यथास्थितस्यैव तस्य एकः निर्णयः भासितः । मम एतदुद्योगस्य स्वीकारः एव अयुक्तः । मनुष्यस्य आशायाः मितिरेव नास्ति । यावतीभ्यः दिशाभ्यः प्राप्तश्चेदपि इतोऽपि आगच्छतु इति चिन्त्यते । मम कार्यं तु पूजनम् । कुटुम्बनिर्वहणदायित्वं देवस्थानस्य निर्माता पुण्यात्मा एव निरूढवान् । शालासमयः सन्निहितः इति त्वरां विहाय इतःपरं प्रतिदिनं सावकाशं सहस्रनाम पठित्वा पूजां करोमि । एतस्मै हतोद्योगाय त्यागपत्रं ददामि ।

अयं निर्णयः एव स्थिरः अतिष्ठत् । गृहम् आगत्य उक्ता तस्य माता तदेव वरम् इत्यवदत् । किन्तु पत्नी मीनाक्षी विवेकम् अवदत् – 'पूजार्थं यं कमपि वर्षद्वयं यावत् नियोक्तुं न शक्यते किम् ?'

किन्तु सः तस्याः लौकिकं न अभ्युपगतवान् । अनन्तरदिने प्रातः उत्थाय त्यागपत्रं लिखितवान् । तत्रैव स्वेन कृतं कृत्यं पुनरपि समर्थितवान् । एतादृशपवित्रकार्याणां

प्रतिरोधकं सर्वकारं दूषयित्वा स्वत्यागपत्रं स्वीकार्यम् इति लिखित्वा नामाङ्कनं कृतवान् । तद्दिने पूजार्थं गतः तत् पत्रं देवस्य पादसमीपे संस्थाप्य, अनन्तरम् आनीय मुख्याध्यापकहस्ते दत्तवान् । तेन यावदुक्तेऽपि न प्रतिस्वीकृतवान् ।

## 4

अनन्तरदिनात् पूजार्थं गतेन तेन देवस्थाने घण्टाद्वयात् अधिकः कालः नीयते स्म । कस्मिंश्चिद्दिने कामपि उपनिषदं, सूक्तं वा नीत्वा पूजानन्तरम् उच्चैः पठति स्म । इदानीं कल्याण्याः पम्प्शब्दः नास्ति । अधस्तनफार्म्स्थलेऽपि ट्र्याक्टर्शब्दः नास्ति । वृक्षेषु चटकाः, कपोताः, शुकाश्च क्रीडन्तः सम्भाषन्ते स्म । तस्मिन् परिसरे इतोऽपि पठितव्यम् इति आशा जायते चेत् सः तानेव मन्त्रान् पुनःपुनः उच्चैः पठति स्म । शालानियोजनादारभ्य मन्त्राणां कण्ठपाठकरणेन स्वाध्यायसुखं न अनुभूतम् आसीत् । इदानीं काचित् आत्मतृप्तिः प्राप्ता ।

मध्याह्ने गृहे विरागः भवति चेत् सः एव गाः प्रचोद्य क्षेत्राभिमुखं गच्छति । अञ्चले स्थूणां निवेश्य चरणार्थं दीर्घां रज्जुं परिकल्प्य रागेण श्लोकान् पठितुम् आरभते चेत् गावः अपि शृण्वन्ति स्म । अधुना काळिङ्गः, तस्य फार्म्, अन्ततः काळेनपल्ली अपि तस्य स्मृतौ नागच्छन्ति ।

किन्तु कस्मिंश्चित् मध्याह्नोत्तरे सः क्षेत्रस्य अञ्चले गाः चारयन् यदा उपविष्टः असीत् तदा काळेनपल्लीतः वेङ्कटेगौडः अन्ये त्रयः मुख्याश्च तम् अन्विष्यन्तः आगताः । तेषां सर्वेषाम् अपि मुखं म्लानम् आसीत् । शिरस्तः उष्णीषम् अधः संस्थाप्य उपवेशनानन्तरं वेङ्कटेगौडः भाषितुं प्रारब्धवान् – 'ह्यस्तनरात्रेः वार्ता श्रुता किम् ?'

'का ?'

'अस्मद्ग्रामं रक्षिभटाः आगताः आसन् ।'

'कुतः ?'

'कुतः इति अनन्तरं वदामि । संहत्य चतुःसहस्ररूप्यकाणि नीतानि ।'

वेङ्कटरमणस्य आश्चर्यम् अभवत् । तद्विषये किमपि अजानतोऽपि एतस्य पृष्ठभूमिका तस्य अन्तःप्रज्ञायां झटिति भासिता अभवत् । वेङ्कटगौडः विवृतवान् –

ह्यः रात्रौ दशवादने रक्षिभटानां यानमेव आगतमिति, इन्स्पेक्टर् दश रक्षिभटाश्च भुषुण्डिकासहिताः आसन् इति च ज्ञातम् । ग्रामस्य मुख्यान् सर्वान् नामग्रहणेन सन्दिश्य सङ्गतान् सम्मेल्य 'ग्रामीणाः सर्वे आक्रमणेन काळिङ्गगौडानां फार्म्मध्ये धूमक्षुपान् नष्टान् कृतवन्तः सन्ति खलु ? धूमक्षुपाणां विशेषकरं ते ददति । अस्मिन् वर्षे प्राप्स्यमाणः आयः नष्टः जातः । भवतां विषये उपरिष्टात् आदेशः प्राप्तः अस्ति । सर्वकारस्य धनं भवन्तः ददति किम् ? अथवा भण्डचेष्टां कुर्वन्ति ?' इति तैः पृष्टम् इति ।

'भवत्सु सः काळिङ्गः आपादनं निवेदितवान् किम् ?' एते अपृच्छन् ।

'ते किमपि नापादितवन्तः । किन्तु न्यासभूतस्य स्वस्य पालनं सर्वकारस्य दायित्वम् । सर्वकारस्य विभागे तेषां व्यवहारः अस्ति । तत् किमपि बालचेष्टितम् इति मा भावयन्तु' इत्युक्त्वा 'सर्वेषां हस्ते बन्धिकां संयोज्य कारागृहं नयाम' इति बन्धिकाः बहिः उद्गृहीतवन्तः इति । ग्रामीणानाम् अन्यः मार्गः नासीत् । आहत्य द्विसहस्रं दीयते इति स्वेषु क्षमा कर्तव्या इति च प्रार्थितवन्तः । ते न अभ्युपगतवन्तः । अन्ततः इतस्ततः आकृष्य सङ्कलनेन चतुःसहस्रं यावत् स्थितम् । काळिङ्गात् स्वीकृतः दण्डः एकसहस्रम् आसीत् । शिष्टं त्रयं तत्रैव सङ्गृह्य सङ्कलय्य तेभ्यः समर्प्य उन्मुक्ताः इति ।

'अन्यत् किमपि आरभ्यते चेत् चर्म निष्कास्यते, जागृत' इत्युक्त्वा रक्षिभटाः मोटर्यानं चालयित्वा रात्रौ एव प्रस्थाय गताः इति श्रुतम् ।

'काळिङ्गस्यैव कृत्यम्' वेङ्कटरमणः अवदत् ।

'तत् किं मुखतः पुनर्वक्तव्यम् ? अद्य प्रातः सः यानेन ताल्लूकुकेन्द्रं गतः इति । एवम् उक्तमस्ति तस्य गोष्ठभृत्येन पुट्टेन' वेङ्कटेगौडः अब्रवीत् ।

'एकं कार्यं कुर्वन्तु । अहमपि आगमिष्यामि । अद्य सायम् उत श्वः प्रातः वयं सर्वे गत्वा तमेव अस्मिन् विषये पृच्छाम, आगच्छन्तु ।'

'मास्तु । तस्य चोरस्य मद्रासीपुत्रस्य सहवासः एव मास्तु' इति चत्वारोऽपि जनाः हस्तं चालितवन्तः । काळिङ्गस्य विषये तेषां भयम् उदितम् आसीत् । तत् निवारयितुं वेङ्कटरमणेन कियत्यपि उक्तेऽपि सार्थकं नाभूत् ।

'तस्य गृहं नष्टं भवतु । वंशः निर्वंशः भवतु । सः दासीपुत्रः किमपि करोतु । इतःपरं तस्य अस्माकं च मध्ये व्यवहारः एव मास्तु । किमपि भाषितमपि मास्तु । तस्य पापं सः

एव भुक्त्वा हतो भवतु' इति शापेन तैः वचनं समापितम् ।

तस्य प्रस्थानावसरे वेङ्कटरमणः अपृच्छत् – 'तायव्वा कथमस्ति ?'

'ओ, सा वृद्धा म्रियते ?'

'कुतः ? किं जातम् ?'

'अन्यत् किं भवेत् ? तस्याः श्वश्रूः कुतः मृता, न ज्ञातं किम् ? गौडज्जः कुतः मृतः किं न ज्ञायते ? एषा अपि एवमेव म्रियते ।'

'अहं सद्यः पञ्चदशदिनेषु आगतः, तदा एव पाण्डुत्वम् आपन्ना रोगेण शयिता इव आसीत् । सद्यःकाले अहं नागतः एव ।'

'इदानीम् इतोऽपि मरणासन्ना अस्ति । भवानेव आगत्य पश्यतु ।'

श्वः मध्याह्ने काळेनपल्लीं गत्वा तायव्वा द्रष्टव्या । स्वस्य मातरमपि नयेयम् इति वेङ्कटरमणेन निर्धारितम् ।

## 5

अनन्तरदिने देवस्थानं गतः सः तदा काळिङ्गस्य फार्म्दिशम् अपश्यत् । अद्यावधि सः तां दिशं सम्यग् परावर्त्य न दृष्टवानेव । काळिङ्गं दृष्ट्वा तेन सह सम्भाषितव्यम् इति ह्यः रात्रितः अलोचयन्नासीत् । पूजार्थं पञ्चषाः जनाः भक्ताः आगताः आसन् । तेभ्यः सर्वेभ्यः अपि तीर्थं प्रसादं च वितीर्य, तेषां नारिकेलं, कदलीफलं तण्डुलांश्च देवाय समर्प्य, प्रसादशेषं देवस्थाने एव संस्थाप्य तालिकाबन्धनं विधाय कल्याणीपार्श्वतः अवतीर्णः । फार्म्गृहस्य दक्षिणभागे नूतनतया कूपः खन्यमानः अस्ति इव अभासत । समग्रे फार्म्स्थले अत्र तत्र लग्नान् अवशिष्टान् विहाय उत्मूलिताः बालधूमक्षुपाः इदानीं भ्रष्टाः शुष्कतां प्राप्ताः ।

एतस्मिन् द्वारं गते हिल्डा अन्तर्भागस्य सोफायाः उपरि उपविष्टा आसीत् । किन्तु एतं न सम्भाषितवती । एतेन एव 'काळिङ्गः न वर्तते किम् ?' इति पृष्टे 'एतद् गृहं किमर्थं पुनः आगतोऽस्ति ? भवतः लज्जा नास्ति किम् ?' इत्यवदत् । वेङ्कटरमणः एतेन वचनेन एकं निमेषं स्तम्भीभूतः अभवत् । सः प्रतिनिवृत्य गन्तुं प्रस्थितः ।

तावता अन्तः प्रकोष्ठतः आगतः काळिङ्गः 'अन्तः आगच्छतु, उपविशतु' इति

आमन्त्रितवान्। 'अस्तु, चिन्ता मास्तु' इति एतेन तत्रैव स्थिते सः एव, 'मा चिन्तयतु। आगच्छतु। तया कोपेन उक्तमस्ति' इत्यवदत्।

वेङ्कटरमणः अन्तः आगतः। हिल्डा उत्थाय, अन्तः प्रकोष्ठं गत्वा द्वारं पिहितवती। कालिङ्गः सोफायाः उपरि उपविष्टः। काष्ठासन्दे वेङ्कटरमणः उपविष्टः। पञ्चनिमेषं यावत् उपवेशनेनापि कस्यापि किं भाषितव्यम् इति न भासितम्। अन्ततः कालिङ्गः एव अपृच्छत् – 'का वार्ता ?'

'पश्य, तव सकाशे कश्चन विषयः भाषितव्यः इत्यागतोऽस्मि। तव हितैषी सन् वदामि। मयि त्वम् अनावृततया भाषेथाः।'

'किं, वद।'

'परह्यः रात्रौ ग्रामं पोलीस् इन्स्पेक्टर्, दश रक्षिभटाश्च आगताः इति श्रुतम्। सर्वान् तर्जयित्वा चतुःसहस्ररूप्यकाणि नीतवन्तः इति। किमिदं सर्वम् ?'

'कः विषयः ? मया न ज्ञातः एव खलु ?'

'असत्यं मा वद। तव हिताय एव वदामि। सत्यं वद। तव उत्तेजनेन विना तेषां तथा आगमनं न शक्यते एव।'

एकनिमेषं स्वात्मनि एव उत्तरं सज्जीकुर्वन्निव कालिङ्गः भासते स्म। अनन्तरम् अवदत् – 'पश्य, त्वया व्यवहारविषयः सर्वः न ज्ञायते। शास्त्रसम्बन्धज्ञानमात्रेण व्यवहारः न ज्ञायेत। तमाखोः विशेषकरः सर्वकारेण विधीयते। मम धूमक्षुपाणाम् आरोपावसरे तत् सर्वकारस्य गणने सङ्कलितम् आसीत्। इदानीं मम उत्पन्नं सर्वं नष्टं जातम्। मया करः दातुं न शक्यते इति विषयः सर्वकाराय निवेदितः। कुतः नष्टम् इति प्रश्नः स्वयमेव उदेति। तदा यथार्थविषयः निवेदनीयः एव सम्पन्नः।'

'किमपि अन्यत् कारणम् उक्त्वा ग्रामजनान् रक्षितुं त्वया न शक्यते किम् ?'

'न शक्यते किम् ?' तस्य प्रश्नम् एव एकवारं व्यङ्ग्यरूपेण स्वरघातसहितम् उच्चार्य कालिङ्गः अवदत् – 'ते मां रक्षितवन्तः इति ते मया रक्षितव्याः खलु ? एकस्यामेव रात्रौ पञ्चाशत्सहस्ररूप्यकाणां हानिं कृतवन्तः इति, तथैव मम एतावन्तम् अपमानं कृतवन्तः इति च मया सर्वकाराय असत्यम् उक्त्वा ते रक्षणीयाः, खलु ?'

'तव उत्पन्नस्य नष्टकरणं समुदायस्य उन्मत्तचेष्टितम्। तत् अयुक्तम् इति ज्येष्ठाः अभ्युपगच्छन्ति। किन्तु तव केन तावत् अपमानः कृतः ? अपराधं कृतवतां प्रायश्चित्तम्

इति धर्मशास्त्रे एव प्रतिपादितम् अस्ति । तद्वत् भवतः आनुकूल्यम् अनुसृत्य एकसहस्र-रूप्यकाणि स्वीकृतवन्तः । तदपि यस्यापि गृहस्य स्वकार्यार्थं न उपयुक्तम् आसीत् । देवस्थानस्य कार्यार्थम् एव उपयोजयेयुरपि ।'

'वेङ्कटरमण, त्वं निरर्थकशास्त्री । तव मानमर्यादायाः प्रज्ञा एव नास्ति । धर्मशास्त्रस्य नाम वदन् निर्लज्जः किमपि कर्तुं प्रवर्तसे । किमपि स्यात्, सहसे । किन्तु मम मानः गौरवं सर्वम् अस्ति ।'

'माम् एवंरीत्या वदन्नसि खलु । अहं तु तव गृहस्य भृत्यः नास्मि । तव हस्तात् भिक्षां न भक्षयन्नस्मि । काळिङ्गगौडज्जस्य पौत्रः, तथैव मम स्नेहितः इति अहं सदैव तव हितमेव कुर्वन्नस्मि । इदानीमपि वदामि शृणु । तदानीं रात्रौ एव ग्रामजनानां कोपः शान्तः अभवत् । त्वया तत्रैव तूष्णीं स्थातव्यम् आसीत् । इदानीं रक्षिभटानाम् आगमनेन ग्रामे तव विषये उत्पन्नम् असमाधानं पुनः क्षुभितम् अस्ति । तव हिताय उपदिश्य गच्छामि इति अहम् आगतः ।'

'महत् महत् भाषितं मास्तु । तूष्णीं तिष्ठ' सोफायाः उपरि धृष्टतया उपविशन् काळिङ्गः अवदत् । 'मम हस्तस्य भिक्षां न भक्षयन्नस्ति इति वक्षःस्थलम् उन्नमय्य मा वद । अद्य तव गृहे भुज्यमानं क्षेत्रं कस्यास्ति ? मम पितामहेन भिक्षारूपेण दत्तं न ?'

'तत्तु न भिक्षा । देवपूजनाय अर्पिता दत्तिः ।'

'महत् उपयोगि श्रमिकं कर्तुं भवते दत्तिं समर्पितवान् मम पितामहः ! भवतः जीवनम् अभूद्वा न वा ? तथा चेदपि मम गृहान्नं भुक्त्वापि तस्यां रात्रौ ग्रामजनैः सह किमर्थं मिलितः आसीः । त्वया मत्पक्षे तिष्ठता ते छीकारेण प्रेषणीयाः आसन् ।'

'तव अपराधे सति कथमहं त्वत्परः स्थातुं शक्नुयाम् ? देवस्य कल्याणीं तव स्वार्थाय उपयुक्तवान् । तत् मास्तु इति अहं त्वां सहस्रवारम् उक्तवान् । तस्यामेव कल्याण्यां युवां दम्पती उभावपि शरीरं निमज्य जलविहारं कृतवन्तौ । बहिष्ठापि भवेत्, अन्तःस्थापि भवेत्, तव पत्नी गत्वा कल्याण्यां तरणं कृतवती । मया सर्वापि वार्ता ज्ञाता आसीत् । अन्ते सा गोहत्यां कृतवती । एतत् सर्वं हृदये अन्तः नियम्य त्वया तया च कृतमेव युक्तम् इति भवत्परतया मेलितुं किम् अहं पुण्यकोटिदेवस्थानस्य पूजां कुर्वन्नस्मि ? मयि उपदेशं विहाय तव पत्न्यै बुद्धिम् उपदिश । सुष्ठु पत्नीं शासितुम् अभ्यस्य । प्रथमतः गृहपत्न्याः पतिर्भव ।'

अन्ते अन्ते वचनावसरे वेङ्कटरमणस्य स्वरः उद्रिक्तः भवति स्म । कण्ठस्य नाड्यः

उच्छूनाः दृश्यन्ते स्म । ध्वनिः गृहस्य वितानम् उन्नमय्य क्षिपति किम् इतिवत् तारत्वं प्राप्तः आसीत् । इदानीं काळिङ्गः स्तब्धः जातः । न्यूनान्यूनं दशनिमेषेषु न कोऽपि भाषितवान् । काळिङ्गः मनसि एव किमपि चिन्तयन्नासीत् । 'अहं गच्छामि' इत्युक्त्वा वेङ्कटरमणः उत्थितः । किन्तु काळिङ्गः एव 'एकनिमेषम् उपविश' इत्यवदत् ।

किन्तु पुनः पञ्चनिमेषेषु अपि न किमपि भाषितवान् सः । वेङ्कटरमणेन एव 'तत् किम् ? वद' इयुक्ते सः सावकाशम् अवदत् –

'पश्य, तव अन्तरायः कर्तव्यः इति न मम उद्देश्यम् । एकः विषयः विदितः भवतु । मम पितामहेन कृतं पत्रव्यवहरं सर्वम् अहं जानामि । देवस्थानस्य पूजार्थम् इति मम पितामहेन दत्तिपत्रलेखनावसरे मम वयः षड्विंशतिवर्षाणि । तदर्थं मम अनुमतिः नावेदिता । दत्तिपत्रे मम नामाङ्कनमपि नास्ति । त्वदर्थं लिखितं क्षेत्रं पित्रार्जितमस्ति । मम पितामहेन स्वकीयम् इति एकरेमितम् अपि क्षेत्रं न सम्पादितम् । अहं यदा विदेशे आसं तदा मया अज्ञातम् एव त्वं वृद्धं मम पितामहं मोहयित्वा क्षेत्रं स्वनाम्ना लेखितवान् इति अद्य एकं प्रकरणम् आपादयामि चेदपि मया विजयः लभ्यते । तथा कर्तव्यम् एव इति नास्ति मम उद्देशः । मम गृहस्य अन्नं भक्षयन्नसि इति त्वं मम कष्टे भागी भवेः । मम पुरतः एव तिरस्कारवचने, मम पत्याः एव उपालम्भे, बुद्धिवचने च तव योग्यता नास्ति । एतावत् विदितं भवतु ।'

एतद्वचनं श्रावं श्रावम् एव वेङ्कटरमणस्य शिरः भ्रमितम् इव जातम् आसीत् । काळिङ्गस्य अन्तिमवाक्यसमापनावसरे सः स्वासीनस्य आसन्दस्य पृष्ठे शिरः निधाय एकनिमेषं यावत् निश्चेष्टः जातः । काळिङ्गेन तत् किमपि न ज्ञातम् । सः वक्तव्यं वचनम् उक्त्वा तूष्णीम् उपविष्टः । द्वित्रनिमेषेषु चेतनाम् आप्तः वेङ्कटरमणः सम्यक् उपविश्य कम्पितेन ध्वनिना अवदत् – 'तव पितामहेन कृतस्य धर्मकार्यस्य अपहरणाय त्वं जातः किं पुण्यात्मा पौत्रः ? एतत् वचनं तव मुखात् निःसृतं खलु रे ! तव जीवितम् एव साक्षि । हतो भवसि त्वम् । तव वंशः निर्वंशः भविष्यति । एतत् न ममैव केवलं शापः । तव पितामहस शापः इति जानीहि । तव पितृपितामहप्रपितामहानां शापः इति जानीहि । न्यायालयं गच्छसि किम् ? त्वया मम सकाशात् किम् अपह्रियेत इत्यहं पश्यामि । गच्छ, अयोग्य, वेश्यापुत्र !'

एतावत् उक्त्वा तस्य अग्रिमवचनम् अनिरीक्ष्य उत्थाय बहिः आगतः । ततः साक्षात् देवस्थानं गत्वा, अन्तः स्थापितं प्रसादपात्रं परिगृह्य, द्वारं तालिकया पिधाय, अङ्गणे

स्थितां घण्टां वादयित्वा गिरिम् अवतीर्य साक्षात् काळेनपल्लीम् आगतः ।

वेङ्कटेगौडस्य गृहम् आगते, तस्य पुत्रः माटः अवदत् – 'पिता तायव्वागृहं गतः अस्ति' इति । वेङ्कटरमणः अपि तायव्वागृहम् आगतः । सा एकस्मिन् कटे वक्रीभूय शयिता आसीत् । शिरःस्थाने एकं काष्ठपीठम् । वेङ्कटेगौडेन सह ग्रामस्य द्वित्राः जनाः भित्तिम् आधार्य उपविश्य भाषमाणाः आसन् । वेङ्कटरमणम् आगतं दृष्टवत्या तायव्वया उत्थाय उपवेष्टुं यत्ने कृतेऽपि, कस्यापि साहाय्यं विना उत्थानं तस्याः अशक्यम् अभवत् । धृतं वस्त्रं दृष्ट्वैव वेङ्कटरमणः देवस्थानतः साक्षात् आगतः अस्ति इति सर्वे विदितवन्तः । 'हस्तं प्रक्षालयन्तु, प्रसादं दास्यामि' इत्यवदत् सः । त्रयोऽपि उत्थाय हस्तं प्रक्षालितवन्तः । पात्रात् वेङ्कटरमणः एकैकं चुलुकं गुडान्नम् आदाय दत्तवान् । 'तायव्वे, किञ्चित् मुखं व्यादेहि । देवप्रसादं वितरामि' इत्युक्ते सा व्यादत्तवती । वेङ्कटरमणः तस्याः मुखे ग्रासत्रयं प्रसादं वितीर्णवान् ।

तस्य पीठे उपवेशनानन्तरं वेङ्कटेगौडः अपृच्छत् – 'मन्दिरात् एवमेव आगतः किमु ? किं तत्र गतं वा ?'

'हूँ, गतोऽस्मि । बहु बुद्धिमत्तया भाषितवान् । ममापि जागरूकताम् अवदत् । तस्य पितामहेन दत्तिपत्रलेखनावसरे एतस्य हस्ताङ्कनं न लिखितमासीत् इति । इदानीं मया तेन उक्तमिव अनुपाल्य तेन प्रतिदिनम् एकैका गौः हता चेदपि तस्य पक्षे एव स्थित्वा समर्थनं कर्तव्यम्, न चेत् सः न्यायालये प्रकरणम् उल्लिख्य मम क्षेत्रं बलात् वशीकरोति इति च।'

'तस्य वेश्यापुत्रस्य प्रसवित्र्याः गृहं नष्टं भवेत् । पुण्यवती तस्य माता इतोऽपि जीविता अस्ति । आवश्यकं चेत् ताम् एव सह नीत्वा वयं साक्ष्यं वाचयिष्यामः । तत् कथं हठान्नयति पश्याम' इति त्रयः अपि अवदन् । आवश्यकं चेत् ग्रामीणाः सर्वेऽपि साक्ष्यार्थम् आगमिष्यामः इत्यपि आश्वासनं दत्तवन्तः ।

वेङ्कटरमणस्य मनः किञ्चिदिव समाहितम् अभवत् । तायव्वायाः आरोग्यविषये सः विचारितवान् । तस्याः सम्भूतः रोगस्तु कः ? इति पृष्टे, वेङ्कटेगौडः – 'कोऽन्यः रोगः ? तस्य पुत्रस्य प्रसूतिरेव तस्याः उदरे कश्चन रोगः । इतःपरं सा तु जीविता न भवेत् । गौडज्जस्य गौडाम्बायाः नाभवत् किम् ? तथैव एतस्याः अपि' इत्यवदत् ।

तायव्वायाः मुखं धवलतां प्राप्य शुष्कम् आसीत् । केनापि दैवेन, भूतेन वा आवाहिता इव कुत्रापि विचित्रं पश्यन्ती आसीत् । करशरीरं सर्वं शुष्कम् एरण्डकाष्ठम् इव भूत्वा

तया आच्छादितस्य छागलोम्नां श्वेतकम्बलस्य अन्तः अपि शरीरं वस्त्रमयी काचन लतिका इव दृश्यते स्म। वेङ्कटेगौडः अवदत् – 'तरक्षुणा मृतायाः गोः, पुत्रस्य कृष्णस्य च शवस्थानस्य उपरि यानमार्गगमनेन गौडज्जः गौडाम्बा च मृतौ । समाधेः उपरि मार्गे सत्यपि तायव्वा महालयपक्षस्य अमावास्यादिने तत्स्थलं गत्वा क्षीरं घृतं च अभिषिच्य आगच्छति स्म ।' काळिङ्गेन आगत्य जरासन्नानां गवां विक्रयणावसरे सा जठरान्त्रं निष्पीडितवती। गृहधेनूनां नूतनगोष्ठाय नयनानन्तरं तासां जीवितरक्षणविषये प्रतिदिनमपि आतङ्कम् अनुभवन्ती आसीत् । वत्सानां स्तन्यपानम् अकृत्वा यन्त्रेण पूर्णस्य क्षीरस्य दोहनवर्णने भृत्यैः कृते अश्रु पातयति स्म। किन्तु सा निरुपाया। पुत्रं निवारयितुं, स्नुषायाः बुद्धिम् उपदेष्टुं वा तस्याः कः अधिकारः आसीत् ? तत् सर्वं कथमपि सोढवती आसीत् । स्वस्य हतः जीवः न गच्छेत् किमु ? एतत् द्रष्टुं न शक्नोमि इति बहुवारं स्वस्य मूकमनसि अन्तरेव वदन्ती जीविता आसीत् । किन्तु स्नुषापुत्राभ्यां गोहत्या अपि घटिता । वंशस्य आधारभूतस्य पुण्यकोटेः सन्तानस्य हननमेव जातम् इति श्रवणेन सा उन्मत्ता जाता आसीत् । ग्रामीणैः सर्वैः सह गत्वा कृतपापानां दण्डं विधाय आगता । किन्तु ग्रामस्य इतरे तां घटनां तत्रैव विस्मरेयुः । तायव्वा कथं विस्मरेत् ? अन्यच्च रक्षिभटाः आगत्य ग्रामजनेभ्यः चतुःसहस्ररूप्यकाणि बलात् प्रतिगृह्य गताः इत्यपि तया ज्ञातम् अभवत् ।

वेङ्कटेगौडः अवदत् – 'तस्याः जीवितेच्छा एव न विद्यते । पश्यतु, इतःपरं देहक्षेपणम् एकमेव अवशिष्टम् । पन्थानं पश्यन्ती अस्ति ।'

तावदेव तायव्वा कामपि संज्ञां कृतवती । भुजे बलं नासीदिति तस्याः हस्तचालनं स्पष्टं नासीत् । मुखे स्थितः भावः अपि हस्तेन दर्शितस्य अर्थस्य पर्याप्ततया पूरकः नासीत् । किन्तु वेङ्कटेगौडेन एव तस्याः अभिप्रायम् उक्त्वा, 'क्षेत्रं सः कथं वा हरेत् इति पश्याम । न्यायालयमेव गच्छतु । अहम् आगच्छामि – इति वदति ? किं न अम्ब ?' इति पृष्टे सा 'हूँ' इतिवत् मुखं चालितवती ।

'तायव्वे, एतदर्थं त्वं जीवितं न त्यजेः । मनुष्यः जीवितः एव सर्वमपि अनुभवेत् । तव अत्र स्थातुं इच्छा न भवति चेत् अस्मद्ग्रामम् आगच्छ । नो चेत् देवस्थानम् आगत्य प्रतिदिनं संमार्ज्य, शुद्धिं विधाय देवसेवां कुर्वती तिष्ठ' इति समाधाय वेङ्कटरमणः ग्रामं प्रस्थितः ।

तस्य गृहप्राप्त्यवसरे एव मध्याह्नस्य एकवादनम् अभवत् । इतोऽपि उपवासेन स्थितायाः मातुः हस्ते चुलुकप्रसादसहितं पात्रं दत्त्वा, भोजनायापि अनुपविशन् तथैव श्यानुभोगस्य

गृहम् अगच्छत् । एतावत्पर्यन्तं संवृत्ता घटना तेन ज्ञाता आसीत् । अद्य संवृत्तेषु संवादालापेषु वेङ्कटरमणेन गदितेषु सः अवदत् – 'तस्य हस्ताङ्कनं तु भवेदेव । तथापि गौडज्जेन कृतं दानकर्म । अन्याय्येन न किमपि नष्टम् । न्यायालयः गम्यते चेत् पत्रं विलिख्य, 'बिकलम्'उपपादकः अहमपि आगत्य साक्ष्यं वदामि । प्रथमतः न्यायालयं गन्ता तु सः । तस्य गमनपर्यन्तं वयं किमपि कर्तुं न शक्नुमः । भवान् तूष्णीं तिष्ठतु ।'

## 6

न्यायालयात् कापि सूचना आगच्छेत् किम् इति वेङ्कटरमणः दशद्वादशदिनेषु प्रैषपत्राणि अपश्यत् । किन्तु न किमपि प्राप्तम् । काळिङ्गः ग्रामात् लोकयानेन गतः किम्, कस्यां दिशि गतः – इत्येतदपि विचारयन् आसीत् । एतन्मध्ये सः तालूकुकेन्द्रस्य दिशि गतश्चेदपि दत्तिपत्रस्य विरुद्धम् आपादयितुं न्यायालयं गतः इति वक्तुम् आधारः नासीत् ।

काळिङ्गस्य तदुक्तिदिनात् वेङ्कटरमणस्य मनसः समाधानं गतिच्युतम् आसीत् । अद्यावधि सः देवस्थानस्य पूजया सह स्वात्मानं प्रेमभक्त्या बन्धिनं कृतवानासीत् । कियदपि कार्यं भवतु, एकस्मिन्नपि दिने पूजाम् अकृत्वा तेन मुखे जलमपि न निवेशितम् आसीत् । एकस्मिन्नवसरे ज्वरबाधया तेन शयिते तस्य माता देवस्थानं गत्वा, मन्त्रतन्त्राराहित्येनापि केवलं फलपुष्पैः पूजां विधाय, तस्याः प्रत्यागमनानन्तरम्, एकस्य विकसितपुष्पस्य स्वीकारानन्तरं तेन औषधं पीतमासीत् । किन्तु इदानीं पूजायाः तलस्यैव क्रकचः पातितः अस्ति ।

काळिङ्गः नूनं न्यायालये आपादयेत् इति मनः कदाचित् शङ्कते स्म । काळिङ्गस्य वचनं सः सम्यक् स्मरति स्म, 'प्रकरणम् उपस्थापनीयमेव इति मम उद्देशः नास्ति । मम गृहान्नं भक्षयन्नस्ति इत्यतः भवान् कष्टकाले मदीयः भवेत् । मम पुरतः एव तिरस्कारेण भाषमाणस्य, मम पत्नीम् एव उपालभमानस्य भवतः मम बुद्धिम् उपदेष्टुं योग्यता नास्ति ।' तस्मै बुद्ध्युपदेशाय नाहं तावत् गतः आसम् । गौडज्जस्य पौत्रः इत्यनेन ममकारेण तस्मै हितोपदेशः मम कर्तव्यम् आसीत् । तस्य गृहान्नं भक्षयन्नस्मीत्यतः तस्य कष्टकाले मया भवितव्यम् इत्यस्य अर्थः कः ? तत्र आपद्यमानं कष्टमपि किम् ? एतेन जरापन्नासु धेनुषु घातकाय विक्रीयमाणासु, जिह्वारुचये अनेन, अस्य पत्न्या च गवि हत्वा

भक्षितायाम्, एतेन कृतमेव साधु इति मया वक्तव्यं किम् ? तदा अस्य देवस्थानस्य पूजा मयि अवशिष्यते । तन्नाम सः दत्तिक्षेत्रस्य विघ्नाय नागच्छेत् । अन्नस्य आशया मया देवस्थानस्य शिलाविग्रहः पूजनीयः । यथार्थायाः गोमातुः वधाय साहाय्यं कर्तव्यम् । किं युक्तं भवेत् ? शिलादेवस्य पूजा स्थगिता चेत् न किमपि बाधकम् अस्ति । यथार्थगोदेवतायाः हनने जाते पूर्वं जातात् अपि अधिकः कोलाहलः कारयितव्यः । तस्य गृहम् एव दाहितं भवेत् । युक्तरीत्या भयहिंसयोः अनुत्पादनेन एतेषां बुद्धिः न उदियात् ।

शिलादेवस्य पूजां परित्यक्तुम् अपि मनः न अभ्युपगच्छति । मन्दिरस्य अन्तः स्थितः विग्रहः केवला शिला इति भावयितुं तस्य मनसा न शक्यते स्म । गौडज्जेन मन्दिरस्य निर्माणावसरे वेङ्कटरमणः अपि तत्र भागी आसीत् । मन्दिरस्य, कल्याण्याश्च प्रमाणस्य, गुणनेन निर्धारणम् आरभ्य, तयोः पूर्णतापर्यन्तं तत्र गत्वा साह्यं ददाति स्म । कर्म कुर्वन्तः ग्रामस्य स्त्रीपुरुषस्वयंसेवकाः, कर्मचारिणः टङ्किनः, शिल्पी शिवलिङ्गाचारी, निर्माता गौडज्जः – इति सर्वेभ्यः गोपूजायां शास्त्रसम्बन्धं, कथां पुराणं च उक्त्वा तेषां भक्त्युत्साहं वर्धयति स्म । विग्रहप्रतिष्ठापनावसरे विधिवत्तया मन्त्रतन्त्रेषु भागम् आवहत् । ततः आरभ्य अद्यावधि तां पुण्यकोटिः इति नामवती देवसुरभिः इति, तस्याः पृष्ठतः स्थितं विग्रहत्रयं ब्रह्मविष्णुमहेश्वराः इति न्यासं विधाय – नूतनतया न्यासविधानस्य आवश्यकता एव नासीत् – अपूजयत् । इदानीं ते केवलं शिलायाः विग्रहाः भवितुं कथं शक्यन्ते ? काळिङ्गस्य फार्म्स्थले वधं प्राप्ता, इतःपरं सम्भाव्यवधा च जीवितः देवः इत्येतत् सत्यम्, किन्तु देवस्थाने स्थिताः तज्जीवस्वरूपाणां प्रतीकाः । तं प्रतीकं शिला इति भावयितुं कथं शक्येत ?

वेङ्कटरमणस्य देवस्थानस्य च अवियोज्यमानः बन्धः वर्धितः आसीत् । तं वियोजयितुं तेन न शक्यते एव । काळिङ्गेन भायितं पूजादत्तिहरणं, न तावत् पूजाहरणम् । दत्तिभ्रंशे जातेऽपि पूजा मदधीना एव भवेन्नु ? आम् – एतत् चिन्तनं यदा स्फुरितं तदा मनः अन्धकारे प्रकाशदर्शनेन इव आनन्दितम् अभवत् । तस्य क्षेत्रम् आवश्यकं चेत् स्वीकरोतु । मम पूजाम् अहं करोम्येव इति निश्चितवान् । परन्तु उदरस्य गतिः का ? माता, स्वयं, पत्नी अपत्ये द्वे एतावतां जनानां कुटुम्बः कथं चलेत् ? मम अपराधः जातः । मां क्षमार्हं विधाय, मया दत्तं त्यागपत्रं प्रत्यर्प्यताम् इति सर्वकारस्थान् किं निवेदयानि ? – इत्येका सूचना मनसि उदिता । तत्क्षणं तदेव मनः तस्याः सूचनायाः

अर्थं विवृत्य अवदत् । गोहत्यानिषेधान्दोलने मम साहाय्यकरणात् खलु तैः स्थानान्तरगमनम् आदिष्टम् । तन्नाम त्यागपत्रं प्रत्यर्पयन्तु इति निवेदनाय अपि स्वेन यद् कृतं सः अपराधः इत्यङ्गीकर्तव्यम् । दत्तिक्षेत्रानुभवाय काळिङ्गोन निवेद्यमानमपि एतादृशम् अपराधाभ्युपगमनम् एव । सर्वकारः, काळिङ्गश्च उभावपि स्वस्मात् एकरीतिकां विधेयताम् अपेक्षेते । काळिङ्गात् मुक्तः भवेयम् इति त्वरया गत्वा सर्वकारस्य कूपे पतेयम् । मुक्तो भवामि चेत् उभाभ्याम् अपि भवेयम् इति मनसा निर्धारितम् ।

पृष्ठभूमिका सर्वा गृहे मात्रा पत्न्या च उभाभ्याम् अपि ज्ञाता आसीत् । इदानीं किं कर्तव्यम् इति तेन पृष्टे पत्नी अवदत् – 'भवान् अधुनापि सर्वकारस्य उच्चजनान् दृष्ट्वा मत्पक्षतः अपराधः अभवत् इति वदतु । सुखेन वेतनप्राप्तिकर्म भवति । वार्धककाले निवृत्तिवेतनम् अपि प्राप्स्यति । किमेतत् प्रकरणम् ?'

किन्तु माता अवदत् – 'वत्स, पूर्वजेभ्यः प्राप्तं गृहं परित्यज्य कुत्रापि गमनं मास्तु । तस्मै काळिङ्गाय मया चतुर्षु वर्षेषु अन्नं परिवेषितम् । सः मम वचनमपि शृणुयात् किमिति पश्याम । न्यायालयं मा गच्छतु, ज्येष्ठैः कृतः दानधर्मः न अपहर्तव्यः इति वदामि । भवानपि तस्य विरुद्धम् अगत्वा उपायेन तिष्ठतु ।'

'मातः, तस्य विरुद्धम् अहं किमर्थं गच्छेयम् ? तेन गोवधे कृतेऽपि तूष्णीं किं तिष्ठेयम् ?'

मातुः उत्तरं न भासितम् । 'कीदृशः दुष्टकालः प्राप्तः स्यात् प्रपञ्चे !' इति वदन्ती तूष्णीं स्थिता ।

कस्मिंश्चित् प्रातःकाले पूजाविधानानन्तरं वेङ्कटरमणः देवस्थानस्य वेदिकायाम् उपविश्य मनस्तृप्तिप्राप्त्यये उच्चैः कठोपनिषदं पठन्नासीत् ।

'पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः ।
अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत् ॥

नचिकेताः एवम् आलोचयन् 'तात, कस्मै मां दास्यसि' इत्यपृच्छत् । 'मृत्यवे त्वा ददामि' इति पितृवचनम् अनुसृत्य सः तूष्णीकः यमपुरीं गतः । शोकाविष्टं पितरं स एव

अनुपश्य यथा पूर्वे प्रतिपश्य तथापरे ।
सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः ॥

इति समाधाय, शान्तः यमसदनं गतः । अहो नचिकेतसः चित्तस्थैर्यम् !

वेङ्कटरमणस्य मनः पठनं विहाय अन्यस्मिन् कस्मिंश्चित् चिन्तने प्रवृत्तम् । न्यूनातिन्यूनम् अर्धघण्टाकालं यावत् किमपि चिन्तयत् आसीत् । अनन्तरं कमपि निर्धारं प्राप्तः इव सः उत्थाय प्रसादपात्रम् आदाय, द्वारं तालिकया पिधाय, अङ्गणस्थां घण्टां वादयित्वा, बहिः आगत्य, पुरतः स्थित्वा अपश्यत् । फार्म्मध्यस्य कालिङ्गगृहस्य पार्श्वे एव कूपखनन–कार्यं जवभरेण प्रवृत्तं दृष्टम् । विंशतिः त्रिंशद्वा भृत्याः कुद्दलिकाः, कण्डोलांश्च आदाय कर्म कुर्वन्ति स्म । कालिङ्गः तटे स्थित्वा कर्म निर्दिशति स्म ।

वेङ्कटरमणः साक्षात् स्वगृहं गतः शुचौ एव स्थितायाः मातुः हस्ते प्रसादपात्रं दत्त्वा, लघुगृहे स्थितां काष्ठपेटिकाम् उद्घाटितवान् । तत्रत्यं किञ्चन घनं पिहितपत्रम् आदाय हस्ते परिगृह्य तथैव बहिः आगतः । पुनः गिरिदिशि पद्भ्याम् आगच्छन् देवस्थानं प्राप्तः । पिहितपत्रं देवस्थानस्य देहल्यां निधाय, त्रिवारं प्रदक्षिणीकृत्य द्वारं प्रणतवान् । अनन्तरं तत् हस्तेन परिगृह्य कल्याण्याः पार्श्वात् अवतीर्य कालिङ्गस्य फार्म्स्थलम् आगतः । कूपकार्यम् इतोऽपि प्रचलत् आसीत् । कालिङ्गः तत्रैव स्थितः आसीत् ।

पूजकवस्त्रं धारयित्वा, केशाग्रे बन्धं विधाय, ललाटे, हस्ते, बाहौ, वक्षसि, भुजयोः सर्वत्र विभूतिपुण्ड्रैः लिप्तं देवस्थानस्य अर्चकं दृष्टवन्तः कर्मकराः तमेव पश्यन्तः अतिष्ठन् । एतं दृष्ट्वापि अपश्यन्निव नटितुं प्रयत्नवानपि, अतः कुतोऽपि अशक्नुवन् कालिङ्गः तस्यां दिशि प्रत्यावृत्तः । कूपसमीपे स्थित्वा कर्म निरीक्षमाणा हिल्डा तु उपेक्षां प्रकटीकृत्य, कूपस्य अन्तः किमपि पश्यन्तीव अतिष्ठत् । समीपे आगतः वेङ्कटरमणः स्वहस्तस्य पिहितपत्रं कालिङ्गाय दत्तवान् । किमपि पत्रं स्यात् इति तत् स्वीकुर्वन् सः 'किमेतत् वेङ्कटरमण ?' इति अपृच्छत् ।

'भवतः पितामहेन देवस्थानस्य पूजार्थम् इति लिखितं दत्तिपत्रम् । तस्मिन्नवसरे उक्तवान् खलु, भवता यथोक्तं तथा नानुतिष्ठति चेत् प्रकरणम् आपाद्य क्षेत्रं स्ववशं नीयते इति । भवदुक्तं यथा तथा नाहम् अनुतिष्ठामि । भवता गृहे गोषु हतासु अपि अहं मुखं पिधाय न तिष्ठामि । भवता न्यायालयं गत्वा न्यायवादिभ्यः धनव्ययः करणीयः इत्यपि मास्तु । एतत् पत्रं स्वीकरोतु । अद्य आरभ्य तस्य क्षेत्रस्य मम च सम्बन्धः समाप्तः । तत् कर्षते होन्नाय निवेदयामि । इतःपरं तत् किमपि कर्तुं भवान् शक्नुयात् ।'

कालिङ्गस्य एषा कृतिः वाक् च अनिरीक्षिता आसीत् । न केवलं तत्, आश्चर्यमपि उद्भावितं तया । सः किं वदेत् इति न ज्ञायते, तावदेव वेङ्कटरमणः एव उच्चैः अवदत् – 'पश्यतु, देवस्थाननिर्माणस्थलं भवतः नाम्ना एव अकारयत् इति अहं जानामि । एतस्य

दत्तिक्षेत्रस्य त्यागेनापि अहं देवस्थानस्य पूजनं न स्थगयामि । एतावत्पर्यन्तमपि पूजां कुर्वन्नपि आसम्, पूजान्नं भुञ्जानः अपि आसम् । अद्य तस्य पापान्नस्य सम्बन्धं निवारितवान् अस्मि । इतःपरं पूजासम्बन्धमात्रं स्वस्मिन् स्थापयामि । देवस्थानस्थलं भवतः नामायत्तम् इति भवता पूजासम्बन्धः अपि निवारितः स्यात् । आवश्यकं चेत् पूर्णं देवस्थानं भवद्वशं स्वीकुर्यादपि । इतःपरं यदा यदा गोमांसभक्षणेच्छा जायते तदा देवस्थाने एव पुण्यकोटिदेवतायाः पुरतः एव एकैकां धेनुं हत्वा तत्रैव पक्त्वा खादितुं शक्यते । ततःपरं भक्षणमदस्य अवतरणपर्यन्तं कल्याण्यां दम्पतिभ्यां जलक्रीडा अपि कर्तुं शक्यते ।'

एतावदुक्त्वा वेङ्कटरमणः प्रतिनिवृत्तः । भृत्याः सर्वे स्तब्धाः तस्य वचनानि शृण्वन्तः आसन् । इदानीं हिल्डा अपि तदभिमुखं परावृत्य धृष्टदृष्ट्या पश्यन्ती आसीत् । चत्वारि पदानि गतः वेङ्कटरमणः पुनरेकं वचनं स्मृत्वा तत्क्षणं स्थित्वा परावृत्य 'पश्यतु, देवस्थानस्य, कल्याण्याश्च स्थलं भवतः नाम्ना स्यादेव । तस्य निर्माणाय गौडज्जेन व्ययः कृतः इत्यपि सत्यम् । किन्तु कल्याण्याः पयःपूर्णं प्रवाहाय काळेनपल्ल्याः स्त्रियः, पुरुषाः सर्वे स्वेदं निःसार्य तयोः द्वयोरपि कृते कर्म कृतवन्तः । इदानीं देवस्थानस्य समन्ततः दशगव्यूतिषु एव पुण्यक्षेत्रम् इति भक्तादिजनाः आगच्छन्तः सन्ति । दत्तिक्षेत्रे हस्तक्षेपः इव देवस्थानं वशं कर्तुं प्रवृत्तश्चेत् भवतः कपालं न अवशिष्यते, जानातु । श्वः एव दिने काळेनपल्ली–जनान् निवेद्य देवस्थानेन कल्याणीं संयोज्य गिरेः तस्य पार्श्वभागस्य भवतः क्षेत्रस्य च मध्ये प्रबलां वृतिं योजयामि । न केवलं रक्षिभटान्, अन्यान् कानपि आहूय भाययितुं प्रयतते चेदपि भवति दण्डताडनं पतति । दण्डम् आदाय अहमेव तिष्ठामि । भवतः पुरुषत्वं ज्ञातं भवति' इति तारस्वरेण उक्त्वा प्रतिनिवृत्य बरबरिति गतवान् । तस्य विंशतिपदगमनात् पूर्वमेव काळिङ्गः पृष्ठतः 'वेङ्कटरमण, किञ्चित् तिष्ठतु' इति उच्चैः अवदत् । किन्तु सः न अतिष्ठत् । परावृत्यापि अपश्यन् 'भवादृशस्य चण्डालस्य मुखदर्शनेन पापं प्राप्नुयाम् । दूरं तिष्ठतु' इति आक्रुश्य वदन् पदवेगं द्विगुणं कृतवान् ।

तद्दिने स्वेन कृतं कर्म सः गृहे कमपि नोक्तवान् । स्वस्थतया भोजनसमापनानन्तरं गोभ्यः गृहे एव शुष्कतृणानि वितीर्य, तृणकटम् आस्तीर्य निद्रितः । सायं सुखेन तटाकस्य उत्पार्श्वे अटित्वा आगतः । रात्रौ शयित्वा सर्वेषां निद्रागमनानन्तरं मनसा चिन्तयितुं प्रारब्धम् । एतावद्दिनेषु ज्योतिषविधानमेव कोणे स्थापितमस्ति । जनानां धर्मकर्मणि

श्रद्धायां न्यूनायामपि, जातकम् उपस्थाप्य भविष्यद्विषये प्रश्नस्तु समन्तात् सर्वत्र अधिकतया जायमानः अस्ति । सम्यक् परिशील्य एका कुण्डली लिखिता चेत् दश रूप्यकाणि, एकस्य जातकस्य जन्मभविष्यं पूर्णतया लिखितं चेत् एकशतं रूप्यकाणि यः कोऽपि दद्यात् । ज्योतिषं वक्ता यस्य कस्यापि देवस्य एकस्य उपासनां कुर्यात् । मम तु अन्यः यः कोऽपि देवः नावश्यकः । प्रतिदिनं प्रातरुत्थाय पुण्यकोटिदेवस्थानं गत्वा पूजा क्रियते चेत् पर्याप्तम्, कुण्डलीगुणनाय आवश्यकी मनःस्तिमितता लभ्यते । उदरम्भरणाय यः कोऽपि मार्गः अस्त्येव । अन्यच्च गवां चरणाय स्थलं नास्ति । काळेनपल्ल्याः वेङ्कटेगौडं वदामि चेत् तस्य गोमाले अथवा अस्मद्ग्रामस्य समीपस्थस्य क्षेत्रस्य अञ्चले चारयितुं शक्यते । युगादिपर्वणि वर्षफलकथनेन किञ्चिदधिकं धानधान्यानि यच्छन्तु इति कथनेन न केवलं काळेनपल्लीजनाः, अपि तु अन्यग्रामीणाः अपि प्रतिगृहं चतुःप्रस्थमितेन यच्छन्ति चेदपि कियदपि स्यात् ।

एतच्चिन्तनेन साकं गृहे सञ्चितस्यापि गणनम् अकरोत् । एतद्दिनपर्यन्तं प्राप्ते वेतने तेन सार्धद्विसहस्ररूप्यकाणां निधिः सञ्चित्य स्थापितः आसीत् । तस्य माता गृहं प्राप्तेषु अधिकं धान्यं विक्रीय स्नुषायाः हारः, कङ्कणम् इत्यादि एकसहस्ररूप्यकमितं सुवर्णमपि कारितवती आसीत् । अस्य वर्षस्य कृते पर्याप्ताः रागिव्रीहयः अपि आसन् । इतोऽपि अधिकं किम् आवश्यकम् ? मनुष्यस्य आशायाः मितिरेव नास्ति – इति समाधानेन सः निद्रां प्रापयितुं मनः सज्जीकुर्वन् आसीत् ।

किन्तु मध्याह्ने काळिङ्गेन सह सम्भाषितं वाक्यं तस्य स्मृतौ उपस्थितम् । 'तत् सर्वं साधु । मया तेन साकं कुतः कोपवचनं भाषितम् ? तस्मै पत्रं दत्त्वा, यत् वक्तव्यं तत् सहनया उक्त्वा आगन्तव्यम् आसीत्' इति काचन मनोलहरी वदति स्म । किन्तु अन्या लहरी 'सहनावचनेन तस्य अयोग्यस्य अर्थावबोधः भवेत् किम् ? कोपप्रदर्शनेन किम् अभवत् ? तेन मम सकाशात् अपहर्तव्यं किं स्यात् ? तस्मै अहं किमर्थं बिभियाम् ? क्षेत्रस्य अन्नाशा यावदस्ति तावत् भयं भवेदिति स्वाभाविकम् । आशाविहीनस्य तु भयं किमर्थं भवेत् ?' इति तस्य वचनं समर्थयन्ती आसीत् ।

एवं निद्राप्राप्तिसमये मध्यरात्रम् अतीत्य कियानपि कालः अभवत् ।

## 7

अनन्तरदिने विलम्बेन उत्थितः वेङ्कटरमणः शीघ्रं स्नानं समाप्य, प्रसादपात्रं स्वीकृत्य

देवस्थानं गतः । मनः शान्तम् आसीत् । उच्चैः तन्मयतया मन्त्रम् उच्चार्य, पूजां समाप्य मङ्गलनीराजनकरणावसरे बहिःप्रदेशात् कोऽपि धावन् आगतः इव अभासत । किन्तु तस्यां दिशि अपश्यन् सः सावधानं मङ्गलनीराजनं समापितवान् ।

बहिः आगतः वेङ्कटेगौडस्य पुत्रः माटः । इतोऽपि उच्छ्वसन् एव सः अवदत्, 'आर्य, तायव्वा अद्य म्रियते इति, भवान् आगच्छतु ।'

'अद्यैव म्रियते इति भवान् कथं जानाति ?'

'तथा मम पिता अवदत् । मरणात् पूर्वं गोदानं करोमि इति सा अवदत् इति । भवन्तम् अन्विष्यन् भवद्गृहं कश्चन गतः । अहम् अत्र आगतः । धावन्नेव आगच्छतु । प्रतिष्ठताम् ।'

प्रसादपात्रेण साकं तीर्थचषकमपि स्वीकृत्य वेङ्कटरमणः देवस्थानस्य द्वारं तालिकया पिधाय, अङ्गणस्य बृहद्घण्टां वादयित्वा, शुचिना एव माटेन सह काळेनपल्लीं गतः । तायव्वायाः कालः सन्निहितः आसीत् । लौकिकचिन्तया मस्तकं पूरयन् वेङ्कटरमणः गतेषु त्रयोदशसु चतुर्दशसु वा दिनेषु काळेनपल्लीम् आगतः एव आसीत् । ह्यः एव तावत् तस्य मनः शान्तिं प्राप्नुवत् आसीत् । अद्य, श्वः वा सः एव गत्वा वृद्धां पश्येत् । किन्तु तावदेव तस्याः कालसमाप्तिः सन्निहिता किमु ? – इति चिन्तयतः तस्य गमनावसरे तस्याः गृहस्य पुरतः पञ्चाशतः षष्टेः वा अधिकाः जनाः मिलिताः आसन् । तस्य गमने तत्क्षणं सर्वे मार्गात् अपसृतवन्तः । अन्तः कस्यचित् कम्बलस्य उपरि वृद्धायाः क्षीणं शरीरं शायितम् आसीत् । करचरणचालने अधिकशक्त्यभावेऽपि तस्याः नेत्रे तु प्रकाशमाने आस्ताम् । वेङ्कटरमणस्य आगमनं तया ज्ञातम् । उत्थाय उपवेष्टुं शक्त्यभावात् तया न प्रयत्तमपि । शिरसः समीपे ग्रामस्य चतस्रः स्त्रियः उपविष्टाः आसन् । स्तम्भाधारेण वेङ्कटेगौडः भित्तेः समीपे इतरे पञ्चषाः जनाः मुख्याः सङ्गताः आसन् । वेङ्कटरमणाय काचन स्त्री किञ्चित् पीठं स्थापितवती ।

वेङ्कटेगौडः अवदत् – 'स्वामिन्, ह्यस्तनदिने भवता किमर्थं तथा कृतम् इति ?'

'किं तावत् कृतम् ?'

'कूपखननाय गताः पुरुषाः अवदन् । दत्तिपत्रं तस्मै किमर्थं दत्तम् ? न्यायालयः गतश्चेत् वयं ग्रामीणाः सर्वे साक्ष्यार्थम् आगच्छेम खलु ?'

'आर्य, ग्रामीणानां सर्वेषाम् आगत्य तत्र साक्ष्यवचनश्रमापेक्षया एतस्मै पूजकाय

एकैकं प्रस्थमितं रागिधान्यं ददति चेत् उदरं न पूर्यते किम् ? क्षेत्रं त्यक्तं चेदपि मया किं पूजा त्यक्ता ? इदानीं देवस्थानात् एव आगच्छन् अस्मि, पश्यतु, तीर्थं प्रसादं च आनीय । पूजायाः न कोऽपि भङ्गः स्यात् । न किमपि चिन्तयतु भवान् ।'

'तत्तु ज्ञातमेव, त्यज्यतु । ह्यः पुरुषाः आगत्य तथा अवदन् । तत् श्रुत्वा तायव्वा अन्तः खिन्नताम् आवाहितवती । इतःपरम् अहं म्रिये इति रात्रौ द्विवारं हस्तेन निवेद्य दर्शितवती । प्रातः उत्थाय अहमत्र आगतः तदा गृहे स्थितानां सर्वासां गवां दानं करोमि, आर्यम् आमन्त्रयतु इति हस्तं दर्शितवती ।'

वेङ्कटरमणः एकनिमेषम् आलोच्य अवदत् – 'पश्यतु, गोदानं करोमि इत्युक्ते तत् विना कारणं मास्तु इति न वक्तव्यम् । दानकारकः लोभी चेत् अथवा शुद्धमनसा न ददाति चेत् केवलं न स्वीकार्यम् । तायव्वा तु शुद्धमनसा ददाति । किन्तु गृहस्य स्वामी, तस्य बुद्धिः भवता ज्ञायते । अतः अहम् एतत् दानं न स्वीकरोमि ।'

'एतस्य वचनस्य श्रवणात् तत्क्षणं तायव्वायाः शुष्कशरीरस्य नेत्रयोः अश्रु पूरितम् । तत् समीपे स्थिताः सर्वेऽपि लक्षितवन्तः । वेङ्कटेगौडः अवदत् – 'गृहस्य स्वामी सः कथं भवितुम् अर्हति भोः ? सः न्यासं स्वं सुवर्णं दुर्वर्णं चेति किमपि आस्वाद्य हतो भवतु । पुण्यकोटिसन्तानः अस्ति खलु, सः गौडज्जस्य पूर्वजानां भवति । अग्रे तस्य भक्त्या प्रतिपालकाः गृहे न भवन्ति चेत् दानं कर्तव्यम् । गृहस्वामिन्याः तत्र अधिकारो विद्यते । भवान् स्वीकुर्यादेव ।'

एतत् वचनं स्वस्याः एव इतिवत् तायव्वा मुखे भावनां व्यक्तीकृतवती । वेङ्कटरमणः अवदत् – 'तथा चेत् पूजासामग्रीः आनाययतु । पुष्पं, गन्धः, क्षीरम् एकस्मिन् घटे घृतं, किञ्चित् सुवर्णखण्डः इति सर्वं भवेत् । तायव्वा स्नातुं न शक्नोति चेत् शयनस्थले एव आर्द्रेण वस्त्रेण तस्याः देहं प्रोञ्छन्तु । एतत् अङ्गणं विलिप्य, यत् किञ्चित् रङ्गवल्लीं रचयन्तु । कथमपि एतावन्तः जनाः मिलिताः सन्ति । प्रसादाय भवेत् । पञ्चषाणि नारिकेलानि तोदयित्वा गुडं खण्डयित्वा मिश्रीकृत्य, सन्ति चेत् कानिचन कदलीफलानि खण्डशः मिश्रीकुर्वन्तु ।'

तायव्वायाः स्नापनार्थं स्त्रीजनाः उत्थिताः । पुरुषाः सर्वे उत्थाय बहिरागताः । पुष्पपत्राणि आनेतुं द्वौ बालकौ धावितौ । माटः स्वगृहस्य अट्टम् आरुह्य अष्ट नारिकेलानि स्वीकृत्य त्वङ्मोचनं कृतवान् । वेङ्कटरमणः तावत्पर्यन्तं गृहस्य पुरतः वटवृक्षस्य वेदिकायाम् उपविष्टः ।

एकस्यां घण्टायां सर्वसज्जता सम्पन्ना। परिशोध्य रचितरङ्गवल्लीकम् अन्तरङ्गणं सप्त पुण्यकोटिधेनवः, द्वौ वत्सौ, त्यक्तस्तन्यः एकः वृषवत्सः, षट् स्तनन्धयाः वत्साः, वधं प्राप्तायाः धेनोः अनाथवत्सः – इत्येतान् स्नापयित्वा, ललाटे कुङ्कुमं धारयित्वा आनीतवन्तः। धेनूः, गोवत्सौ च बद्धवन्तः। तत्रैव एकस्मिन् भागे उच्चस्तरेण शय्याम् आस्तीर्य, शिरःपार्श्वे गोणीस्यूतान् स्थापयित्वा, स्नापितां तायव्वां भित्त्याधारेण उपवेशितवन्तः। वेङ्कटरमणः अन्तः आगतः। वेङ्कटेगौडम् आरभ्य अन्ये केचन मुख्याः आगत्य लब्धे स्थले उपविष्टाः। वेङ्कटरमणः पूजासामाग्रीः परीक्ष्य कस्यचन मृच्छदस्य उपरि गन्धकाष्ठेन गन्धपेषणं कुर्वन् आसीत्। वत्साः स्वमातॄणां स्तनान् एकवारं चोषयित्वा अन्यधेनोः उदरस्य अधः प्रविशन्ति स्म। तान् एकनिमेषं पश्यन् वेङ्कटेगौडः तायव्वाम् अपृच्छत् – 'एषः कपिलवत्सः एव खलु, अनाथो जातः ?'

तायव्वा आम् इति वचनवत् शिरः कम्पितवती। अनन्तरं वेङ्कटेगौडः एव अवदत् – 'पश्यतु, माता मृतास्ति इति तेन न भावितम् एव। यस्याः कस्याः अपि मातुः स्तने मुखनिवेशनेनापि या कापि न पादेन प्रहरति। स्ववत्सः इति परिभाव्य देहम् आलिह्य क्षीरं पाययति तावत्।'

गन्धं पिषन् वेङ्कटरमणः अवदत् – 'अत एव खलु गौडय्य, गौः सर्वजनमाता इति उच्यते ? भवान् जानाति किल। तदा पुण्यकोटिधेनुः अवदत् खलु 'मातरो हे स्वसार एवम्। मम जनन्याः सहोदर्यश्च। स्वीयमिति वत्सं तु पश्यत। नन्वनाथमिमं शिशुम्' इति। तदानीं ताः सर्वाः धेनवः 'अम्ब, शृणुहि पुण्यकोटे तवापत्यमस्मदीयम्। तव च मनसि कुतः खेदः। निर्मला भव अम्ब हे' इति भाषां दत्तवत्यः खलु ? एतत् घटितं कुत्र ? अस्य गृहस्य पृष्ठे गोष्ठे। तदानीं सा पुण्यकोटिः व्याघ्रमुखं परिभाव्य गता। गिरिव्याघ्रः धेनोः सत्यम् अवलोक्य, तां हत्वा भक्षकं स्वस्य हतम् उदरम् एव शपन् स्वप्राणान् अत्यजत्। इदानीम् एतस्य एव गृहस्य पुण्यकोटिधेनुं तस्यामेव गिरिसानौ गृहं निर्मितवन्तः व्याघ्राः हत्वा स्वमुदरम् अपूरयन्। किन्तु धेनूनां स्वपूर्वजैः उक्तं वाक्यम् अपि स्मृतौ विद्यते, पश्यतु। स्वगोष्ठस्य कोऽपि वत्सः अनाथः भवति चेदपि सः स्वीयः वत्सः इत्येव भावयन्ति। किन्तु स्वपूर्वजाः किम् अकारयन्, किं वाक्यम् अवदन् इत्येतत् जानन्तोऽपि मनुष्यास्तु विस्मरन्ति। मनुष्यस्य धेनोश्च एषः एव भेदः खलु ?'

वेङ्कटरमणः शिरः नमित्वा गन्धं पिषन् भाषते स्म। अनाथवत्सस्य दिशि पश्यन्तः सर्वे तस्य वचनं शृण्वन्ति स्म। वेङ्कटेगौडः 'पापिनः अस्मत्पुत्राः स्वामिन्, चाण्डाल–

वेश्यापुत्राः' इत्यवदत् । तावति काले पिष्टं गन्धं दक्षिणहस्तस्य अङ्गुष्ठेन उद्गृह्णन् वेङ्कटरमणः स्वाभाविकतया दक्षिणपार्श्वे प्रत्यावृत्तः । तस्य आश्चर्यम् अभवत् । काळिङ्गः गृहस्य पृष्ठतः, गोष्ठदिशः द्वारात् आगत्य स्थितः आसीत् । तं तेषु न कोऽपि लक्षितवान् आसीत् । इदानीम् अन्ये सर्वेऽपि अपश्यन् । तत् वचनं तत्रैव स्थगितम् अभवत् ।

तस्य माता अस्मिन् दिने म्रियते इति भृत्यैः उक्तं श्रुतवतः काळिङ्गस्य मनः न सहिष्णु अभवत् । ग्रामस्य गृहे ग्रामीणाः इतरे महिलापुरुषाः मिलिताः भवन्ति इति तेन निरीक्षितम् आसीत् । तेषां सर्वेषां पुरतः गन्तुं तस्य सङ्कोचेन मुखं निष्पीडितमिव भवेत् । किन्तु स्वात्मानं प्रसूतवत्यां मातरि प्राणान् त्यजन्त्यां तस्याः समीपं गत्वा कापि सेवा विधेया, अथवा वैद्यम् आमन्त्र्य चिकित्सा कारणीया इति निश्चित्य फार्म्स्थलात् ग्रामगृहाय प्रस्थितः । गृहस्य पुरतः जनान् मिलितान् दूरतः एव दृष्ट्वा पृष्ठतः आगमनमेव वरम् इति प्रत्यावृत्तः । तेषां जनानां दर्शनावसरे एव जीवितं गतम् इति सः आलोचितवान् आसीत् । किन्तु अन्तः आगत्य पश्यति चेत् अन्यदेव दृश्यं प्रचलति स्म । गृहे स्थिताः धेनवः, वत्साः सकलाः परिशोध्य लिखितरङ्गवल्ल्यां भूमौ उपस्थापिताः । वेङ्कटरमणः पूजासामाग्रीं सज्जीकुर्वन् अस्ति । धान्यपिण्डिकासमीपे उपविश्य माटः नालिकेरखण्डान् तोदयन्नस्ति । मरणात् पूर्वं गोदानपद्धतिः तेन ज्ञाता । किन्तु स्वमात्रा गृहे स्थितानां धेनूनां, वत्सानां सकलानाम् एवंरीत्या दानकरणे कारणं किम् ? – इत्यस्य प्रश्नस्य उदयात् पूर्वमेव तस्य मनसि उत्तरं भासितम् आसीत् । ततः तथैव प्रस्थाय फार्म्स्थलं गन्तव्यम् इति तस्य गौरवप्रज्ञया उक्तेऽपि सः पादम् उन्नीय पृष्ठतः स्थापयितुं न शक्तः अभवत् । तेनैव अज्ञाता काचन शक्तिः तं तद्दृश्येन साकं बद्धवती ।

'प्रारम्भं करवाम किम् ?' इति वेङ्कटरमणेन पृष्टे वेङ्कटेगौडः 'हूँ, करोतु' इत्यवदत् । काचन महिला गत्वा घनघृतेन पूर्णं बृहत् मृद्दीपं प्रदीप्य, आनीय स्थापितवती । माटः इतोऽपि नारिकेलं तोदयन्नेव आसीत् । 'शुक्लाम्बरधरं विष्णुम्' इति गणेशपूजामन्त्र–पठनानन्तरं वेङ्कटरमणः 'अद्य पूर्वोच्चरितकालविभागे तथानेकगुणविशेषणविशिष्टायां शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं यथाज्ञानं यथामिलितोपचारैः गोः पूजनमहं करिष्ये' इति प्रारभ्य, ध्यानमन्त्रम् आवाहनमन्त्रम् आसनपाद्यार्घ्याचमनमन्त्र–तन्त्राणि समाप्य, स्नानं वस्त्रं च समापितवान् । अनन्तरं स्वयमेव उत्थाय सर्वासां गवां मन्त्रसमेतस्य चन्दनस्य लेपनानन्तरं तायव्वाभिमुखं परावृत्य अवदत्

– 'पश्यतु अम्ब, इदानीं न्यासमन्त्रान् पठामि। मनो निधाय शृणोतु। 'शृङ्गमूलयोर्ब्रह्मविष्णू न्यसामि, शृङ्गाग्रयोः सर्वतीर्थानि न्यसामि, ललाटे महादेवं न्यसामि ..' नाम – इति स्वेन पठ्यमानानां मन्त्राणाम् अर्थमपि सविवरणं वदन् गोः कस्मिन् कस्मिन् अङ्गे काः देवदेवताः सन्ति इत्येतत् अवर्णयत्। तायव्वा पुरतः उपस्थितायाः प्रत्येकं धेनोः शरीरे अपि ताः देवताः स्वनेत्राभ्यां दृष्टवती इव अनिमेषनेत्राभ्यां पश्यति स्म।

धूपदीपनैवेद्यप्रदक्षिणार्घ्याणां विधिवत्सम्पत्त्यनन्तरं वेङ्कटरमणः 'इदानीं गोपूजा साङ्गं सम्पन्ना। इतःपरं दानं कारयाम किम् ?' इति अपृच्छत्।

'कारयतु' इति वदन्तीव तायव्वा दृष्टिं चालितवती। कियत्यापि निःशक्त्या क्लिश्यन्ती अपि सा एकमेव पार्श्वम् आधार्य निर्निमेषदृष्ट्या सर्वमपि पश्यन्ती आसीत्। मुखे सदा भासमानं खिन्नत्वं सङ्कटं च इदानीं स्थगितम् अभवत्। काळिङ्गः पृष्ठभागस्य द्वारस्य समीपस्थां भित्तिम् आधार्य सर्वं पश्यति स्म।

वेङ्कटरमणः 'गौर्मे माता वृषभः पिता मे दिवं शर्म जगती मे प्रतिष्ठा' इति मन्त्रं पठन् बद्धां काञ्चन धेनुं, तस्याः वत्सेन साकं विमोच्य, आनीय तस्याः पुच्छं यथा तायव्वाभिमुखम् आगच्छेत् तथा निवेशितवान्। स्वयम् उत्तराभिमुखम् उपविश्य कस्मिंश्चित् पात्रे घृतम् आपूर्य, तस्य अन्तः सुवर्णचूर्णं संस्थाप्य तत्पात्रसमेतं गोपुच्छं परिगृह्य, तत् स्प्रष्टव्यम् इति तायव्वाम् अवदत्। समीपस्थाः स्त्रियः ताम् उत्थाप्य उपवेश्य तस्याः हस्तम् उन्नाय्य घृतपात्रं, गोपुच्छं च स्पर्शितवत्यः।

यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी।<br>
विश्वरूपः परो देवः प्रीयतामनया गवा॥

इति उक्त्वा वेङ्कटरमणः तायव्वायाः हस्ते स्पर्शितम् एकम् उद्धरणजलं स्वहस्ते वितारितवान्। अनन्तरं 'पश्यतु, इदानीं भवती मनसि एव एवं वदतु, 'हे गौः, भवती मम स्वरूपम् अपि भवति। भवत्याः मम च मध्ये न किमपि अन्तरम् अस्ति। अतः अद्य भवत्याः दानेन अहं ममैव दानं कृतवती। या वै यूयं सोऽहमद्वैधभावो युष्मान् दत्त्वा चाहमात्मप्रदाता' इत्युक्त्वा, तया स्पृष्ट्वा गृहीतेन घृतपात्रेण समेतं गोपुच्छं पूर्णतया स्वहस्ते उपादाय तायव्वां 'पश्यतु, इदानीं गां वदामि, सौम्यम् उग्रं च रूपं धरमाणे अयि धेनो, इदानीं दातुः भवत्याः विषये मनसः च्युतिः अभवत्। तन्नाम ममत्वम् अपगतम्। भवती मम ममतायाः वस्तु अभवत्। अतः अभीष्टं भोगं दत्त्वा भवती मम दातुश्च मङ्गलं करोतु। मनश्च्युता मन एवोपपन्नाः सन्धुक्षध्वं सौम्यरूपोग्ररूपाः' इत्यवदत्।

तावति गोदानं समाप्तम् । अनन्तरम् एकैकशः सर्वाः धेनूः आनीय, मन्त्रं विना तथैव तासां पुच्छानि तायव्वया स्पर्शयित्वा, स्वहस्ते स्वीकृतवान् । सर्वासां धेनूनां परिग्रहानन्तरं, 'माटेगौड, भवान् एताः सर्वाः नीत्वा बहिः गृह्णन् तिष्ठतु । अहं सर्वेभ्यः तीर्थं प्रसादं वितरामि' इत्यवदत् ।

सर्वाः अपि गावः वत्सैः सह बहिः गताः । वेङ्कटरमणः अङ्गुल्या तायव्वायाः ललाटे गन्धस्य तिलकं निधाय, प्रसादं कर्णिकारपुष्पं तस्याः दक्षिणकर्णे आरोपितवान् । तस्याः मुखे उद्धरणमितं तीर्थं वितीर्य, देवस्थानात् स्वेन आनीतं प्रसादं माटेगौडेन निर्मितेन नारिकेलचूर्णयुतगुडेन साकं मिश्रीकृत्य प्रथमतः तायव्वायाः मुखे एकं ग्रासं स्थापितवान् । अनन्तरं सर्वेऽपि आगत्य तीर्थं गन्धं च स्वीकृतवन्तः । वेङ्कटरमणः एव उत्थाय सर्वेभ्यः प्रसादं वितीर्णवान् । भित्तिम् आधारीकृत्य स्थितस्य एव कालिङ्गस्य दिशि सः न प्रत्यावृत्त एव । तस्मै प्रसादमपि न दत्तवान् । ततः प्रस्थाय गन्तुम् अशक्तः कालिङ्गः स्तम्भः इव तिष्ठन्नेव आसीत् ।

सर्वस्यापि समाप्त्यनन्तरं वेङ्कटरमणः 'अहं प्रतिष्ठे, पश्यतु अम्ब' इत्यवदत् । शयिता तायव्वा तं नमामि इति शिरः चालितवती । सः तस्याः शिरःसमीपम् आगत्य स्थितः । समीपस्थाः स्त्रियः तस्याः हस्तौ उन्नीय तस्य पादयुगले स्थापितवत्यः । ह्रासेन धावल्यं प्राप्तौ शालाकापञ्जरमिव स्थितौ स्वहस्तौ तस्य पादयोः उपरि एव स्थापयित्वा तायव्वा नेत्रे निमीलितवती । आशीर्वादमन्त्रः वेङ्कटरमणस्य स्मृतौ नागतः । एकनिमेषप्रयत्नेनापि हित्वा गतः मन्त्रः स्मृत्यधीनः नाभूत् । किमपि भासितमिव सः तथैव हसितवान् । तस्य नयनयोः अश्रु पूरितम् आसीत् ।

'मम मातृसमानायै भवत्यै किमिति अहम् अशीर्वादं करवाणि ? भवत्या एकमपि पापं कर्म न कृतम् । पुण्यवती । गोवत् वचनविहीना भवती गौः इवैव पुण्यजीवनं कृतवती खलु । तथापि भवत्यां नमन्त्यां कोऽपि आशीर्वादः वक्तव्यः एव । इतःपरं जीविता न स्यात् इति निश्चितवती खलु । भवत्याः यथाभीष्टं म्रियताम् । काममपि वेदनां विना शान्ततया भवत्याः आत्मा गोगर्भं प्रविशतु ।'

एतावत् उक्त्वा सः एव नतदेहः तस्याः हस्तौ उद्गृह्य सम्यक् शायितवान् । कालिङ्गः तिष्ठन्नेव आसीत् । वेङ्कटरमणः तस्य दिशि न अपश्यत् एव । देवस्थानस्य प्रसादपात्रं स्वीकृत्य, साक्षात् बहिः आगत्य, माटेगौडेन निगृह्य स्थितानां सर्वासां गवां रज्जूः सङ्गमय्य, हस्ते गृहीत्वा उच्चैः गोमतीमन्त्रं पठन् प्रस्थितः –

गावः सुरभयो नित्यं गावो गुग्गुलगन्धिकाः ।
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ॥
अन्नमेव परं गावो देवानां हविरुत्तमम् ।
पावनं सर्वभूतानां रक्षन्ति च वहन्ति च ॥

इति उच्चस्वरेण स्वात्मानं स्वयमेव विस्मरन्निव उच्चार्य गच्छति स्म । खुरैः धूलिम् उद्धूल्य गावः सर्वाः तस्य पृष्ठतः गताः । गच्छन्तीनां स्वमातॄणां स्तनान् धावंधावं चोषयन्तः, अन्योन्यं सुखं भाषमाणाः वत्साः अनुगताः ।

# षोडशः अध्यायः

## 1

वेङ्कटरमणस्य गमनानन्तरम् अपि काळिङ्गः तिष्ठन्नेव आसीत् । तं न कोऽपि सम्भाषितवान् । गृहात् बहिः मिलिताः प्रसादं भक्षयित्वा हस्तप्रक्षालनार्थं स्वस्वगृहं गताः । तायव्वायाः समीपे उपविष्टाः महिलाः 'भवत्यः अत्रैव तिष्ठन्तु । किमद्य सायम् उत श्वः प्रातः छादकं क्षिपति जीवः । अहं किञ्चिदिव गृहं प्रति गत्वा भुक्त्वा आगच्छामि । तस्यै किञ्चिदिव क्षीरं पाययन्तु' इत्युक्त्वा वेङ्कटेगौडः गतः । तायव्वायाः जडता आवृता भवति स्म । भुजं चालयित्वा पृष्टे सा जठराय किमपि नापेक्षे इत्यावेदितवती ।

मातुः समीपे उपविश्य भाषयितव्यम् इति काळिङ्गस्य आशा अभवत् । किन्तु सा उत्तरं न ददाति चेत् अपमानम् इव भवेत् । तासां महिलानां सम्मुखे अपमानम् अनुभवितुं सः न सज्जः आसीत् । किन्तु ताः ततः उत्थाय गच्छेयुः इति न अभासत । 'भवत्यः गच्छन्तु । अहं मम मातरं प्रतिपालयामि' इति उक्त्वा तासां प्रेषणालोचनमपि प्राप्तम् । किन्तु ताः 'भवता प्रतिपालनकाले एव एवंरीत्या निपतिता अस्ति भवन्माता पश्यतु तात' इति व्यङ्ग्यं भाषितं चेत् इतोऽपि अपमानं भवति ।

स्थितस्थले एव तिष्ठतः तस्य प्रस्थातुम् अपि सङ्कल्पशक्तिः न पर्याप्ता आसीत् । सा का शक्तिः अतीतात् घण्टात्रयात् तं तत्रैव बन्धिनम् इव निगृह्य स्थापितवती इति सः एव न जानाति । अन्ते एकवारं स्वव्यक्तित्वस्य समग्रामपि शक्तिं सञ्चित्य सः ततः पादम् उत्थाप्य पृष्ठभागस्य द्वारात् बहिः आगतः । गृहस्य पृष्ठतः स्थिते पितामहकालिके पुरातने बृहद्गोष्ठे इदानीम् एकापि धेनुः न विद्यते । स्थिताः अन्तिमाः धेनवः वत्साश्च अद्यैव दानरूपेण दत्ताः प्रस्थिताः आसन् । शिष्टाः वृषभाः चरणार्थं गताः आसन् । एकनिमेषं तत्रैव स्थितः सः भावावेगेन आविष्टः इव अभवत् । किन्तु तथाभवनात् पूर्वमेव स्वस्य सामान्यमनःस्थितिं स्मृतौ आवाह्य तत्रैव त्यक्ते स्वपादरक्षे संवेश्य, ग्रामस्य

पृष्ठतः गत्वा, वेदिकायाः कुल्याम् उल्लङ्घ्य स्वस्य नूतनगोष्ठं प्राप्तवान् । तत्र स्थातुं विमनाः फार्म्गृहं प्रस्थितः ।

कूपस्य कार्यं प्रचलति स्म । अन्तःप्रदेशात् निःस्यन्दितं जलम् उत्पात्य कर्मकराः इतोऽपि अगाधे खनन्ति स्म । तस्मिन्नेव दिने प्रातः प्राप्तानाम् इष्टिकानां राशिः समीपे आसीत् । काळिङ्गः साक्षात् अन्तः गत्वा मञ्चस्य उपरि शयितः । अन्तः आगत्य हिल्डा अपृच्छत् – 'डियर्, भवता भोजनमपि न कृतम्, उत्तिष्ठतु ।'

'मम भोजनं मास्तु ।'

'कुतः, तत्र किमपि भक्षितं किम् ? भवतः माता कथम् अस्ति ?'

'अद्य, श्वः वा म्रियते ।'

'मर्तुं कुतः त्यजेत् ? कञ्चन वैद्यम् आह्वातुं न शक्यते किम् ? अथवा अम्ब्यूलेन्स् आनाय्य जनपदचिकित्सालयं नेतुं न शक्यते किम् ?'

'नो नो, भवती न जानाति, तूष्णीं तिष्ठतु' इति स्वस्य भाषितुम् इच्छा नास्तीति सूचितवान्।

'क्षम्यताम्, समाधानं प्राप्नोतु' इत्युक्त्वा सा ततः विरता अभवत् ।

तस्मिन् दिने सायम् अपि सः शय्यातः न उत्थितः, उदरार्थमपि न खादितवान् । तस्य प्रचण्डस्य पराभवस्य अनुभवः जायते स्म । सङ्कल्पशक्तिः तिरोभूता आसीत् । वेङ्कटरमणस्य दानस्वीकारावसरे स्वयमपि गत्वा गोपुच्छं स्पृष्ट्वा दानक्रियायां भागी भवेयं किम् इति चिन्तनं मनसि उदितम् आसीत् । किन्तु तथा कृतं चेत् तत्क्षणम् 'अनेन चाण्डालेन स्पृष्टां गाम् अहं न स्वीकरोमि' इति आक्रुश्य वदति चेत् का गतिः, इति भयेन तथा न कृतम् । पूजनावसरे एव ततः प्रस्थाय आगन्तव्यम् इत्यालोचनं बहुवारम् उदितम् अभवत् । किन्तु तथा कर्तुं सङ्कल्पशक्तिः नासीत् । अन्ततः सः तस्यां क्रियायां सहायः, विरोधकः – इत्याद्या कयापि रीत्या न भागी निश्चेष्टः, निश्शक्तः पङ्गुः इव दूरेण एव सर्वम् अवलोक्य ततः प्रस्थाय आगमनेऽपि प्रयासम् अनुभूय आगतः आसीत् । इदानीं पुनः तत्र गच्छानि इत्यालोचनम् अपि प्राप्तम् । एतत् स्थलम्, एषः परिसरः, मातुः मृत्युशय्या च तं विचित्ररीत्या आकर्षन्ति स्म । किन्तु उत्थाय पुनः ग्रामं पद्भ्यां गन्तुं मनःस्थैर्यं नासीत् ।

रात्रेः भोजनम् अपि मास्तु इति सः अवदत् । किन्तु हिल्डायाः खेदः स्यादिति

उत्थाय उत्पीठिकायाः पुरतः उपविष्टः । सः सम्भाषणलहर्यां नासीदिति लक्षितवती सा अपि मौनेन आसीत् । पित्रा सह भाषितुं प्रयतमानमपि जाकं सा निवारितवती ।

रात्रौ काळिङ्गस्य निद्रा तु प्राप्ता । किन्तु सा निद्रा, उत मूर्च्छावस्था इति तेनैव न ज्ञातम् । सुखेन निद्रातुं मनःस्थैर्यम् आवश्यकम्, सङ्कल्पशक्तिः दृढा स्यात् । तस्य तदेव न्यूनम् असीत् । तथापि सः जागरितावस्थायाः व्यक्तचिन्तां विना रात्रिं यापितवान् ।

प्रातः उत्थाय मुखं प्रक्षल्य, काफीम् आसाद्य गोष्ठं गतः । इदानीं जमालेन क्रियमाणे कर्मणि अन्यः प्राप्तः । सामान्यतः पञ्चविंशतिवयाः सः लिङ्गायतः । नाम मल्लेशः । ताल्लूकुकेन्द्रे कस्याञ्चित् मोटरसेवायां स्वच्छताकार्यं करोति स्म । तस्य पिता माता वा नासीत् । मोटर्चालनं ज्ञातवान् सः ट्र्याक्टर् चालयितुं शक्नोति । मासे पञ्चसप्तति-रूप्यकाणि वेतनम्, निःशुल्कं भोजनं, खाद्यं, वास्तव्यं च ददामीति वचनेन काळिङ्ग-सकाशम् आगतः । शुद्धशाकाहारी । स्वयमेव पचति, उपाहारमन्दिरे भक्षयति, किन्तु एतेषां गृहस्य काफीम् अपि न स्पृशति ।

काळिङ्गस्य गमनावसरे मल्लेशः यन्त्रेण गोक्षीरं दोहयति स्म । तत् दृष्ट्वा सः तत्रैव स्थितः । भृत्याः क्षीरं क्यान्पात्रे प्रपूर्य यानमार्गसमीपं नीत्वा गताः । मल्लेशः गोदोहन-नलिकाः क्षालयन् आसीत् । अष्टवादनसमये गिरेः देवालयस्य बृहद्घण्टायाः शब्दः अभवत् । क्रियमाणं कर्म परित्यज्य मल्लेशः गिरेः दिशि प्रत्यावृत्य, नेत्रे निमील्य, बद्धाञ्जलिः अतिष्ठत् । घण्टानादः मन्द्रतां प्राप्तः । अन्ततः तस्य अश्रवणस्थितिपर्यन्तं तथैव स्थितः सः अनन्तरं स्वस्य कर्म प्रारब्धवान् । काळिङ्गस्य मल्लेशविषये कुतूहलं जातम् । सः काखि-अर्धोरुकं धृत्वा अर्धबाहुकं चतुरस्रयुतकं धरति । कटौ मेखला । मोटर् चालयति । यानसेवायां कर्मकरणात् उर्दुभाषया भाषते । बीडीं सेवते । किन्तु तस्मिन् एतावती धर्मश्रद्धा अस्ति इति काळिङ्गेन न ज्ञातम् आसीत् ।

तेन साकं तद्विषये किमपि असम्भाष्य काळिङ्गः ततः गृहं गतः । भृत्याः कूपकार्यं कुर्वन्तः आसन् । हिल्डा तेषां कार्यं परिशीलयन्ती आसीत् । काळिङ्गस्य तत्र स्थातुं अनिच्छा जाता । अन्तः गत्वा शयितः । एकाकिता, तत्परिणामतः खिन्नता च आवृता आसीत् ।

दशवादनसमये हिल्डा अन्तः आगत्य अवदत् – 'पश्यतु, अद्य देवस्थानं कति जनाः गच्छन्तः सन्ति । अद्य किं विशेषपूजा ? पूजकं स्वकार्यं समाप्य तदानीमेव प्रतिगतम् अहम् अपश्यम् ।'

काळिङ्गः उत्थाय बहिः आगतः। सामान्यतः द्विशतात् अधिकाः पुरुषाः, महिलाः वृद्धाः बाह्यमार्गात् कल्याण्याः उद्भूमिम् आरुह्य गच्छन्तः सन्ति। काळिङ्गः स्वफार्म्स्थले एव इतोऽपि समीपं गत्वा अपश्यत्। ते सर्वे स्वग्रामीणाः एव। कः स्यात् अद्य विशेषः ? तस्य दृष्टिः इतोऽपि अग्रे गता। चत्वारः जनाः चितायाः उपरि कञ्चन शवम् वहन्तः गच्छन्ति स्म। तस्य मनसि सर्वं भासितम् अभवत्। स्वमाता मृता अस्ति। स्वेषां क्षेत्रे, वाटिकायां वा कुत्रापि स्वस्य कलेवरस्य निखननं न भवेत्, अपि तु देवस्थानस्य समीपे एव मृन्मयतां गच्छेयम् इति तस्याः आशा आसीत् किम् ? अतः एव तत्र उद्वाह्य गच्छन्तः सन्ति। मुखे मृत्तिकां निवेश्य कुद्दालं कः वाहयेत् ? तदर्थमपि ग्रामीणाः मां न आमन्त्रयेयुः किम् ? अहम् अत्रैव अस्मीति ते न जानन्ति किम् ? स्वयं तत्र गच्छामि किम् ?– इति सः चिन्तितवान्। किन्तु ह्यस्तनानुभवे स्मृते तत्रैव अतिष्ठत्।

तावदेव तस्य कूपसमीपे कर्मचारिषु सामान्यतः विंशतिजनाः, तेन स्थितस्य स्थलस्य समीपतः एव धावित्वा शववाहकेषु सङ्गताः अभवन्। तत्र न कोऽपि काळेनपल्लीजनः। समीपग्रामवासिनः। तैः तायव्वा साक्षात् न ज्ञाता स्यात्। तथापि वृद्धगौडज्जस्य स्नुषा इति वा, पुण्यवती वृद्धा इति वा, अथवा मन्दिरनिर्मातुः गृहस्य स्वामिनी इति वा कस्यापि आमन्त्रणं विनैव स्वयं स्वयमेव गत्वा कलेवरस्य गौरवम् उद्भाव्य, स्वकीयम् इति एकां मुष्टिं मृत्तिकां समर्प्य आगच्छन्ति। तावता कालेन गणः उपरि गतः आसीत्। पृष्ठतः मल्लेशः एकाकी एव धावं धावं गणं सङ्गतः।

अत्र आगत्य उद्योगं प्राप्तवतः अस्य मल्लेशस्य इतोऽपि विंशतिः दिनीनि नातीतानि। तस्य काळेनपल्ल्याश्च यः कोऽपि सम्बन्धः नास्ति। तस्य जातिः अन्या, जनपदश्च अन्यः। सः किं निष्कारणं शवनिखननदर्शनाय गतोऽस्ति ? अथवा शवाय स्वयमपि मृत्तिकां समर्प्य, भक्तिम् अर्पयितुं गतः किन्तु ?

काळिङ्गः तत्र न अतिष्ठत्। गृहम् आगत्य सुप्तः। हिल्डा आगत्य अपृच्छत् – 'भवतः माता मृता इति कर्मकराः अवदन्। सत्यं किम् ?'

'आम्।'

'ग्रामजनैः भवान् आह्वातव्यः आसीत्, न किम् ?'

एतस्य वचनस्य सः उत्तरं न अवदत्।

भवन्तम् अनामन्त्र्य शवसंस्कारं कर्तुं तेषां कः अधिकारः अस्ति डियर् ? भवानु एतम् अंशम् आधारीकृत्य क्रमं विधातुं शक्नुयात्।'

'हिल्डे, भवती न जानाति । तूष्णीं तिष्ठतु ।'

'भवती न जानाति इति केवलं वदति, न तु बोधयति भवान् । तत् किमिति वदतु ।'

'मम इदानीं भाषितुं मूड् नास्ति । तूष्णीं तिष्ठतु ।'

'ऐ एम् सारि' इति उक्त्वा जाकम् आदाय सा पाकगृहं गता ।

मध्याह्नस्य सामान्यतः सार्धद्वादशवादने मल्लेशः स्ववास्तव्यस्य द्वारम् उद्घाट्य, पाकं कर्तुं स्यात्, अन्तः गतः । अयःपत्रेण कृतं तत् द्वारम् उद्घाटनेन पिधानेन च उच्चैः शब्दं करोति स्म । पूर्वं जमालेन उषितस्य वास्तव्याश्रयस्यैव गोमयेन शुद्धिं विधाय मल्लेशः उषितवान् आसीत् । तस्य पाकः न निश्चितरूपः । अन्नं दधि चेत् तदेव स्यात् । मनसा इच्छति चेत् शाकं सम्मेल्य पक्वं कृत्वा पिष्टपिण्डम् आलोडयति स्म । नो चेत् तण्डुलपिष्टेन रोटिकां कृत्वा नारिकेलोपसेचनेन दिनं यापयति स्म । कियत्यपि बुभुक्षा भवति काळिङ्गस्य गृहे तु न खण्डमपि खादति स्म ।

काळिङ्गः तस्य शेड्समीपं गत्वा अपृच्छत् – 'त्वं तत्र कुतः गतः आसीः ?'

एतेन प्रश्नेन मल्लेशः भीत इव भासितम्, 'अपराधः अभवत् महोदय !' इत्यवदत् ।

'अपराधः इति न मया पृष्टम् । तत्र किं किं कृतवन्तः वद ।'

स्वहस्ते स्थितम् अन्नपात्रम् अधः संस्थाप्य सः अवदत् – 'किमपि न कृतं महोदय ! मन्दिरस्य पुरतः एकवारं शवम् अवतारितवन्तः । तावदेव पूजकः आगत्य द्वारम् उद्घाटितवान् । पूर्वमेव आगत्य पूजां समाप्य गतः आसीत् इति भासते तावत् । शवस्य उपरि उद्धरणमितं तीर्थं प्रक्षिप्य प्रसादपुष्पं स्थापितवान् । तदनन्तरं शवं नीत्वा गर्ते लगितवन्तः।

'कस्मिन् स्थले लगितम् ?'

'मन्दिरस्य पृष्ठतःव्याघ्रगुहा अस्ति खलु, ततः अपरपार्श्वे गर्तं खनित्वा लगितवन्तः । तस्मिन्नेव स्थले खलु पुण्यकोटिधेनुं व्याघ्रः प्रतिरुध्य त्वां खादामि इत्यवदत् ? अहं गोष्ठं गत्वा वत्सं क्षीरं पाययित्वा आगच्छामि इति धेन्वा शपथप्रमाणं कृतमपि तत्रैव खलु ?'

'शवस्य लगनानन्तरं किं कृतम् ?'

'पूजकः स्नात्वा मन्दिरे पुनरेकवारं घृतवर्त्या मङ्गलनीराजनं कृतवान् । घटद्वयं स्वीकृत्य द्वौ पुरुषौ कल्याण्यां जलं पूरयित्वा आगतान् सर्वान् जनान् तटे उपवेश्य

शिरसः उपरि अभिषिक्तवन्तौ ।'

मल्लेशस्य शिरः अपि आर्द्रम् आसीत् । शेड्पुरतः रज्जोः उपरि तस्य काखि-अर्धोरुकम्, युतकं च प्रसारिते दृष्टे । इदानीं सः खण्डपटम् आवेष्ट्य युतकं धृतवान् आसीत् । काळिङ्गः पुनः किमपि न भाषितवान् । स्वगृहम् आगतः । देवस्थानस्य दिशि परावृत्य दर्शनेन तत्र आगताः जनाः सर्वे प्रस्थाय गताः इति अभासत ।

## 2

तायव्वायाः मरणानन्तरे एकादशदिने कूपकार्याय न कोऽपि आगतः । तस्य कारणभासनं काळिङ्गस्य कष्टं नासीत् । अनिरीक्षितम् अपि नासीत् । किन्तु काळिङ्गेन तद्विषये किञ्चिदपि नालोचितम् आसीत् । तस्मिन् दिने तस्य मातुः श्राद्धं प्रवर्तितव्यम् आसीत् । तत्तु ग्रामे एव सम्पद्यते । ग्रामजनाः एव सर्वं व्ययम् अपि सम्पाद्य कुर्युः । अथवा गृहस्थितानि धानाधान्यानि अपसार्य व्ययं कुर्युः । किन्तु कोऽपि काळिङ्गं नाहूतवान् । स्वयमेव गच्छति चेत् कोऽपि तं न भाषेत अपि ।

तद्दिने प्रातः अष्टवादनसमये दश पञ्चदश वा वृषभशकटानि काळेनपल्ल्याः गिरिपार्श्वं गतानि । महामहापात्रैः धान्यस्यूतैः काष्ठैश्च पूर्णानि तानि काळिङ्गः स्वनूतनगोष्ठगमनावसरे दृष्टवान् । तिथिं देवस्थानस्य समीपे आचरन्ति इति अर्थावबोधः तस्य अभवत् । तावति एव काले मोटर्याने क्षीरभाण्डानि सम्प्रेष्य आगच्छन्तं मल्लेशं सः अपृच्छत् – 'अद्य मन्दिरसमीपे किं किं प्रचलति ?'

'प्रातः आरभ्य मन्दिरे पूजा भविष्यति इति । सायं समन्ततः स्थितानां ग्रामजनानां महासन्तर्पणम् इति । समस्तजातिजनानां मेलनेन पञ्चषसहस्रजनपर्यन्तं मिलिताः भवन्ति इति । अस्मज्जातीयानाम् अपि पृथक् पाकं कारयन्ति इति श्रुतम् । अहं भोजनार्थं तत्रैव गच्छामि ।'

काळिङ्गः तम् इतः अग्रे न पृष्टवान् । ततः स्वगृहं गतः । हिल्डा पाकगृहे आसीत् । तां सः अवदत् – 'गच्छतु, अस्मिन्नवसरे वयं ताल्लूकुकेन्द्रम् अथवा अन्यं कमपि ग्रामं गत्वा सर्वकारीयप्रवासिमन्दिरे उषित्वा श्वः आगच्छाम ।'

'किमिदं तथाभूतावस्थायाम् ?'

'अत्रैव देवस्थानसमीपे अस्मन्मातुः श्राद्धम् आचरन्तीति श्रुतम्। सायं पञ्चषसहस्र–जनेभ्यः सन्तर्पणं भविष्यतीति। ते अस्मान् न आमन्त्रयन्ति, वयं गताश्चेत् न सङ्गमयन्ति च। अस्माकम् अत्र अवस्थानं कुतोऽपि न मह्यं रोचते। एवं गमनेन अस्माकम् अपि किमपि परिवर्तनं भवतीव।'

'ते तथा कुर्युः इति वयं कुतः भीताः गच्छेम ? अस्मद्गृहे अस्माकं भवने कस्मादस्ति भीतिः ?'

'भीतिः इति न। अत्र तिष्ठामि चेत् मम मनसः शान्तिः न तिष्ठेत्। तूष्णीं चलतु।'

हिल्डायाः इदानीं सप्तमः मासः पूर्णः भवति स्म। तथापि मोटर्यानेन तस्याः प्रयाणे न कोऽपि अन्तरायः अस्ति। जाकः सद्यःकाले आतङ्कितः इव अस्ति। जमालस्य तत्पत्न्याश्च परित्यज्य गमनानन्तरं तस्य सहचरः एव नासीत्। नूतनतया आगतः मल्लेशः जाकस्य विषये प्रेम न दर्शयति स्म।

दशवादने एकं मोटर्यानम् आसीत्। गृहद्वारस्य तालिकाबन्धं विधाय जागरूकतया अवलोकनीयम् इति मल्लेशम् उक्त्वा ते यानमार्गसमीपम् आगताः। हिल्डा अपृच्छत् – 'मया एतेषां जनानां पद्धतिरेव न अवगम्यते। एतद्देशे अन्नाभावः अत्यधिकः इति वदन्ति। किन्तु अत्र जायमानं सामूहिकभोजनम् अन्यत्र कुत्रापि न भवति। विवाहश्चेत् चतुःसहस्र–जनाः। मरणं चेत् चतुःसहस्रजनाः। अद्य पञ्चसहस्रजनाः सङ्गताः भवन्ति इति भवान् वदति। अस्मद्देशे इव अत्र भोजनस्थाली, फोर्क्, चमसः – इत्येतेषां सम्पादनस्य आवश्यकता नास्ति। वन्यपत्रस्य उपरि पाकं परिवेषयन्ति। सर्वं सुकरम् इति सत्यम्। किन्तु एतावन्तः जनाः किमर्थं भोजयितव्याः ?'

एतस्य प्रश्नस्य जनानाम् उत्तरं काळिङ्गेन ज्ञातमस्ति। किन्तु तत् तां विस्तरेण वक्तुं श्रद्धा स्वयं तस्य नासीत्।

'एतत् सर्वं व्यर्थं खलु ?' – इति तया पृष्टे सः 'आम्' इति 'न' इति वा न उक्तवान्। तस्य भाषितुं मनः नास्ति इति सा मौनेन स्थिता।

हिल्डा ताल्लूकुकेन्द्रस्य वैद्यया स्वं परिक्षितवती। इदानीं तत्र एकं चित्रमन्दिरं प्राप्तम् आसीत्। तत्र गत्वा त्रयः अपि चलचित्रं दृष्टवन्तः। तत् किञ्चन कन्नडचित्रम्। तत्रापि देवदेवता–प्राणिनां च सम्भाषणम्, परःसहस्रजनानां भोजनम् – इत्यादीनि दृश्यानि

एव ।

तां रात्रिम्, अनन्तरदिनस्य मध्याह्नमपि प्रवासिमन्दिरे व्यतीत्य ते सायङ्काले मोटर् यानेन स्वफार्म्गृहं प्रत्यागताः । सायं कार्यकर्माणि समाप्य मल्लेशः यदा शेड्स्थलम् आगतः तदा काळिङ्गः अपृच्छत् – 'ह्यः सर्वमपि कथं संवृत्तम् ?'

'शोभनम् आसीत् । महापर्व एव कृतम् आसीत् । पञ्चवस्त्रं ताम्रकलशः, स्थाली इति किमपि किमपि दानं वितीर्णम् । आम्बा सा मरणात् पूर्वमेव गोदानं कृतवती, नदीतरणार्थम् इदानीं पुनः दानवितरणं नावश्यकम् इति शास्त्रिणा उक्तम् । ग्रामाय एकः वृषभः परित्यक्तः।'

'वृषवत्सं कः दत्तवान् ?'

'यः कोऽपि न । अम्बायाः दानावसरे मातृविहीनः वत्सः आसीत् खलु' – इति वदन् मल्लेशः तावति एव काले स्वजिह्वां नियन्त्र्य मौनम् अतिष्ठत् । स्वामिनः गृहे हत्वा भक्षितायाः गोः वत्सः इति पृष्ठभूमिका अन्येभ्यः तेन ज्ञाता आसीत् । काळिङ्गेन एव 'अस्तु, चिन्ता मास्तु, वदतु' इत्युक्ते सः अवदत् – 'तस्य ऊरुमूले उभयत्रापि त्रिशूलमुद्रां कृतवन्तः । तस्य रज्जुं विमोचितवन्तः । तथापि सः तेन सङ्गतायाः कस्याश्चन गोः स्तन्यं पिबन्नेव धावति स्म । 'इतोऽपि एकं वर्षम् एवमेव तिष्ठतु । तदनन्तरं चरणक्षेत्रे त्यजाम' इति शास्त्री अवदत् । तथापि अद्य प्रभृति तस्य गले रज्जुः न बध्यते इति ।'

'किमन्यत् प्रवृत्तम् ?'

'न किमपि ।'

'मम विषये केनापि भाषितं किम् ?'

मल्लेशः किमपि उत्तरं न दत्तवान् । काळिङ्गेन पुनः पृष्टेऽपि तूष्णीम् आसीत् । 'वदतु तावत्, भवते न किमपि करोमि' इति तृतीयवारम् अनुरोधे कृते सः अवदत् – 'कस्मात् बीजात् जातः मत्पुत्रः सः । पितामहः गोः मन्दिरं निर्मितवान् । एषः वेश्यापुत्रः गां हत्वा भक्षयति । मृता तु पुण्यवती । तया नूनं स्वर्गः प्राप्यते । एतस्य चण्डालवेश्यापुत्रस्य, तस्य पत्न्याश्च मुखे क्रिमिः पतति इत्येवं किमपि किमपि वदन्तः भोजनं कुर्वन्ति स्म ।'

'के ?'

'सर्वेऽपि ।'

तावता कालेन होन्नः तत्र आगतः । एतावत्पर्यन्तमपि वेङ्कटरमणस्य दत्तिक्षेत्रं वारांशेन कर्षयतः तस्य मस्तकं ह्यः एव तावत् पूर्णतया मुण्डितमिव भासते स्म । काळिङ्गात् स्वल्पदूरे स्थित्वा सः अवदत् – 'क्षेत्रे रागी, मुद्गाः वृद्धिं प्राप्ताः । पौषमासे क्षेत्रम् आलोडितं भवेत् । वाटिकायां फलानि प्रवृद्धानि । तानि पातयितव्यानि । कुत्र आनीय स्थापयानि ?'

'किं क्षेत्रम् ? का वाटिका ?'

'वेङ्कटरमणप्पस्य खलु । ज्योतिषिवर्यः एतत् क्षेत्रं सर्वं तस्मै प्रतिदत्तम्, इतःपरं किमपि कर्तव्यं चेदपि तत्सन्निधौ एव निवेदय' इत्यवदत् ।'

'कदा एवम् अवदत् ?'

'इतः द्वादशदिनेभ्यः पूर्वमेव अवदत् । ततःपरम् अम्बायाः मरणानन्तरं मम काष्ठच्छेदनं, वस्तुसम्पादनम् इति सर्वं कार्यम् आसीत् । अहं क्षेत्रदिशि न गतः एव । अद्य प्रातःकाले ज्योतिषिवर्यस्य गृहं गतः । सः 'भवन्तं तद्दिने उक्तवान् न ? मया एतत् क्षेत्रं परित्यक्तम् । इतःपरं किमपि स्यात् तमेव पृच्छ' इत्यवदत् ।

तस्य किम् उत्तरं वक्तव्यम् इति काळिङ्गेन न ज्ञातम् । तावति एव तस्य कुतोऽपि शिरश्चङ्क्रमणम् इव अभवत् । तत्रैव स्थीयते चेत् पतामि इति मत्वा सः शीघ्रं शीघ्रं स्वगृहम् आगत्य सोफाम् अवलम्बितवान् । पञ्चनिमेषेषु सान्त्वनावसरे होन्नः तत्रैव आगत्य अतिष्ठत् । 'अहम् अनन्तरं वदामि । त्वम् इदानीं गच्छ' इत्युक्त्वा काळिङ्गः तं ग्रामं प्रेषितवान् । तस्य गमनानन्तरम् उत्थाय मल्लेशस्य शेड्स्थलं गत्वा अपृच्छत् – 'एषः होन्नः शिरः कुतः मुण्डितवानस्ति ?'

'ह्यः आम्बार्यायाः तिथ्यर्थं मुण्डितवान् अस्ति, शास्त्रविधिः इति । पुत्रस्य स्थाने स्थित्वा कर्मकारकः कः ? इति वेङ्कटेगौडः अपृच्छत् । 'यप्पा, मां क्षीरं, घृतं च प्रदाय गौडव्वा पालितवती । अहमेव तस्याः पुत्रः । अहं मुण्डितो भवामि' इत्यवदत् एषः । तथैव कुरु इति ज्योतिषिवर्यः अवदत् ।'

काळिङ्गस्य शरीरे पुनः अहितानुभवः अभवत् । पुनः शिरश्चङ्क्रमणं स्यादिति भयेन सः स्वगृहम् आगत्य सोफायाः उपरि आलम्बितवान् । जाकः आगत्य तस्य ऊरू आधृत्य अतिष्ठत् । पितुः मनसि जायमानायाः वेदनायाः अर्थबोधः तस्य नाभवत् । क्रीडने, भोजने, भाषणे च कोऽपि सहचरः नास्ति इति सः तथैव समीपम् आगतः । तस्य पिता 'मम शरीरस्वास्थ्यं नास्ति । अन्तः मम्मीसमीपं गच्छ' इत्युक्त्वा प्रेषितवान् ।

तावति एव वेङ्कटेगौडस्य पुत्रः माटः बहिर्द्वारम् आगत्य अतिष्ठत् । जानुनोः आवारकम् अर्धोरुकं धृत्वा पूर्णबाहुकं हरितवर्णयुतकं धृतवान् सः पादयोः घने पादरक्षे धृतवान् आसीत् । कर्णयोः अरुणताटङ्कौ, दक्षिणहस्तस्य मणिबन्धे अङ्गुष्ठघनः सुवर्णवलयः विराजते स्म । धृष्टपुष्टाभ्याम् ओष्ठाभ्यां युक्तस्य तस्य हस्ते कश्चन दीर्घः वेणुदण्डोऽपि आसीत् । कलहाय सज्जस्य इव आसीत् तस्य अवस्थानभङ्गी । किन्तु सः कलहवचनं न भाषितवान् । स्वस्य अर्धोरुककोषात् एकां घनकुञ्चिकां निःसार्य काळिङ्गस्य पुरतः यथा पतेत् तथा क्षिप्त्वा अवदत् – 'तव गृहं तालिकया बद्धमस्ति तावत् । आगत्य द्वारम् उद्घाट्य या कापि सामग्री अस्ति चेत् नय । एतावद्दिनपर्यन्तं तव गृहस्य वृषभान् तत्रैव बध्नन्ति स्म । ह्यः आरभ्य 'तानपि गोष्ठे एव बध्नन्तु । नो चेत् किमपि कुर्वन्तु' इति मम पिता तव गृहभृत्यान् उक्तवान् अस्ति । आवश्यकं चेत् तान् वृषभान् हत्वा भक्षयितुं शक्नोषि ।'

माटः अर्धनिमेषं यावत् भाषितं निवारितवान् । काळिङ्गेन किमपि नोक्तम् । अनन्तरं माटः एव किमपि स्मरन्निव अवदत् – 'पश्य, तव मातुः मरणानन्तरं गृहे व्रीहिः, रागिधान्यम् मुद्गधानाः मरीचिकाः इति किं किं आसीत् तत् सर्वं तथैव अस्ति । कोऽपि मत्पत्नीपुत्रः न स्पृष्टवान् । तव मातुः तिथिं ग्रामजनाः सर्वे धानाधान्यानि वितीर्य कृतवन्तः । होन्नः तस्य भक्तिरिति चतुःपलमितं रागिधान्यम्, स्यूतद्वयमितान् तण्डुलान्, पञ्चाशत् रूप्यकाणि च दत्तवान् । 'अस्मन्मातुः मरणानन्तरम् अस्मद्गृहस्य धानाधान्यानि ग्रामजनाः स्वीकृतवन्तः' इति त्वं श्वः अस्मान् कर्हिचित् आपादयेः, जागृहि । तत् किमपि अस्ति चेदपि द्वारम् उद्घाट्य त्वमेव पश्य । मया इदानीं कुञ्चिका आनीय दत्ता इत्यत्र ग्रामजनाः सर्वे साक्षिणः सन्ति । हूँ ।'

एतावत् उक्त्वा सः स्वकर्तव्यं समाप्तम् इतीव ततः प्रतिनिवृत्य गतः । सः हस्ते दण्डं परिगृह्य आगतः कुतः इति काळिङ्गः आलोचितवान् । अहं कर्हिचित् तेन साकं कलहं कुर्यामिति निरीक्ष्य आत्मरक्षणार्थम् आनीतः स्यात् ननु ?

काळिङ्गः तद्दिने पूर्णतः केनापि साकम् असम्भाष्य मौनेन शयितः । वेङ्कटरमणः, ग्रामजनाः, न केवलम् एतावत्, एषः गिरिः, इयं सानुः, एषः वीजन् वातः अपि आत्मानम् एकाकिनं विधाय पृथक् गताः इव तस्मिन् भासते स्म । आत्मानं द्रष्टुं कोऽपि आगच्छति चेदपि तेषां स्वस्य च कोऽपि सम्बन्धः नास्ति इत्यावेदयितुम् एव आगच्छन्ति इव तस्य भासते स्म ।

तस्मिन् सायङ्काले द्वौ कोलवृषभौ तत्र आगतौ । एकं रामम् एकां सीताम्बां च सञ्चोद्य आगतयोः तयोः एकः त्रयोविंशति–चतुर्विंशतिवयाः बालकः । अन्या च बालिका । सप्तदशाष्टादशवयस्का सा कक्षे शिशुं कञ्चन आरोपितवती आसीत् । कुतूहलकारकाणि तयोः धेनुवृषभयोश्च वेषभूषणानि हिल्डा जाकश्च पश्यन्तौ स्थितवन्तौ । 'काळिङ्गगोपगौडस्य गृहम् एतदेव किम् ?' इति ताभ्यां पृष्टं श्रुत्वा काळिङ्गः बहिः आगतः । 'मृतस्य वृद्धगौडज्जस्य पौत्रः त्वमेव किं पुट्टगौड ?' इति सः स्वकोलवृषभशैल्या पृष्टवान् ।

'कुतः ?'

'पश्य, आवयोः विवाहार्थं वृद्धगौडज्जेन पञ्चाशद्रूप्यकमितम् ऋणं दत्तम् आसीत् । अस्मत्सीताम्बायाः पुच्छं परिगृह्य आवाभ्यां प्रमाणं कृतम् आसीत् । तव निधिं त्वं स्वीकुरु' इति सः स्वप्रावारकस्य अन्तःकोषात्, धनपत्रबन्धकं किञ्चन वस्त्रं निष्कास्य अवदत् – 'धनस्वीकारावसरे आवाभ्यां सीताम्बायाः पुच्छं संस्पृश्य प्रमाणं कृतम् आसीत् । इदानीं 'निधिः प्राप्तः' इति त्वमपि तस्याः पुच्छं गृहीत्वा वद ।'

काळिङ्गः किमपि भाषितं विना मौनेन स्थितः आसीत् । स्वदक्षिणहस्तेन धनपत्राणि पुरः वितरन् वृषभस्वामी अपृच्छत् – 'कुतः पुट्टगौड ? निधिः नावश्यकः किम् ?'

'अस्मत्पितामहेन तुभ्यं दत्तम् अहं कथं जानामि ?'

'मिथ्या एव वयं तुभ्यं कुतः निधिं दद्मः ? स्वीकुरु ।'

काळिङ्गः हस्तं पुरतः प्रसारितवान् । 'प्रथमतः धेनोः पुच्छं संस्पृश्य, निधिः प्राप्तः इति वद' इति वृषभस्वामिना अनुरोधः कृतः ।

'पुच्छं संस्पृश्य तथा न वदामि चेत् किं करोषि ?'

'निधिं न ददामि । तेनैव अस्मत्सीताम्बायै एकां पट्टशाटिकां क्रीत्वा धारयामि ।'

'अहम् अत्र अस्मीति केन उक्तम् ?'

'ग्रामे तावत् तव गृहं गतौ । ग्रामजनैः एव उक्तम् ।'

'किमन्यत् उक्तम् ?'

'किमन्यत् उक्तमिति मम कुतः प्रवादः ? तव निधिं स्वीकुरु ।'

काळिङ्गः आतङ्कितः इव जातः । एषः कोलबसवः अपि सर्वं जानाति । ग्रामजनैः स्वविषयकम् आपादनम् एतयोः अपि निवेदितम् । एतौ इतःपरं देशे सर्वत्र वदन्तौ

सञ्चरतः – इति सः आलोचयितुं प्रवृत्तः । तावदेव हिल्डा अपृच्छत् – 'युवां ततः दिशः आगतौ ननु, कस्मात् प्रदेशात् आगतौ ?'

'तव श्वशुरेण निर्मितं मन्दिरं गतौ । अस्मत्सीताम्बायाः एव मन्दिरं तत् । दृष्ट्वा प्रणम्य आगतौ ।'

'इदानीं तत्र द्वारस्य उद्घाटकः कः ?'

'पूजकः शास्त्री तत्रैव तिष्ठति । मन्दिरे उपविश्य मन्त्रं पठन् अस्ति ।'

एतद्वचनं शृण्वन् काळिङ्गः पुनरपि आतङ्कितः इव जातः । सः अवदत् – 'पश्य, एतत् धनं मम नावश्यकम् । तत् तस्मै देवस्थानपूजकाय देहि ।'

'आर्य, पितामहस्य निधिः पौत्रे प्रापयितव्यः । त्वमेव स्वीकुरु ।'

'मम नावश्यकम् इति वदामि खलु ।'

'मास्तु इत्युक्ते वयं न त्यजामः । पितामहेन दत्तं दत्तिक्षेत्रमेव त्यक्तवान् पूजकः एतं निधिं स्पृशति किम् ?' इति वृषभस्वामिना उक्ते तस्य पत्नी पतिम् – 'तव किमर्थं तत् सर्वम् ? तूष्णीं तिष्ठ' इत्यवदत् । वृषभजनः स्वहस्ते स्थितानि धनपत्राणि काळिङ्गस्य पुरतः संस्थाप्य, 'तव निधिः प्राप्तः इति अनुक्तेऽपि अहं दत्तवानेव । मम सीताम्बा एव साक्षिभूता' इत्युक्त्वा 'चल रामण्ण, गच्छाम' इति वृषभं संज्ञाप्य प्रस्थितः एव । तस्य पत्नी सीताम्बाम् अनुगता ।

काळिङ्गः गरपीडित इव स्थितः एव आसीत् । एतस्य कोलवृषभस्य अधिक-प्रसङ्गिभाषणाय अधिकारः केन दत्तः ? तस्य कपोले ताडयेयम् इतीव कोपः उदितः आसीत् । किन्तु तावदेव तौ बहुदूरं गतौ आस्ताम् । काळिङ्गः तस्यां दिशि विंशतिपदानि न्यस्तवान् । किन्तु हिल्डा 'कुत्र गच्छति ननु ?' इत्यपृच्छत् । तस्यै उत्तरं वक्तुं स्थित्वा प्रत्यावृत्य दृष्टवान् । किन्तु किं वक्तव्यम् इति न ज्ञातम् । तावति काले तस्य ताडनचिन्तनम् एव अपगतम् । अभाषितः एव गृहम् आगत्य मौनेन मञ्चे शयितः अभवत् ।

## 3

मातुः मरणानन्तरं काळिङ्गस्य स्वयम् अनाथः इत्यभासत । मातुः माणानन्तरं वत्साः अनाथाः भवन्ति, नाम आत्मीयतया परिपश्यन्तः न भवन्ति इत्यर्थकं वचनं स बाल्यवयसः

अपि श्रुतवान् आसीत् । किन्तु तस्य अर्थः इतोऽपि अगाधः इति इदानीं तस्य बुद्धौ भासितम् ।

तथा आलोच्यते चेत् तायव्वायाः जीवितावसरे तस्य तस्याश्च प्रकटितः सम्बन्धः नासीत् । एतया मूकया सह भाषणीयं किमस्ति इति तेन आलोचितम् इत्यपि काचन अवस्था आसीत् । तथैव सः विद्यावान् अभवत् । अनन्तरं तया सह सम्भाषणीयविषयः एव नासीत् । अमेरिकातः आगत्य नूतनफार्म्कार्यस्य प्रारम्भणानन्तरं सा तस्य कर्मणः एकैकस्मिन् अपि घट्टे विरोधपक्षम् आवहत् । गवां घातकेषु विक्रयणात् आरभ्य, अन्ते देवस्थानस्य कल्याणीतः पम्प्यन्त्रस्य निष्कासनपर्यन्तं सा ग्रामजनैः, वेङ्कटरमणेन च सह सङ्गता आसीत् । तस्यां तस्य अप्रकटितः कोपः सम्भृतः ध्मायन् आसीत् । किन्तु तावति एव मृता अभवत् । मरणानन्तरम् अपि ग्रामजनाः तं दूरे परित्यज्य, तस्याः उत्तरक्रियाम् अनुष्ठाय, सः तत्कुटुम्बस्य सम्बद्धः एव न इति समन्ततः सर्वेषु ग्रामेषु प्रकटितवन्तः ।

काळिङ्गः अपमानेन तपति स्म । केवलम् अपमानश्चेत् सः सोढुम् अशक्ष्यत् । किन्तु एतस्यां भूमौ, अस्मिन् वृत्ते, अन्ततः अस्मिन् देशे एव स्वस्य यः कोऽपि नास्ति इतीयं भावना तं निमज्जितवती । महाविद्यालये पठनावसरे दशाधिकैः मित्रैः सह क्रीडित्वा उत्तमक्रीडकानां सङ्घटनं रचितवान् आसीत् । तेन अमेरिकातः आगमनानन्तरम् अत्र एकाकिता अनुभूयते । किन्तु स्वमातुः जीवितपर्यन्तम् अपि तस्य ग्रामः, गृहं, ग्रामजनाः तस्य मानसे जीविताः आसन् । गोवधहेतोः अपराधदण्डप्रदानानन्तरं, स्वयं रक्षिभटेषु अनिवेद्य तं प्रसङ्गं तत्रैव समापयेयं चेत् वरम् आसीत् इति द्वित्रवारम् आलोचितम् । किन्तु तथा निष्प्रतीकारं स्थीयते चेत् अग्रिमदिनेषु कदापि ग्रामजनाः कुचेष्टितं कर्तुं धैर्यं वहेयुः इति शङ्काम् अपाकर्तुम् अशक्तः आसीत् । एतावति कृतेऽपि ग्रामजनान् यस्मिन् कस्मिन्नपि अवसरे आक्रष्टुं शक्येत इति सुप्तः आत्मविश्वासः तस्मिन् आसीत् । किन्तु मातुः मरणात् सोऽपि निपतितः ।

समग्रे अस्मिन् परिसरे सः एकाकी आसीत् । भृत्याः केवलम् उदरम्भरणाय श्रमकर्म कुर्वन्ति । संस्कारेण श्रद्धया च ते कदापि एनम् आत्मीयतया न भावयेयुः । अन्यः वेङ्कटरमणः । येन केनापि सह तस्य सम्बन्धः पुनः उज्जीवेदपि, किन्तु अनेन सह तु पुनः प्रारम्भस्य सम्भावना एव नास्ति । ग्रामजनानां विषये आलोचनावसरे काळिङ्गस्य

स्वल्पमपि भयं न भवति स्म । किन्तु वेङ्कटरमणस्य आलोचनम् उदितं चेत् अज्ञातकारणमेव किमपि भयम् आवृतं भवति। शालाकार्यम् एतत्कारणेन परित्यक्तवान् । दत्तिक्षेत्रम् अपि तादृशेनैव धार्ष्ट्येन क्षिप्तवान् अस्ति । तत् त्यक्तव्यम् इति अहं न निवेदितवान् । 'भवान् ग्रामजनपरत्वं वहन् मम अनिष्टं कर्तुं प्रवृत्तश्चेत् भवतः क्षेत्रम् अपगच्छेत्' इति केवलं प्रबोधकं वाक्यम् उक्तम् इति तस्यैव क्षेपणे निर्णयः कुतः कृतः तेन ?क्षेत्रं गतं चेदपि पूजा न परित्यक्ता। तस्य आरम्भतः एव देवे भक्तिः, पूजा, आचारविचाराः वा अत्यन्तम् इष्टाः । किन्तु उदराय नास्ति चेदपि प्रतिदिनं सार्धैकमैल् दूरं पद्भ्याम् आगत्य, पूजां विधाय गच्छति खलु । मम विषये तस्य माता, पत्नी च किमिति भावयन्त्यौ स्यातां वा !

कस्मिंश्चित् दिने काळिङ्गः सहजतया देवस्थानदिशि गतः । काळेनपल्ल्याः सामान्यतः चत्वारिंत् पञ्चाशत् वा पुरुषाः कुद्दालानि कुठाराणि च परिगृह्य किमपि कर्म कुर्वन्ति स्म। समीपम् अगत्वा काळिङ्गः दूरतः एव वीक्षितवान्। फार्म्तः कल्याणीं, देवस्थानं गिरेः तत्पार्श्वं वा गन्तुं यथा न शक्येत तथा सर्वेऽपि सङ्गम्य कत्तालवृतिं रचयन्ति स्म । पङ्क्तिशः खातं खनित्वा कत्तालक्षुपान् आनीय आरोपयन्ति स्म । न तावता अलम् इतीव तेषां मध्ये गोबलिदण्डान् आरोप्य वेणुकण्टकानाम् एकः बन्धः विधीयते स्म । वेङ्कटरमणः एव कार्यस्य पर्यवेक्षणं कुर्वन् आसीत्। एतैः आरोपितानां कत्तालक्षुपाणां काश्चन स्त्रीभृत्याः कल्याणीतः जलम् आदाय सिञ्चन्त्यः आसन् ।

'त्वम् इतः आगच्छेः । अस्य देवस्थानस्य, कल्याण्याश्च प्रदेशं त्वम् आक्रामेः, जागृहि इति तैः वृतिः रच्यमाना अस्ति' इति काळिङ्गस्य तत्क्षणम् अर्थबोधः जातः । इतःपरं तत्र अनवस्थाय सः गृहम् आगत्य मञ्चस्य उपरि शयितः । स्वेन तत्रैव स्थीयते चेत् ग्रामजनैर्वा वेङ्कटरमणेन सः लक्षितो भवेत् । लक्षितश्चेत् किं स्यात् ? – एतं प्रश्नं सः आलोचयितुं न शक्नोति । किन्तु तेषां दृष्टिगोचरो भवितुं तेन अशक्तम् अभवत् ।

सः एकघण्टातः अधिककालं तथैव शयितः आसीत् । अनन्तरं तम् अन्विष्यन्ती इव अन्तः आगता हिल्डा अवदत् – 'भवान् अत्रैव आसीत् किम् ? अहं कियद्वा अन्विष्टवती।'

सः मौनेन शयितः आसीत् । तस्य समीपे एव किमपि उपधानम् आधृत्य उपविष्टा हिल्डा अवदत् – 'पश्यतु, प्रसूतये इतःपरं सप्तदश अथवा अष्टादश दिनानि

अवशिष्टानि । अस्मिन् समये मम पर्याप्तां विश्रान्तिं परिकल्प्य मनसः अपि शान्तिकल्पनं भवतः कर्तव्यम् । भवता एषु दिनेषु किमपि न क्रियते । सर्वमपि अहम् एका एव कथं करवाणि ?'

सः इतोऽपि मौनेन शयितः आसीत् । सा एव अभाषत – 'कूपस्य कर्म समाप्तमस्ति । इतःपरं तस्य पम्प्योजनम् एकमेव अवशिष्टम् । तत् अस्मिन् समये अहं कर्तुं न शक्नोमि । सिमेण्ट्कर्मकरम् आमन्त्र्य भवान् कृत्वा न समापयेत् ? भवतः ग्रामजनैः धूमक्षुपाणां ध्वसनात् आरभ्य, नाम चत्वारः मासाः भवेयुः खलु, समग्रं क्षेत्रं नष्टं तिष्ठति । एवंरीत्या आर्थिकोपेक्षां वहतः मनुष्यस्य जीवनमेव किञ्चन लज्जास्पदम् । पम्प्यन्त्रेण जलम् उद्घृत्य भूमिं प्रथमतः आर्द्रां करोति चेत् मल्लेशः ट्र्याक्टर्यन्त्रेण कर्षति । अस्मिन्नवसरे किम् आरोपणीयम् इति चिन्तितं किम् ?'

सः इदानीमपि न भाषितवान् । पुनः हिल्डा एव अवदत् – 'चिन्तां मा करोतु । अतीते अवसरे भूमौ गोभरः पूरितः आसीत् । उत्पन्नं पादांशतः नष्टम् । गोभरस्य सारः न नष्टः । अन्यच्च चतुर्मासेभ्यः मृत्तिका संरक्षिता अस्ति । अस्मिन् अवसरेऽपि तमाखुम् एव आरोपयाम । गतावसारात् उत्तमजातीयानि बीजानि आनयतु । गतावसरस्य नष्टस्य पूरणदायकः लाभः न सम्पाद्येत चेत् मम अत्र अवस्थानेन किं प्रयोजनम् ?'

तस्याः वचनस्य श्रवणात् तत्क्षणम् एव काळिङ्गे उत्साहः सम्प्राप्तः । उत्थाय उपविष्टः । किन्तु सम्भाषितुं मुखोद्घाटनात् पूर्वमेव सः उत्साहः अन्तर्गतः इति म्लानमुखः सन् मौनेन उपविष्टः । हिल्डा अपृच्छत् – 'कालिङ्ग्, डियर्, भवतः किम् अभवत्, वदतु ।'

सः तूष्णीम् आसीत् । तस्य शिरः आश्लिष्य, स्ववक्षसि उपगूह्य आद्रियमाणा सा अव्यक्तं जापितवती – 'कतिदिनेभ्यः भवान् एवमेव स्थितः, मम वत्स, वदतु ।'

अनेन वचनेन काळिङ्गस्य दुःखम् उच्चाल्य निःसृतम् । स्वमुखं तस्याः वक्षसि गोपयन् सः अवदत् – 'एकाकिता, समग्रेऽस्मिन् प्रपञ्चे, समग्रे जीवने अहम् एकाकी । सर्वेऽपि मां दूरे परित्यक्तवन्तः । मया कृतं दृष्ट्वा सन्तुष्यन् को वा स्यात् ?'

'कुतः तथा वदति ननु ? भवतः जीवने अहं किं नास्मि ?'

'अस्त्येव । किन्तु मम एकाकितां भवती निवारयितुं न शक्नोति ।'

हिल्डा एतेन वचनेन गम्भीरा जाता । काळिङ्गं प्रतिहतवती म्लानता इदानीं तामपि

प्रतिहतवती। किन्तु मनःस्थैर्यं सुकरतया अत्यजन्ती सा अवदत् – 'भवतः भावनाम् अहम् अवगच्छामि। मया पूर्वमेव उक्तं खलु ? एषः देशः एव तादृशः। अत्र अहमपि एकाकितया वेदनाम् अनुभवन्ती अस्मि। तत् कण्ठतः नोक्तम्। भवतापि अर्थागमनाय प्रयत्नः न कृतः। मम वचनवत् करवाम।'

'किम् ?'

'एतत् सर्वं विक्रीणामहै। यथासाध्यं धनं तत्र नयाम, चलतु। अमेरिकायां नूतनतया जीवनम् आरभामहै।'

काळिङ्गः तस्याः मुखं दृष्ट्वा सविडम्बम् इव मन्दम् अहसत्।

'कुतः ?' सा अपृच्छत्।

'मया तदपि आलोच्य परामृष्टम् आसीत्। तत्रापि अहम् एकाकी एव। कृष्णवर्णीयः इति मां ते स्वेषु पूर्णतया न सङ्गमयन्ति। न केवलं तत् एकमेव। मम मातुः मरणात् पूर्वं चेत् तथैव अहम् अकरिष्यम्। इदानीम् इतः बहिः प्रस्थातुं कियतापि यत्नेन असाध्यं भवति। मां यः कोऽपि बद्धवान् स्यात् इति भासते।'

हिल्डा तस्य वचनं गम्भीरतया पर्यालोचितवती। तस्याः नेत्रयोः अश्रु पूर्णम् अभवत्। सा अवदत् – 'काळिङ्ग, भवान् अर्थहीनं वाक्यमेव वदति खलु। एकाकिता इति वदति, अस्यां भूमौ बद्धः इत्यपि वदति ननु। भवतः एकाकितां निवारयितुम् अहमपि न शक्नोमि इत्युक्तम्। भवदर्थं मया कृतः त्यागः कियान् इत्यस्य स्मरणम् अपि नास्ति भवतः। जन्मदेशात्, अस्मदीयान् स्वीयान् सर्वान् परित्यज्य अत्र आगतास्मि। ममापि न कापि दिक्, न मित्रम्, न सहचरः। मनोरञ्जनं नास्ति। मम मातृभाषा नास्ति। एवं सत्यपि अहं क्षमया भवन्ती एतावत् कार्यं कर्म निर्वहन्ती जीवामि। भवान् कर्तव्यहीनो भूत्वा, सहैव 'मम एकाकिता भवत्या अपि निवारयितुं न शक्या' इति मम गौरवं च्यावयन्नस्ति खलु।'

काळिङ्गः कथमपि अनवगतार्थः तस्याः मुखं पश्यन् आसीत्। किमपि अन्यत् चिन्तयन्ती सा अवदत् – 'अत्र मास्तु। तत्र गच्छाम, आगच्छतु। भवान् नागच्छति चेत् अहम् एका एव गच्छामि।'

'किमिदं भाषितं वचनं भवत्या ?' अप्रतिभः काळिङ्गः अपृच्छत्।

'सरलमेव वचनम्। भवान् इव अहं जग्ध्वा, निगीर्य न वदामि। सः देवस्थानस्य

पूजकः अस्ति खलु, सः इव सारल्येन काष्ठशाखा द्विधा खण्डिता इव वदामि । जाकम् आदाय अहं स्वदेशं गच्छामि । भवान् अत्रैव तिष्ठतु । एतस्यैव देशस्य काञ्चन कन्यां परिणीय सुखेन वसतु । भवतः एकाकिता अपगच्छति । गुड् बै' – इति तम् आज्ञापयन्ती इव हस्तप्रदर्शनेन उक्त्वा सा अन्यं प्रकोष्ठं गत्वा द्वारं पिधाय सगद्गदं रोदितुं प्रारब्धवती । दिङ्मूढः इव कालिङ्गः तत्प्रकोष्ठस्य द्वारात् बहिः निश्चलः अतिष्ठत् ।

एतावत्पर्यन्तमपि मल्लेशस्य शेड्समीपे एकः एव मृत्तिकायां क्रीडन् जाकः अन्तः आगतः । तेन द्विवारं सम्बोधिता अपि माता न भाषितवती । कालिङ्गः तं नीत्वा करचरण–मुखं प्रक्षाल्य उत्पीठिकायाः पुरतः उपवेश्य भोजनाय परिवेषितवान् । स्वमातुः भोजनम् अपि समाप्तम् इति वचनानन्तरं जाकः स्थाल्यां स्थितं भक्षयितुं प्रारब्धवान् ।

द्विवादने अतीतेऽपि हिल्डा बहिः नागता । निरीक्ष्य, निरीक्ष्य श्रान्तः कालिङ्गः जाकम् आदाय शय्याप्रकोष्ठं गत्वा शयितः । अर्धघण्टायां जाकेन निद्रा प्राप्ता । मनसि जातेन आघातेन साकं बुभुक्षा अपि कालिङ्गे सङ्गता आसीत् । निद्रा न प्राप्ता । एतस्यां भूमौ तस्य सर्वेऽपि बाह्याः आसन् । किन्तु एतद्दिने तस्य पत्नी अपि बहिर्गमनवचनं भाषितवती । बहिर्गमनवाक्यम् एकदा कण्ठतः आगतः चेत् दाम्पत्यं शिथिलम् इव इति सः आलोचयति स्म । हिल्डा प्रस्थाय गच्छेदपि । तदा स्वस्य गतिः का ? तस्याः वचनम् अत्रत्यां कामपि कन्यां परिणीय... कालिङ्गस्य तत्साध्यतायाः आलोचनमेव दुर्भरम् इति भासितम् । हिल्डां सः प्रीणयित्वा परिणीतवान् । उभाभ्यामपि सङ्गम्य एतद्देशम् आगत्य कृषिसाधनेन कः कः चमत्कारः कर्तव्यः इति कल्पितम् आसीत् । इदानीं तं तिरस्कृत्य तस्याः प्रस्थानम्, स्वस्य देशीयया कन्यया साकं विवाहः !

मनः हिल्डायाः कष्टसुखदिशि अपि चलितम् । जमालस्य इतः गमनानन्तरं सा क्रमबद्धतया मांसं न प्राप्नोति स्म । गृहभृत्येषु यः कोऽपि पशुवधालयं गत्वा तत् न आनयति । सः एव कदाचित् ताल्लूकुकेन्द्रं गच्छति चेत् तदवसरे तेन यावत् आनीयते तावदेव । तस्यापि मोटर्याने आनयनावसरे कैरपि तस्य गन्धः आघ्रातः चेत् आक्षिपन्ति स्म । जमालस्य तत्पत्न्याश्च वास्तव्यावसरे कुक्कुटाः पालिताः आसन् । न्यूनान्यूनं प्रतिदिनमपि गृहाय पर्याप्तम् अण्डं तावत् लभ्यते स्म । इदानीम् अन्यैः कर्मभिः साकं कुक्कुटप्रतिपालनं हिल्डया अशक्यम् इति तेषां पालनं स्थगितम् अस्ति । भोजनखाद्येषु अण्डान्यपि न भवन्ति । जन्मतः आरभ्य स्वेन रूढम् आहारं विना, स्वजनैः, मित्रैश्च विरहिता सा अपि एकाकितया वेदनाम् अनुभवति । उभावपि एकाकिनौ । किन्तु

अन्योन्यं साहचर्यं कुतो न शक्यम् ? इत्यस्य प्रश्नस्य मनसि उदयेन कश्चन नूतनः प्रश्नः भासितः इव सः उद्विग्नः जातः । किन्तु उत्तरं न ज्ञातम् ।

## 4

सायङ्कालवेलायां हिल्डा वेदनाविष्टा इव ध्वनिः श्रुतः । काळिङ्गेन तत्प्रकोष्ठस्य द्वारे गते अन्तः कीलकम् उद्घाटितम् आसीत् । अन्तः गत्वा सः अपृच्छत् – 'कुतः, किम् अभवत् ?'

'प्रसूतिवेदना प्रारब्धा ।'

'इतोऽपि सप्तदश, अष्टादश वा दिनानि सन्ति इत्युक्तवती ।'

'उक्तमासीत् । मनसः आघातेन कदाचित् अकाले प्रसूतिः भवेत् । अद्य मया अनुभूयमानः आघातः न न्यूनः ।'

किङ्कर्तव्यतामूढः सः मूकः सन् समीपम् उपसार्य तस्याः शिरः संवाह्य 'मनसि समाधानं सम्पादय डार्लिङ्ग्' इत्यवदत् ।

'एतस्मिन् गहनारण्ये एकं व्यान् अथवा कार् स्यात् चेत् शीघ्रं कमपि चिकित्सालयं गन्तुं शक्यते । इदानीमपि शीघ्रं कञ्चन वैद्यम् आनेतुं सज्जतां करोतु, धावतु ।'

काळिङ्गः उत्थाय प्रकोष्ठतः बहिः आगतः । हिल्डा तं पुनः आक्रुश्य अवदत् – 'पश्यतु, एतादृशप्रसङ्गे पत्न्याः आवश्यकसेवाविधानं पत्युः कर्तव्यं, प्रेम्णः कर्तव्यम् इति सत्यम् । किन्तु मदर्थं भवतः तादृशकर्तव्यविधानकालः अतीतः अस्ति । निर्गतिकायाः कस्याश्चन स्त्रियः कष्टकाले सेवां कुर्वन्नस्मि इति सामान्यपौरप्रज्ञया भवान् किमपि करोतु । अधिकेषु दिनेषु भवतः साहाय्यं न प्रार्थये ।'

काळिङ्गः किमपि न भाषितवान् । तस्याः मुखे वेदना सम्भृता आसीत् । सः मल्लेशस्य शेड्स्थलं गत्वा, तत्र स्थापितां द्विचक्रिकाम् अदाय यानमार्गं गतः । मार्गे सार्धैकमैल्दूरे विद्युद्विभागस्य शिबिरम् आसीत् । ततः ताल्लूकुविद्युत्कार्यालयाय भाषितुं शक्यते स्म । शिबिरनिरीक्षकम् उक्त्वा स ताल्लूकुकेन्द्राय भाषितवान् । 'तत्क्षणं लभ्यमानं यत् किमपि यानम् उपादाय वैद्यः, अनुवैद्या च आगच्छेत् । प्रसूतिसमस्या अस्ति । गर्भिणीम् एव तत्र आनेतुं न शक्यते । वैद्यशुल्कं यावदपि भवेत्, चिन्ता न करणीया ।'

निश्चयेन वैद्यः निवेद्यते इति ताल्लूकुविद्युत्कार्यालयजनाः अवदन् । कालिङ्गः गृहं प्रति द्विचक्रिकां चालितवान् । तस्य आगमनवेलायां हिल्डायाः वेदना आधिक्यं गता आसीत् । जाकः किमपि अजानन् म्लानमनाः इव उपविष्टः आसीत् । प्रसूतेः आवश्यक्यः प्राथमिकसामग्र्यः हिल्डया एव शय्यागृहे सज्जीकृताः आसन् । कालिङ्गेन आगत्य दूरवाणीविषये उक्ते समाहितमनाः अपि सा तस्य मुखदर्शनात् तत्क्षणं पुनः उद्विग्ना जाता । 'इतः बहिः गच्छतु । मह्यं मुखं मा प्रदर्शयतु' इति उच्चैः तया आक्रोशे कृते भीतः सः प्रकोष्ठतः बहिः अतिष्ठत् । सा अन्तः वेदनाक्रान्ता आसीत् ।

अर्धघण्टायां सा तम् अन्तः आहूतवती । तस्याः शरीरं सर्वं स्विन्नम् आसीत् । अवदत् – 'पश्यतु, भवान् प्राणिशास्त्रस्य अध्ययनं कृतवानस्ति खलु । प्रसूतिः कथं भवतीति जानाति किल । मया सूचना दीयमाना भवति । तद्वत् करोतु । अकस्मात् मम प्रज्ञा च्युता चेत् भवता यथा ज्ञातं तथा करोतु । सर्वाण्यपि उपकरणानि अत्र सन्ति । जाकः बिभियात् । तं मल्लेशस्य शेड्स्थलं प्रेषयतु ।'

तावदेव शिबिरस्य कश्चन पुरुषः आगत्य बहिः उच्चैः आह्वयत् । बहिः आगतं कालिङ्गं सः अवदत् – 'वैद्यः अनुवैद्या च कार्यानेन आगच्छतः इति । इदनीं प्रस्थितौ स्तः इति ।'

कालिङ्गः अन्तः आगत्य तमेव विषयं हिल्डाम् अवदत् । किन्तु तस्याः अन्तिमस्तरस्य वेदना प्रारब्धा आसीत् । तदानीम् अपि धृतिम् अविहाय सा सर्वं विस्तरेण अवदत् । तस्मिन् काले सन्निहिते प्रज्ञा न च्युता । सः चातुर्येण सर्वम् अपि अकरोत् । सा श्रान्ता शयिता । प्रसूतः शिशुः कीदृशः इति प्रष्टुम् औत्सुक्यम् अपि नासीत् । कालिङ्गः एव शिशुं परिशीलितवान्, स्त्री । किन्तु जाकः इव न अरुणवर्णा, कालिङ्गस्य देहवर्णः सम्पादितः आसीत् तया ।

कालिङ्गेन एव पाकस्य विद्युच्चुल्लेः उपरि जलस्य तापनावसरे वैद्यस्य कार्यानं प्राप्तम् । अनुवैद्या अग्रिमं कार्यभारं निरवहत् । सद्यःप्रसूतवत्याः रक्तसम्मर्दादिपरीक्षायाः अनन्तरं वैद्यः 'अतीव उद्विग्ना अस्ति । आदौ तस्यै द्रवपदार्थं ददातु । अनन्तरं निद्रागुलिका देया' इति कालिङ्गम् अवदत् ।

अर्धघण्टानन्तरं वैद्यः तेनैव कार्यानेन प्रतिनिवृत्तः । अनुवैद्या श्वः प्रातःकालिकयानेन गच्छेत् इति निर्धारितम् । तस्याः अनुवैद्यायाः गृहे तन्माता आसीत् । सा अपि तस्यामेव वृत्तौ स्थित्वा निवृत्ता । पञ्चदशदिनावधौ आवश्यकं चेत् ताम् एते

आमन्त्र्य, गृहे स्थापयितुं शक्नुवन्ति इति, गमनागमनयोः यानव्ययः, तेन साकम् अत्र भोजनखादनव्ययं व्यवकलय्य दिने चत्वारि रूप्यकणि देयानि इति च अनुवैद्या अवदत्। कालिङ्गेन अभ्युपगतम्। श्वः स्वगमनात् अनुक्षणम् अग्रिमयानेन तस्याः प्रेषणम् इति तया आश्वस्तम्।

वैद्येन किञ्चिदधिका एव निद्रागुलिका दत्ता स्यात्। अनन्तरदिनस्य प्रातः दशवादन-वेलायां हिल्डायाः प्रबोधनम् अभवत्। तावदेव अनुवैद्या गता आसीत्। कालिङ्गः एव हिल्डायै सुपिष्टकं कार्फी च अयच्छत्। ताम् इतोऽपि निद्रा आकर्षन्ती आसीत्। तथापि एकवारं शिशोः दर्शनेन तस्याः सः आकर्षकः इति न भासितः। सद्योजातः शिशुः यथा श्वेतः उत अरुणः भवति तथा एषः शिशुः आसीत्। किन्तु अग्रे एषा शिशुः अरुणजनः अभूत्वा हिन्दुस्थानजनः इव कृष्णवर्णः एव भवेदिति तया तत्क्षणं ज्ञातम्। अधिकम् आलोचयितुं निद्राकर्षणं न त्यक्तवत्। शरीरं शिथिलं कृत्वा तथैव नेत्रे निमीलितवती।

पुनः प्रबोधनावसरे रात्रिरेव अभवत्। तावति एव अनुवैद्यायाः माता वृद्धानुवैद्या आगता आसीत्। हिल्डायाः स्तनद्वयमपि क्षीरेण पूर्णं सभारम् आसीत्। प्रथमवारस्य क्षीरं शिशुं पाययितुं न शक्यते। अनुवैद्यया दत्तेन ब्रेष्टपम्प् इत्यनेन सा एव स्तनद्वयस्यापि क्षीरं दोहितवती। ततः आहारं स्वीकृत्य शयितवत्या हिल्डया पुनः निद्रा प्राप्ता।

अनन्तरदिने प्रातः तस्याः प्रबोधनावसरे शिशुः उच्चस्वरेण रोदिति स्म। अनुवैद्या अवदत् – 'स्तन्यं पाययितव्यम्। भवती किञ्चित् पार्श्वं परिवर्त्य शयिता भवतु।'

निद्राहितनेत्रा एव हिल्डा शिशोः अभिमुखं पार्श्वं परिवर्तितवती। शिशुः स्वस्य मृदुकाकुदमध्ये मातुः चूचुकं लगितवती।

'भवती एव किञ्चित् किञ्चित् नोदयतु' इति अनुवैद्या अवदत्। किन्तु तस्य आवश्यकता एव नासीत्। क्षीरं शिशोः मुखे स्यन्दति स्म। पञ्चसु निमेषेषु शिशुः सुष्ठु चोषितुं प्रारब्धवती। तदानीम् एव एकवारं शक्तियुततया स्वमुखेन मातुः स्तनं प्रणुद्य आकृष्टवती। 'हा' इतिवत् वेदनाम् अनुभूय हिल्डा शिशोः शिरः वामहस्तेन गृहीतवती।

## 5

स्वस्मिन् जातेन मनसः आघातेन एव प्रसूतिवेदना प्रारब्धा इति हिल्डया ज्ञातम्।

किन्तु तद्दिने स्वेन कृतं निर्णयं तु सा न परिवर्तितवती। प्रसूतेः एकमासस्य द्वयोः मासयोः वा अनन्तरम् अपि जाकेन सह स्वदेशं गच्छेयम् इति दृढतया निश्चितवती आसीत्।

प्रसूतिसमये सा शिशुं सम्यक् न दृष्टवती। अनन्तरदिने प्रबोधनानन्तरं तस्याः वर्णं ज्ञात्वा किञ्चित् निरुल्लासः जातः। अग्रे कृष्णतां प्राप्स्यन्तीम् एतां शिशुम् आदाय स्वदेशे किं कर्तव्यम् ? तज्जनानां मध्ये एषा शिशुः स्वपूर्वजीवनस्य उद्भावकम् अभिज्ञानं भविष्यति – इति मनसि आलोचयन्त्याः तस्याः पुनरपि निद्रा प्राप्ता। रात्रौ प्रबोधनेन, भारवतोः स्तनयोः दोहनावसरे तत् आलोचनं पुनः उद्भूतम्। एषा शिशुः मम उदरे कुतः जाता इति विचित्रप्रश्नः तस्याः मनसि उद्गतः। स्वस्य उदरे एवंजातीयम् अपत्यं जायेत इत्यालोचनं काळिङ्गेन विवाहावसरे अनुद्गतं नासीत्। किन्तु तदानीन्तनः उत्साहः अन्यः एव आसीत्। तं परित्यज्य विभक्तायाः देशप्रतिनिवर्तनचित्रं तस्यां कल्पनायां नासीत्। एतस्याः शिशोः तत्र स्थानं नास्ति इति कथमपि तस्याः मनः इदानीं ध्वनति स्म। तस्याः शिशौ ममता नोदिता। कथञ्चिद्रीतिकया उपेक्षया ताम् एकवारम् अवलोक्य नेत्रे निमीलितवती।

किन्तु अनन्तरदिने शिशुना स्वस्तन्यचोषणावसरे सा उपेक्षा उपशान्ता आसीत्। एकवारं शक्तिपूर्णतया तया स्वमुखेन स्तनं प्रणुद्य आकर्षणेन उपेक्षायाः अन्तिमांशोऽपि उपशान्तः। न केवलं तत्, स्ववक्षसः तस्याः मुखे स्यन्दता क्षीरेण साकम् एव तस्यां ममता अपि उद्गत्य शिशोरभिमुखं प्रावहत्। पुनरपि प्रणुद्य वेदनां मा जनयतु इति तस्याः शिरः वामहस्तेन परिगृह्णती सा तां मृदुतया आलिङ्गितवती।

अनुवैद्या तत्र पञ्चदशसु दिनेषु स्थिता। तावति एव हिल्डा उत्थाय स्वकर्म कर्तुं प्रारब्धवती। अनुवैद्यायाः गमनानन्तरं तस्मिन् दिने सायं जाकः प्रेङ्खायाः समीपे स्थित्वा अनुजां लालयति स्म। काळिङ्गः बहिः स्थितायां सोफायाम् उपविश्य किमपि आलोचयन् आसीत्। तद्दिने हिल्डायाः तथाकथनात् आरभ्य काळिङ्गः तस्याः अभिमुखः न भाषते स्म। भयम्, उत निराशता, उताहो विषादः अथवा निरासक्तिः, सम्भूय सः सदा म्लानचित्तः स्वस्मिन् स्वयमेव आलोचयति स्म। 'पितरम् आह्वय' इति हिल्डा जाकम् उक्त्वा प्रेषितवती। कर्तव्यबद्धः इव अन्तः आगतः काळिङ्गः। तस्य बाहुम् उपादाय स्वमञ्चे उपवेश्य 'कूपस्य कर्म कियत्पर्यन्तं प्राप्तम् ?' इति सा अपृच्छत्।

'यत्र स्थितं तत्रैव तिष्ठति' शिरः नमित्वा काळिङ्गः अवदत्।

एकनिमेषं तूष्णीं स्थिता हिल्डा अवदत् – 'भवान् कर्मणि कुतः एवम् उपेक्षां करोति

ननु ?'

सः न अभाषत । सा एव अवदत् – 'पश्यतु, भवान् एवमेव तिष्ठति चेत् मम निरुत्साहः भवति । भवान् पूर्वं यथा तथा उत्साहेन कर्म करोतु । तत्र मम सहचरः भवतु । मम निदेशं स्वीकरोतु । तदा ममापि भवतः सहचरी इव भावः उदेति । भवतः अपि मम साह्यं भवेत् । उभयोरपि एकाकिता अपगच्छति ।'

काळिङ्गः स्वशिरः परावर्त्य तस्याः मुखम् अपश्यत् । सा एव अभाषत – 'भवान् मम विषयेऽपि चिन्तयतु । भवतः एकाकिता एव परा इति म्लानचित्तः तिष्ठति चेत् मम एकाकितां कः अपनयेत् ? श्वः आरभ्य एव कार्यं प्रारभ्य पम्प् लगयतु । शीघ्रं ट्र्याक्टर् चलतु । तस्य शब्देन वा एषा नीरवता, एषः निरुत्साहश्च अपगच्छति । अन्यथा एतस्मिन् वने जीवनमेव कष्टकरम् ।'

काळिङ्गः हिल्डायाः हस्तं दृढं गृहीतवान् । उभावपि निमेषद्वयं तथैव आस्ताम् । तावदेव शिशुः रोदितुं प्रारब्धवती । प्रेङ्खासमीपे उपविष्टः काळिङ्गः एव ताम् आदाय स्वस्य उत्सङ्गे शायितवान् ।

हिल्डा अपृच्छत् – 'इदानीमेव सप्तदश दिनानि अभवन् । एतां किमिति सम्बोधयाम ?'

'भवती एव वदतु ।'

'जाक्लिन् इति वदाम किम् ? एस्तर् इत्युक्ते कथम् ? अत्र समीपे कोऽपि पाद्री न विद्यते किम् ? न विद्यते चेत् कतिपयदिनेभ्यः अनन्तरं वयमेव कस्मिंश्चित् दिने ताल्लूकु–चर्च्मन्दिरं गत्वा आगच्छाम ।'

एतद्वचनस्य काळिङ्गः शिरश्चालनेन असम्मतिं सूचितवान् ।

'कुतः ?' हिल्डा अपृच्छत् ।

'शिशुं भवती लक्षयित्वा दृष्टवती किम् ? एतस्याः मुखं, नेत्रे, नासिका, ललाटः सर्वं मम मातुः, एव अस्ति ।'

'कालिङ्ग, तत् कथं साध्यम् ?'

'कथं न साध्यम् ?' – इति काळिङ्गेन पृष्टे एव हिल्डा अवदत् – 'आम्, एषु दिनेषु मम बुद्धिरेव सुष्ठु कार्यं न करोति । तत् न केवलं साध्यम्, अपि तु सहजमपि युक्तम् ।'

काळिङ्गः तस्याः मुखं पश्यन् आसीत् । अनन्तरम् अवदत् – 'मम मातुः नाम एव शिशोः करवाम ।'

'तस्याः नाम किम् ?'

'तायव्वा ।'

'इत्युक्ते किम् ? माता इत्यर्थः न वा ? शिशोः माता इति आमन्त्रणे किम् औचित्यम् ?'

'तत् अहमपि न जानामि । किन्तु मम मातरि जातायां तस्याः मातापितरौ तां तायव्वा इति सम्बोधितवन्तौ खलु, तत् केन औचित्येन वा स्यात् नाहं पश्यामि, तद् वेङ्कटरमण-सदृशं पृच्छामश्चेत् सर्वं सविशदं वदेत् ।'

'तस्मिन् प्रश्नस्य साध्यता समाप्ता खलु ।'

काळिङ्गः मौनेन आसीत् । शिशुः पुनरपि रुदितवती । स्वयमपि उत्थाय उपविश्य तां स्तन्यं पाययन्ती उपविश्य हिल्डा अवदत् – 'शिशोः नामकरणाय अत्र किं कुर्वन्ति ?'

'जननस्य दिनं कालं च वेङ्कटरमणं वदन्ति । सः तदनुसारेण गणनं विधाय, सहैव प्रथमपुत्रश्चेत् पितामहस्य नाम, प्रथमपुत्री चेत् तस्याः पितामह्याः नाम परिगणय्य तदनुगुणं नाम सूचयति । तदेव नाम तिष्ठति ।'

'एवं चेत् अस्मच्छिशोः जननस्य दिनं कालं च कस्यापि मुखेन उक्त्वा प्रेषयामः चेत् सः नाम वदेत् किम् ?'

'प्रायशः न' इति सः एकवारम् अहसत् ।

'कुतः हसति ?' सा अपृच्छत् ।

'जातायाः कस्याश्चन शिशोः किं नाम कुर्यात् इति अनवगमनपरिस्थितिम् एताम् उद्दिश्य । शिशोः मुखं तस्याः पितामह्याः इव अस्ति । अतः भवत्या कथ्यमानं नाम न सङ्गच्छते । किन्तु पितामह्याः नाम एव साक्षात् सङ्केतितं कर्तुं स्वातन्त्र्यम् अपि आवयोः नास्ति । नामकरणेन शिशोः जनजीवने स्थानं कल्पयिता पुरोहितः अस्माकं बद्धवैरी अस्ति । एषा कीदृशी परिस्थितिः !'

हिल्डा उत्तरं वक्तुम् अशक्ता मिकमिकिति तम् अपश्यत् ।

## 6

पञ्चदशसु दिनेषु पम्प्यन्त्रं लगयित्वा भूमौ जलं प्रवाहितम्। एतावद्दिनेषु कष्टकर-कर्मरहितः मल्लेशः ट्र्याक्टर् आरूढवान्। हिल्डा उत्थाय बहिः अटनभ्रमणं प्रारब्धवती। तस्याः अटनेन किञ्चित् आयासः अनुभूतः आसीत्। 'अत्रत्याः स्त्रियः षट्सु मासेषु प्रसूतिशुश्रूषां प्राप्नुवन्ति। भवती एकस्मिन् मासे एव एतावत् कर्म करोति चेत् कथं स्यात् ?' इति काळिङ्गः अपृच्छत्।

'अत्रत्या पद्धतिः मास्तु। डियर्, जमालस्य गमनानन्तरं मांसमेव न प्राप्तम्। भवानेव कस्मिंश्चित् दिने तं करीमम् उपसृत्य वदतु। सः प्रतिदिनम् अस्मत्कृते कस्यचन बालकस्य द्वारा प्रेषयतु। बालकाय मासे एतावतीति भृतिं ददाम। पर्याप्तं प्रोटीन् नास्ति चेत् कथं श्रमकर्म शक्यम् ?'

काळिङ्गः तथैव कृतवान्। दिनस्य भोजनं हिल्डायै रोचते स्म। काळिङ्गस्यापि पूर्वतनः उत्साहः प्रत्यागतः। 'अस्मिन् अवसरे धूमक्षुपाणां विषये अहमेव विशेषतया अवधानं वहामि' इति सः अवदत्। हिल्डायाः प्रातः सायम् अटनमपि भवतीति तया गोष्ठस्य दायित्वं निरूढम्। अन्यच्च इदानीं मल्लेशेन ट्राक्टर्कर्म प्रारब्धम् इति क्षीरदोहनयन्त्रं चालयितुं सा एव अतिष्ठत्।

गोष्ठम् इदानीम् अव्यवस्थितं जातम् आसीत्। तायव्वायाः मरणानन्तरं तत्र बध्यमानान् वृषभान् सर्वान् आनीय अत्र परिपूरितवन्तः। केचन भृत्याः तैः ग्रामस्य क्षेत्राणां कृषिं कुर्वन्ति चेदपि तस्य उच्चविचारणं काळिङ्गेन न कदाचित् प्रत्यक्षतया कृतम् आसीत्। ग्रामजनानां पुरतः ग्रामीणक्षेत्रगमनं तस्य इष्टं नासीत्। किन्तु गोष्ठं नूतनतया प्राप्तानां धेनूनां समस्यां चिन्तितवती। ताभिः निरर्थकतया एकस्मिन् दिने भक्षितानां तृणानां प्रमाणस्य परिगणनेन, ताभ्यः प्राप्यस्य लाभस्य, सम्भूयमानस्य व्ययस्य च अर्थार्थसम्बन्धः नास्तीति भासितम्। अन्यच्च तेषां गोष्ठस्थिताः चतस्रः धेनवः गर्भग्रहणायोग्याः आसन्। त्रिचतुरवारं वीर्यप्रयोगे कृतेऽपि पुनः गर्भः न धत्तः। भृत्यानां विचारणेन तासां पुनः गर्भधारकं वयः अतीतम् इति ज्ञातम्। एताः सर्वाः किं कुर्याम। एतासां क्रेतारः के ?

इतोऽपि मासद्वयम् अतीतम्। तावदेव हिल्डायाः आरोग्यं च्युतम्। आदौ शिशोः क्षीरपानावसरे उभयोरपि स्तनयोः अतीव वेदना भवति स्म। इदानीम् अन्तः किमपि घनीभूतमिव भासते। शिशोः पाननिवारणेन उत्तमं भवेदिति तथा कृतवती। किन्तु

एकस्मिन् देने एव अन्तः उच्छूनता वर्धिता । शिशुः अपि हठेन रोदितुम् आरब्धवती । कूप्यां पूरितं अन्यत् क्षीरं सा ओष्ठेनापि न स्पृशति स्म । अन्तः स्थितं क्षीरं बहिः निःसरेदेव इति सा पुनः शिशुं पायितवती । शिशुः अपि मौनम् अतिष्ठत्, वक्षसः उच्छूनता अपि किञ्चिदिव न्यूना जाता । किन्तु पूर्णतया उपशमनं नाभवत् । सा एव उष्णजलेन तापं सम्पाद्य अपश्यत् । किञ्चिदिव उत्तमम् इति भासितम् ।

एतस्याः वेदनायाः विषयं प्रतिदिनमपि विचारयन्तं काळिङ्गं सा अवदत् – 'जाकस्य शैशवावस्थायां तस्मै एतावत् क्षीरं न पायितम् एव । कूपीक्षीरेण, शिश्वाहारेण च सः प्रवृद्धः । एषा शिशुः अतीव स्तन्यक्षीरे लग्ना अस्ति ।'

'एषा हिन्दुस्थानस्य शिशुः, अत्रत्यानां धेनूनां वत्सः इव ।'

'डियर्, मा उपहसतु । तथापि भवता उक्तमपि सत्यम् इति भाति । एषा स्तन्यपानावसरे गोवत्सः इव दृढं प्रणोदनं दंशनं किं किं करोति खलु ! अन्यम् आहारमेव न स्पृशति । एकदा एव चोषं चोषं क्षीरनाडीनाम् आयासकारणात् एवं जातं स्यात् किम् ।'

'किन्तु एतद्देशस्य स्त्रियः शिशुभ्यः कियदपि पाययन्ति । तासां कुतः एवं न भवति ?'

'तदहं न जानामि । अहं न एतद्देशीया । मया तु उच्यते, शिशोः पायनं न्यूनं कर्तव्यम् । एतस्मिन् हतदेशे क्षीरपानाय कापि धात्री अपि न लभ्यते इति । एवं सा अनुवैद्या उक्तवती ।'

काळिङ्गः तूष्णीं स्थितः ।

क्षेत्रे धूमक्षुपाणाम् आरोपणं समाप्तम् आसीत् । तान् सूक्ष्मतया परीक्ष्य बालक्षुपाणाम् अन्यूनानतिरिक्तपरिमाणेन जलस्य प्रवहणेन काळिङ्गस्य वेला गता भवति । गोष्ठस्य पर्यवेक्षणं पूर्णतया हिल्डायाः आधीन्ये एव आसीत् । ग्रामगृहात् पृष्ठतः अल्पानि रागितृणानि आसन् इति श्रुतम् । किन्तु प्रतिपालकाः नासन् इति तत् लब्धकाः अपकृष्य गताः आसन् । एतेषां वैज्ञानिकगोष्ठे संगृहीतानि तृणानि नूतनाभिः धेनुभिः सह अस्य वर्षस्य पर्याप्तानि न भवन्ति । एतदवसरस्य उत्पन्नस्य समाप्तिकालोऽपि सन्निहितः । अग्रिमवर्षात् ग्रामस्य क्षेत्राणि ट्र्याक्टर्द्वारा कर्षणीयानि । नो चेत् खण्डखण्डभूमीः विक्रीय, पर्याप्तविशालतया एकत्र क्षेत्रं रूढतां प्रापणीयम् इति सा चिन्तितवती । इतःपरम् एतासाम् उपरि शिष्टानां धेनूनां प्रयोजनं किम् ? तासां विक्रयणं क्रियते इति ज्ञाते भृत्याः एव ग्राहकान् आनीतवन्तः । इतोऽपि श्रमकर्मशक्तानां वृषभाणां क्रयणं जातम् । किन्तु कस्यापि कर्मणः अनुपयोगिनां द्वादशानां वृद्धवृषभाणां चतसृणां वृद्धधेनूनां च

क्रेतारः एव नासन् ।

तेषां गृहाय मांसप्रापकस्य बालकस्य मुखेन करीमम् आगत्य गन्तुं हिल्डा सन्दिष्टवती । द्वादश वृषभान्, चतस्रः धेनूः च क्रेतुं निराकुर्वन् सः अवदत् – 'क्रीत्वा किं कुर्याम् ? तेषां हननं ज्ञातं चेत् ग्रामजनाः मम गृहं दग्ध्वा कामोत्सवम् आचरिष्यन्ति । भवती एकं कार्यं करोतु । ताल्लूकुकेन्द्रे कश्चन गोवाणिजकः अस्ति । तं प्रेषयामि । तस्मै विक्रीणताम् ।'

'सः किं कुर्यात् ?'

'रैलयानेन मुम्बयीनगराय प्रेषयति । तत्रत्ये पशुवधालये हत्वा मांसं विक्रीणते ।'

'तं प्रेषय ।'

चतुर्थे दिने गोवाणिजकः आगतः । सः घातकजनः इति तत्र कोऽपि न जानाति । एकैकस्याः धेनोः दश रूप्यकाणि, वृषभस्य पञ्चदश रूप्यकाणि चेति धनं गणयित्वा दत्त्वा सः सर्वान् सञ्चोद्य नीतवान् । गोष्ठात् बहिः प्राप्तान् पुरुषान् सः एव अवदत् – 'गोधर्मशालां सञ्चोद्य नयामि । तदीतटे वृद्धधेनूनां वयं पुण्यकर्म साधयामः ।'

पुरुषाः तूष्णीम् अतिष्ठन् ।

# सप्तदशः अध्यायः

## 1

तस्मिन्नेव दिने मध्याह्नवेलायां पुनः हिल्डायाः स्तनयोः वेदना उदिता । दक्षिणस्तनस्य अन्तः घनतया कन्दरूपेण किमपि जातम्, अन्यच्च सहैव वामस्य क्षीरं पीतवर्णम् अवाप्तुं प्रारब्धम् । वेदनाम् असहमाना सा विलिविलीति विचेष्टितुम् आरब्धवती । तस्य कारणं तया वा काळिङ्गेन वा ऊहेनापि न प्राप्तम् ।

'किमपि भवतु, वैद्याय दर्शनं वरम्' इति काळिङ्गः अवदत् ।

तत्क्षणम् उभावपि अपत्याभ्यां सह यानमार्गम् आगतौ । मोटर्याने उपविश्य ताल्लूकु-केन्द्रम् आगत्य, शिशुप्रसूत्यर्थम् आगतस्य वैद्यस्य सर्वकारीयचिकित्सालयं गतौ । मार्गे तावत् हिल्डा कष्टेन रोदनं प्रतिरुध्य वेदनाम् असहत । तावति एव क्षुधाम् असहमाना कनीयसी शिशुः रोदितुं प्रारब्धवती ।

रोगिणीं परीक्षितवता वैद्येन उक्तम् – 'एतत् ब्रेस्ट् आप्सिस् स्यात् । दक्षिणपार्श्वस्थे स्तने कन्दः जातः । वामभागे किमपि न दृश्यते । अमुकमेव इति निश्चित्य वक्तुं न शक्यते । तत्क्षणे एकं सूच्यौषधं ददामि । ब्रेस्ट्क्यान्सर् स्यादपि । भवन्तः महाचिकित्सालये दर्शयन्ति चेत् वरम् ।'

हिल्डायाः जीवः विगतः इव जातः । क्यान्सर्रोगिणः न जीविष्यन्ति । तस्याः मातुः ज्येष्ठभगिनी तत्कारणात् मृता । सः एव रोगः स्वेन प्राप्तः स्यात् । समीपे एव स्थितां शिशुम् आलिङ्गनेन धृत्वा, तावत्पर्यन्तं निरुद्धं सर्वम् अश्रु निःस्यन्दितवती । काळिङ्गः अपि हतचैतन्यः इव अतिष्ठत् । सूच्यौषधं निवेशितवता वैद्येन उक्तम् – 'स्त्रीणां रोगेषु अहं न परिणतः । भवन्तः प्रथमतः जनपदचिकित्सालयं गच्छन्तु । स्त्रीरोगिणां विशेषज्ञाः सन्ति । तेषाम् अभिप्रायम् उपगृह्य, अनन्तरं क्यान्सर् ट्रीट्मेण्ट् इन्स्टिट्यूट् गच्छन्तु ।'

तत्क्षणम् एकं ट्याक्सियानं निश्चित्य, हिल्डया अपत्याभ्यां च सह जनपदकेन्द्रम्

आगतः । तत्रत्याः चिकित्सालयजनाः तां प्रवेशितवन्तः । किन्तु तद्रोगविशेषज्ञः अवकाशे अस्ति इति, तस्य आगमनं दिनत्रयानन्तरं भवति इति च अवदन् । चिकित्सालयसमीपे एव कस्मिंश्चित् वसतिगृहे काळिङ्गः वास्तव्यम् अकरोत् । शिशुः उदराय किमपि न लब्धम् इति भृशं क्रन्दन्ती आसीत् । महिलावैद्या एव श्रद्धाम् आस्थाय चिकित्सालयस्य काञ्चन अनुवैद्यां निवेदितवती । षण्मासीयशिशुमती सा अनुवैद्या शिशवे स्तन्यं पाययितुम् अङ्गीकृतवती । तस्यै भूरिसम्भावना दीयते इति हिल्डया आश्वस्तम् ।

तेन तात्कालिकतया दत्तैः सूच्यौषधैः हिल्डायाः वेदना न्यूना तु जाता । किन्तु तज्ज्ञेन आगत्य परिशीलनपर्यन्तं तस्याः वा काळिङ्गस्य वा आतङ्कः न्यूनः न जातः । स्वस्य एतेन रोगेण मरणं निश्चितम् इति तया निर्णीतम् । सा अपि प्राणिशास्त्रं पशुरोगशास्त्रं च पठितवती एव । क्यान्सर् कदा, कस्मै कदा प्राप्नोति इति इतोऽपि वैद्यशास्त्रेण न ज्ञातम् । तत् प्राप्तः जीवितः अपि न तिष्ठति । तज्ज्ञः वैद्यः रोगिणां मरणम् अग्रतः अपसारयेत् । किन्तु जीवितं न रक्षेत् । मरणम् अग्रतः अपसारितमपि तावत्पर्यन्तम् अनुभूयमाना यातना, शारीरिकमानसिकहिंसाश्च नरकसदृश्यः भवन्ति । तदपेक्षया शीघ्रं मरणप्राप्तिरेव स्वागतार्हा । प्राप्तः क्यान्सर्रोगः इति तज्ज्ञेन उक्तं चेत् पर्याप्तम् । अग्रिमचिकित्सां स्वयमेव मास्तु इति वदेयम् । गृहे भुषुण्डिका अस्ति । एकेनैव निमेषेण जीवनस्य समाप्तिं कर्तुं शक्नुयाम् ।

मरणस्य आलोचनेन साकं हिल्डायाः स्वजीवनम् आदितः स्मृतौ प्राप्तम् । स्वजन्मग्रामः, वर्धनरीतिः, विद्याभ्यासः, काळिङ्गे प्रेम, विवाहः, सहचरविहीने एतद्देशे आगमनम्, अत्र ग्रामीणैः कृताभिः कुचेष्टाभिः सह एषा शिशुः – इतोऽपि नाम अपश्यन्ती अन्तिम–शिशुः, तस्याः जननचित्राणि च तस्याः कल्पनायां चलितानि । कस्यापि साहाय्यं विनापि, पत्या एव अनुवैद्याकर्म सम्पाद्य एतस्याः शिशोः जननम् अभूत् । अग्रे एतस्याः अनाथभावस्य पूर्वसूचना वा एषा ? मम मरणानन्तरम् एषा कथं जीवेत् ? का एतां स्तन्यं पाययति ? का पार्श्वे शाययति ? का तस्याः हिता स्यात् ? तस्मिन् मध्यरात्रे चिकित्सालयः सर्वः अपि मौनी आसीत् । तया शयिते तस्मिन् आरक्षितविभागे मन्दः गोलदीपः ज्वलति स्म । शिशोः क्षीरपायिका अनुवैद्या पुनः प्रातः आगमिष्यामीति उक्त्वा रात्रौ स्वगृहं गता आसीत् । हिल्डा एकवारं परावृत्य शिशुम् अपश्यत् । तदानीं तस्याः वर्णः हिन्दुस्थानीयवर्णे परिवर्तमानः आसीत् । तदानीमेव मासत्रयम् अतीतायाः

मुखं काळिङ्गस्य मातुः मुखं स्पष्टतया उपमीयते स्म । एषा कुतः मम उदरे जाता ? – इति प्रश्नः हिल्डायाः मनसि उदितः ।

अग्रे एतस्याः शिशोः गतिः का स्यात् ? मातृविहीनानाम् अपत्यानां पालनाय धर्मसंस्थाः स्युः । किन्तु कियतापि वात्सल्येन पालिताः अपि अनाथाः एव । एतस्याः शिशोः स्वभावः एव विचित्रः । स्तन्यं विना स्वयम् अन्यत् किमपि न स्पृशाम्येव इति जन्मतः एव हठं करोति । एतस्याः एषः हठः, एषा बुद्धिः कथं प्राप्ता ? दत्तं पीत्वा जीवत् अपत्यं चेत् अहम् अधिकचिन्तां विना म्रियेय । किन्तु एतस्याः शिशोः प्रवृत्तिः मम मरणम् इतोऽपि अधिकं दुर्भरं करोति ।

अहं न म्रियेय । कियदपि धनं वीतं चेदपि जीविता तिष्ठेयम् । शिशोः अनाथभावाय अवकाशः न कल्पनीयः इति सा निर्धारितवती । किन्तु क्यान्सर्‌रोगं प्राप्तवतां धनव्ययेनापि निश्चयेन जीवकम् औषधम् इतोऽपि न सृष्टम् इति विषये बुद्धौ उपस्थिते असहमाना सगद्गदं रुदितवती । एतस्याः रोदनशब्देन शिशोः प्रबोधनम् अभवत् । तत्क्षणं सा रोदितुं प्रारभत । इतःपरं तस्याः सान्त्वनाय स्तन्यमेव पायनीयम् । शिशोः रोदनेन इतरविभागस्थानां रोगिणाम् अपि प्रबोधनम् अभवत् । बहिः स्थितायाम् अग्रशालायां विरामासन्दे आलम्ब्य निद्रिता कार्यनिरता अनुवैद्या धावित्वा आगता । सा एव ताम् उद्गृह्य स्तन्यानुवैद्यायाः वास्तव्यगृहं धाविता ।

अनन्तरदिने स्तनयोः वेदना असहनीया आसीत् । अन्यैः वैद्यैः तस्याः कारणं न ज्ञातम् । क्ष–किरणप्राप्त्यापि न ज्ञातम् । 'क्यान्सर् स्यात् । किन्तु श्वः सायं विशेषज्ञस्य आगमनपर्यन्तं प्रतिपालयन्तु' इति तैः उक्तम् ।

काळिङ्गः कलाहीनः वासविभागे उपविष्टः आसीत् । यातनां विस्मर्तुं हिल्डा मनसा इच्छया भाषते स्म । जाकम् आलिङ्ग्य, 'वत्स, मम वत्स, त्वम् अनाथो भवसि । त्वया तु स्तन्यं न पीतम् । तथापि त्वं कथं जीवसि ? अहं तु निश्चयेन म्रिये' इति रुदितायां जाकोऽपि रोदितुं प्रारभत । काळिङ्गेन 'तथा न भाषितव्यम् । बालः विना कारणम् आतङ्कितः भवति' इत्युक्ते, 'कालिङ्ग्, डियर्, अहं सत्यं वदामि । मरणम् इत्येतत् केवलं भविष्यत्सम्भावना न । मम तु सद्यःसत्यम् एव अस्ति । अहं तदानीमेव मृता अस्मि । निश्चयेन वदतु, शिशोः भवान् माता भवति किम् ? भवितुं शक्नोति ?' इत्युक्त्वा तस्य मुखम् अपश्यत् । अनन्तरं सा एव, 'न, प्रपञ्चे कोऽपि पिता अपत्यानां माता भवितुं नार्हति । किन्तु माता तु पिता अपि भवितुम् अर्हति' इति अवदत् ।

बहिः स्थितया अनुवैद्यया तावदेव आगत्य – 'एवम् उद्विग्नतया कोलाहलः न कर्तव्यः। तूष्णीं तिष्ठतु' इत्युक्ता अपि सा भाषितं न निवारितवती।

तद्दिने रात्रौ वेदना असहनीया एव अभवत्। वैद्या एव ब्रेष्ट्पम्प् लगयित्वा वेदनायां जातायामपि अनिवार्य बलात् द्वाभ्यामपि स्तनाभ्यां क्षीरम् अपानयन्। स्वल्पे समये समाहितेऽपि यातना पुनरपि प्रारब्धा। अन्यं मार्गम् अपश्यता वैद्येन निद्रागुलिकायां दत्तायाम् एकादशवादने तस्याः निद्रा प्राप्ता।

परेद्युः सायं वैद्यस्य आगमनपर्यन्तं सा म्रियमाणा मण्डूकी इव ताम्यन्ती आसीत्। बहुवारं मरणस्य, आत्महत्यायाश्च भाषितम् उच्चारितवती। सायङ्कालिकेन रेल्यानेन सः वैद्यः आगतः। तत्क्षणमेव काळिङ्गः गत्वा तं चिकित्सालयम् आनीतवान्। रोगस्य इतिहासं पृष्ट्वा, स्वतः रोगिणीं परीक्ष्य, पुनरपि क्षीरं दोहयित्वा, तदपि परीक्ष्य परिशील्य सः अवदत् – 'क्यान्सर् इति मया न भाव्यते। मम विश्लेषणम् अन्यरीत्या अस्ति। तत्क्षणं तस्य आवश्यकम् औषधं ददामि। इतः दिनद्वये परिणामः द्रष्टव्यः। अन्यथा अग्रे आलोचयाम।'

इतोऽपि एकस्मिन् दिने हिल्डा तत्रैव वेदनया अताम्यत्। अनन्तरं वेदना न्यूना जाता। तज्ज्ञः अवदत् – 'मम विश्लेषणमेव युक्तम्। क्यान्सर् न, पूर्णतया शमनपर्यन्तं, नाम इतः विंशतिदिनेषु रुग्णा चिकित्सालये एव तिष्ठेत्। भवान् तु ग्रामं गन्तुं शक्नोति।'

काळिङ्गः इतोऽपि चतुर्षु दिनेषु तत्रैव अतिष्ठत्। शस्त्रेण आन्तरव्रणस्य कर्तनेन निष्कासनानन्तरं तस्याः वेदना बहुभागशः न्यूना अभवत्। दक्षिणस्तनस्य व्रणं स्फुटतया वर्धितम् आसीत्। वामभागस्य वर्धमानम् आसीत्। तत् सावकाशम् अपनीयते इति वैद्यः अवदत्। 'शिशुं धात्री प्रतिपालयति। भवान् जाकेन सह गृहं गच्छतु। धूमक्षुपाणां गतिः का स्यान्नु ? द्वित्रदिनेषु एकवारं जाकेन सह आगत्य अवलोक्य गच्छतु' इत्यवदत्। काळिङ्गः गृहम् आगतः।

हिल्डायाः अनुपस्थितौ स्वस्य जाकस्य च भोजनं दातव्यम् इति काळिङ्गेन मल्लेशः उक्तः आसीत्। मल्लेशः एव क्रमेण अन्नं शाकं च पक्त्वा कस्मिंश्चित् अल्यूमिनियंपात्रे तयोः उभयोरपि पर्याप्तम् आनीय स्थापयति स्म।

कस्मिंश्चित् दिने काळिङ्गजाकाभ्यां जनपदकेन्द्रं गत्वा सायं लोकयानेन गृह-प्रत्यागमनावसरे केनचित् गृहस्य पुरतः संहत्य त्रयोदश गोणीस्यूताः उपर्युपरि स्थापिताः आसन्। समीपं गत्वा एकैकस्य परिशीलनेन ज्ञातम् – तेषु एकः अवरेधान्यानाम् अन्यः

तुवरधान्यानाम्, अन्ये रागिबन्धिकाः । मल्लेशं दूरात् सम्बोध्य सः अपृच्छत् – 'एताः कीदृश्यः बन्धिकाः ।'

'अग्रहारस्य होन्नः शकटद्वयेन अनीय, अवतार्य गतः । वारभागस्य अर्धम् एतावत् अभवत् । रागितृणानि कुत्र अनीय स्थापनीयानि इति अपृच्छत् । स्वामिनः आगमनानन्तरं पृच्छतु, अहं न जानामि इत्युक्त्वा प्रेषितवानस्मि ।'

'एतदपि तम् अनिवेद्य अत्र मा स्थापयतु इति कुतः नोक्तम् ?'

'मया तथैव उक्तम् । सः एव स्वगृहे पूरयितुं स्थलं नास्ति इत्यवदत् ।'

काळिङ्गः सूक्ष्मतया मल्लेशस्य मुखम् अपश्यत् । तेन एतस्य पृष्ठभूमिका ज्ञाता वा न वा ! भृत्याः सर्वे जानन्ति । एषः अपि देवस्थानं गत्वा आगच्छति । एषः अपि जानात्येव इति परिभाव्य अवदत् 'पश्य, द्विचक्रिकया गत्वा इदानीमेव होन्नम् आदाय आगच्छ ।'

रात्रौ सप्तवादनसमये होन्नः आगतः । 'एतत् अत्र कुतः आनीय स्थापितम् ?' इति काळिङ्गेन पृष्टे सः अवदत् – 'अन्यत्र कुत्र स्थापयेयम् ?'

'ज्योयिसः प्रष्टव्यः आसीत् खलु ?'

'तदानीमेव कियन्त्यपि दिनानि अतीतानि क्षेत्रं दृष्टवतः तस्य । अहमेव तं निवेदितवान् । 'ऋणापगमानन्तरं मया कुतः तत्र द्रष्टव्यम्' इत्यवदत् सः । वाटिकायाः फलानि अहमेव पातितवान् अस्मि । इदानीं सार्धैकसहस्रं फलानि प्राप्तानि ।'

एतत् उत्तरं काळिङ्गेन निरीक्षितमेव आसीत् । तथापि स्वयम् अज्ञातया कयाचित् इच्छया तेन होन्नः सन्दिश्य आहूतः आसीत् । 'तृणानि भवतः कुटीरम् अनीय सङ्गृह्णामि' इत्युक्त्वा होन्नः गतः ।

रात्रौ मल्लेशेन आनीय दत्तं भोजनं भुक्त्वा जाकः काळिङ्गश्च शयितौ । हिल्डा इदानीम् उपशमनोन्मुखी जायमाना अस्ति । निश्चिन्ततया सः एतद्दिने गृहम् आगतः । किन्तु होन्नेन आनीय स्थापिताः धान्यबन्धिकाः तस्य निद्रां च्यावितवत्यः । यावद्वारं पार्श्वपरिवर्तनेनापि निद्रा न प्राप्ता । वेङ्कटरमणस्य स्वभावः स्वेन सुष्ठु न ज्ञातः एव किम् ? इति सः स्वयमेव आत्मानं पृच्छति स्म । बाल्यवयसि स्वस्य पाठनावसरे सः अतीव मृदुशीलः बालकः आसीत् । मैसूरुनगरे किमपि चेष्टितम् अप्राप्य, केवलं स्वस्य अध्ययने एव निरतः म्लानचित्तः इव दृश्यते स्म । तस्य पर्याप्ता सङ्कल्पशक्तिरेव

नास्ति इति काळिङ्गेन चिन्तितमपि आसीत् । विदेशं सञ्चार्य, विज्ञानाध्ययनं विना मनुष्यस्य सङ्कल्पशक्तिः वर्धिता न भवेत् इति सः पुरा एकवारम् आलोचितवान् आसीत् । किन्तु इदानीं एतस्मिन् वेङ्कटरमणे स्थिता शक्तिः मयि न विद्यते खलु इति सः स्वचिन्तनज्वालायाम् अन्यत् लघुकाष्ठम् आयोजितवान् ।

न केवलं वेङ्कटरमणस्य, स्वस्य मातुः स्मरणम् अपि अभवत् । वेङ्कटरमणेन तु संस्कृतं पठितमस्ति । आङ्ग्लभाषाम् अपि सः जानाति । किन्तु मम मात्रा किमपि नावगतम् । भाषितुम् अपि अशक्ता मूका सा । किन्तु सा कीदृशी प्रचण्डकल्पनाशक्तिः तदीया ! अन्ते अन्ते ग्रामस्थैः सह मां कियद्दृढं विरुद्धवती । तदधीने स्थितानां गवां सकलानां वेङ्कटरमणाय दानदिने मां दृष्ट्वापि उपेक्षितवती । तस्याः मरणानन्तरम् अपि मम उपेक्षा एव प्रवृत्ता अस्ति । ग्रामस्थाः सर्वे माम् उपेक्ष्य गताः सन्ति । देवस्थानस्य स्वफार्म्स्थलस्य मध्ये उद्भाविता कत्तालवृतिः एव एतस्य साक्षिभूता । मातुः मरणस्य एतावन्ति दिनानि गतान्यपि मया तस्याः उत्तरक्रिया नानुष्ठिता खलु इति किञ्चित् आलोचनं प्राप्तम् । किन्तु मया तन्न कारयितव्यम् इति ग्रामजनैः निर्णीतमिव अस्ति । स्वयं करोमि इति अवदिष्यं चेदपि न कोऽपि आगमिष्यत् ।

मध्यरात्रे अतीतेऽपि स्वस्य निद्रायाः अप्राप्तौ कारणं किम् ? इति सः स्वयं मनोविश्लेषणे प्रवृत्तः । हिल्डा ग्रामे स्थिता चेत् एतादृशानाम् आलोचनानां वशे स्थापनं सुशकम् आसीत् । गृहे तस्याः उपस्थितिः एव स्वमनोधर्मस्य उपरि कञ्चन प्रभावं प्रसारयेत् । इदानीं कतिपयदिनतः सा न विद्यते ।

अन्यच्च हिल्डां विना स्वस्य सङ्कल्पशक्तिः किं नु न तिष्ठेत् ! शिशुजननदिने हिल्डया मां परित्यज्य प्रस्थानं निश्चितं खलु । सा गता चेत् मम स्थितिः का स्यात् ?

रात्रेः अन्तिमयामे किञ्चिन्निद्रा प्राप्ता । किन्तु प्रातः मल्लेशेन कूपजलस्य पम्-चालनारम्भात् तत्क्षणं प्रबोधनं जातम् । इदानीं ट्र्याक्टर्कर्म न विद्यते । मल्लेशः गोष्ठं गत्वा यन्त्रेण धेनूनां दुग्धं चोषयन् आसीत् । काळिङ्गस्य उत्थाय बहिरागमनावसरे होन्नेन आनीय स्थापिताः बन्धिकाः तत्रैव पतिताः आसन् । ताः किं करणीयाः – इति प्रश्नः शिथिलयितुम् अशक्यः तथैव स्थितः आसीत् । एषः प्रश्नः इदानीमपि तथैव अवशिष्टः ।

सपादाष्टवादनवेलायां मल्लेशस्य प्रत्यागमने काळिङ्गः तम् अपृच्छत् – 'त्वम् इदानीमपि देवस्थानं गच्छसि किम् ?'

'न।'

'असत्यं मा वद। तत्र अहं न किमपि आक्षिपामि।'

'गच्छामि।'

'जोयिसः किं कुर्वन् तिष्ठति ?'

'सर्वमपि सत्यं वदानि किम् ?'

'वद।'

'भवतः क्षेत्रपरित्यागानन्तरं सः पूर्वस्मात् अधिकतया मन्दिरे एव तिष्ठति । तत्रैव उपविश्य कस्य कस्यापि जातकं कुण्डलीं वा लिखति। इदानीं देवस्य पूजायाः सेवायाश्च कर्तारः बहवः आगच्छन्ति।'

'पूर्वं यथा आनयति स्म तथा इदानीमपि देवस्य प्रसादं सम्पाद्य आनयति किम् ?'

'हूँ, प्रतिदिनं सम्पाद्य आनयति। पूजार्थम् आगमनावसरे तस्य गृहस्य धेनूः सर्वाः सञ्चोद्य आनयति। ताः गिरेः उपरि चारयित्वा, सायङ्कालपर्यन्तं स्थित्वा गच्छति। पूजानन्तरम् आगतेभ्यः दत्त्वा अवशिष्टं प्रसादमेव किञ्चित् भक्षयति। उच्चैः मन्त्रं पठन् धेनूनां पृष्ठतः सञ्चरति। नो चेत् धेनूः तत्रैव चारयित्वा जातककुण्डलीं लिखति।'

'तस्य जीवनार्थं किं करोति इति जानासि किम् ?'

'जातकलेखनेन धनं प्राप्यते इति। काळेनपल्लीजनैः सर्वैः इतःपरं युगादिफलकथनाय प्रतिगृहं शूर्पद्वयं नाम दशप्रस्थमितं धान्यं दातव्यम् इति निश्चयः कृतः अस्ति। अन्यैः ग्रामजनैः अपि 'दद्मः' इत्युक्तम् इति। धेनवे इति अस्मिन् वर्षे काळेनपल्लीजनाः प्रतिगृहं धारिकाद्वयं तृणानि दत्तवन्तः। क्षेत्रकर्षकः अस्ति खलु होन्नः, सः स्वभक्तिः इति तदानीमेव विंशतिप्रस्थरागिधान्यं, पञ्चधारिकातृणानि दत्तवान् इति च श्रुतम्।'

काळिङ्गः तत् श्रुत्वा मूकः संवृत्तः। अग्रे किं वक्तव्यम् इति अजानन् मल्लेशः तूष्णीं स्थितः। काळिङ्गः अपृच्छत् – 'पश्य, एतावत्यः धेनवः दुग्धाः भवन्ति खलु, सः तत् क्षीरं किं करोति ? जानासि किम् ?'

'सर्वाः अपि धेनवः दुग्धाः न भवन्ति। धेनूनां क्षीरं पूर्णतया सः न दोग्धि। वत्सैः पूर्णोदरं पानानन्तरम् अवशिष्टं दोग्धि। तदेव घटमितं भवति। अत्र मन्दिरं पूजार्थम् आनयति। अवशिष्टं गृहजनाः सर्वे पूर्वापरयोः उभयोः अह्नोः पिबन्ति। इतोऽपि अवशिष्टं

चेत् तक्रं विधाय नवनीतं कुर्वन्ति ।'

'क्षीरं न विक्रीणीते किम् ?'

'न, गोपगौडाः क्षीरं विक्रेतुम् अर्हन्ति, अहं तन्न करोमि इति वदति । स्त्रीवत्सा जायते चेदपि सः न विक्रीणीते । वृषवत्से तु प्रवृद्धे तदनु ददाति । इदानीम् एकस्मिन् मासे द्वौ प्रौढौ गोवत्सौ विक्रीतवान् । चतुःशतं रूप्यकाणि प्राप्तानि ।'

काळिङ्गः पुनः किमपि न पृष्टवान् । पाकार्थं चुल्ल्याम् अग्निज्वालनं कर्तव्यमिति मल्लेशः स्वशेड्स्थलं गतः । किन्तु अर्धघण्टानन्तरं काळिङ्गः एव तस्य शेड्स्थलं गत्वा अवदत् – 'पश्य, एकं कार्यं कर्तव्यम् ।'

'किम् ?'

'अहम् अद्य धनं ददामि । द्विचक्रिकया गत्वा पूजार्थं पुष्पाणि, फलं, तण्डुलाः, शर्करा, द्राक्षा, गन्धवर्तिका इत्यादीनि सर्वाणि अपि अधिकमेव आनीय अद्य जोयिसस्य गृहे देहि । श्वः तेन मन्दिरे पूजानन्तरं मह्यं प्रसादम् आनीय देहि ।'

मल्लेशः तत्र किमपि न भाषितवान् । 'कुतः तूष्णीं स्थितः ?' काळिङ्गः अपृच्छत् ।

पञ्चनिमेषेषु संशयनानन्तरं मल्लेशः क्षमायाचनध्वनिना अवदत् – 'महोदय, अहं सत्यं वदामि चेत् भवान् न कुप्यति खलु ?'

'न, वद ।'

'भवतः नाम वदामि चेत् सः सामग्रीं न स्वीकरोति । भवतः नाम्ना पूजामपि न करोति । प्रसादमपि न ददाति । अहं सर्वमपि जानामि ।'

काळिङ्गस्य एतत् वचनं कपोलप्रहारः इव अभवत् । किन्तु सः स्वं स्वयं समाधाय अवदत् – 'मया उक्तं तथा न । त्वम् एव तव स्वयं सेवा इति कारय । तव पितुः नाम्ना उत मातुः नाम्ना विधानम् इति वद । गृहेऽपि भक्षयामि, ददातु इति उक्त्वा प्रसादम् आदाय आगच्छ ।'

मल्लेशः एतां सूचनाम् अभ्युपगतवान् । किन्तु स्वेन कृतं कदाचित् कस्मिंश्चित् दिने जोयिसेन ज्ञातं चेत् ! इत्यालोचनम् अपि उदितम् । तथा किमपि भवति चेत् जोयिसः इतःपरं मया सह भाषणं न कुर्यात् । किन्तु स्वस्वामिना उक्तस्य तावत् तीव्रतया निराकरणमपि कष्टकरम् आसीत् । एषः इदानीं कुतः एवं कारयति ? पत्न्याः रोगहेतोः कापि सेवा सङ्कल्पिता किम् ? अथवा मातुः तिथिः नाचरिता इति एतस्य पत्न्याः

एवंरीत्या रोगः प्राप्तः किम् ? तस्य निवारणार्थं स्यात् – इति तेन केचन ऊहाः कृताः। अस्मिन् प्रसङ्गे स्वस्यापि किञ्चित्पात्रवहनं तस्य रोमाञ्चकारि भासितम्।

द्विचक्रिकया गत्वा सर्वाः सामग्रीः आदाय सायं वेङ्कटरमणजोयिसस्य गृहगमनावसरे सः गृहे एव आसीत्। 'श्वः कः विशेषः ?' इति तेन पृष्टे 'कोऽपि नास्ति। मम मातुः नाम्ना पूजा कारणीया इति स्वप्ने प्राप्तम्। तस्याः नाम बसम्मा इति' इति अवदत्।

अनन्तरदिने मल्लेशः उत्थाय स्नानं समाप्य मन्दिरं गतः। पूजानन्तरं तस्य मध्याह्ने रात्रौ चापि यथा पाकः न कर्तव्यः स्यात् तथा जोयिसः पूगपट्टे बद्धं प्रसादं दत्तवान्। तद्दिने पूजासमये आगतानां दशद्वादशजनानाम् इतरभक्तानाम् अपि मल्लेशस्य सेवाप्रसादः एव पूर्णहस्ततया प्राप्तः।

कालिङ्गः अपि उपवासं कृत्वा स्नातवान् आसीत्। गृहम् आगतः मल्लेशः स्वयमेव पूजकः भूत्वा तस्मै जाकाय च प्रसादं व्यतरत्। इदानीं हिल्डा गृहे स्थिता चेत् – इति कल्पना प्रसादभक्षणावसरे कालिङ्गेन अधिगता। सा स्थिता चेत् स्वयम् एवंरीत्या पूजां अकारयिष्यम् उत न, इति संशयोऽपि उद्गतः। एतत् कुतः एवम् ? – इति प्रश्नः मनसि उद्भूतः, येन सः गम्भीरतया आलोचयितुं प्रारभत।

## 3

विंशत्यां दिनेषु चिकित्सालये स्थित्वा हिल्डा शिशुना सह गृहम् आगता। तस्याः रुजा उपशान्ता आसीत्। किन्तु तस्याः उपशमनक्रमे वैद्यैः स्तनयोः क्षीरोत्पादनं निवारितम् आसीत्। क्षीरोत्पत्तिनिवारणं विना आन्तरिकव्रणस्य शोषणं दुःशकम् आसीत्। 'अग्रिम–प्रसूतौ क्षीरोत्पादनेन पुनः भवत्याः एवंस्थितिः स्यात्, इदानीमेव वक्तुं न शक्यते' इति तैः उक्तम् आसीत्।

शिशोः समस्यैका तथैव अवशिष्टा। तस्याः स्तन्यपायिकया अनुवैद्यया स्ववृत्तिं परित्यज्य एतेषां गृहं प्रति आगमनम् अशक्यम् आसीत्। अन्या कापि एवं धनार्थं स्वशिशौ प्राप्तव्यं क्षीरम् अन्यशिशुं पाययितुं सज्जा न आसीत्। एतस्याः शिशोः स्वभावः न केवलं कालिङ्गेन, वैद्येनापि न अवबुध्यते स्म। कियतीमपि मृदुचोषिकां संयोज्य कूपीं कक्षसमीपे संस्थाप्य पाययितुं प्रवृत्तेऽपि सा मुखं न लगयति। साक्षात् वक्षोजक्षीरमेव

तया अपेक्षितम् । स्वहठेन एव सा नूनं म्रियते इति अनुवैद्याः निर्णीतवत्यः ।

गृहागमनावसरे एव तस्याः रम्भः वक्तुम् अशक्यः आसीत् । फलरसः शर्कराजलम् इत्यादि यदपि निराकरोति स्म । हिल्डा अवदत् – 'डियर्, अस्मान् क्लेशेन आक्रन्दयितुम् एव एषा जाता । एतस्याः हठदर्शनेन मम द्वेषः सञ्जायते । किन्तु स्वहठेनैव सृज्यमानायाः तस्याः निस्सहायकतायाः दर्शनेन कोपः अवतार्य अनुकम्पा जायते । एषा अनुकम्पा एव प्रीतिं वर्धयति ।'

'तत् सत्यम् । पितृत्वमातृत्वप्राप्त्या जायमानः सन्तोषः कियद्दुःखविशिष्टः खलु ?'

ताभ्यां स्वानुभवविश्लेषणावसरे एव शिशोः स्वरः तारत्वं प्राप्तः । कालिङ्गेन उद्गृह्य बाहुभ्याम् आन्दोलनेनापि सा क्षणमपि तूर्ष्णीभावं न प्राप्ता । स्वशेड्तः आगत्य एतत् दृष्टवता मल्लेशेन उक्तम् – 'कस्याश्चित् धेनोः ऊधसि तस्याः मुखं संस्थापयतु । लोचलोचिति चोषयित्वा शमं याति ननु । तथाक्रियमाणं दृष्टवान् अहम् ।'

कालिङ्गेन तत्क्षणं नूतनः प्रकाशः दृष्टः इव जातम् । शैशववयसि स्वेन एव धेनोः स्तन्यं पीतं स्मरणे उपस्थितम् । किन्तु एतावत्पर्यन्तम् अपि स्वस्मिन् एषः उपायः कुतः न भासितः एव ? मल्लेशस्य एकेनैव निमेषेण ज्ञातः उपायः स्वस्मात् कथं तिरोहितः आसीत् ? तदेव युक्तम् इति सः अवदत् । किन्तु हिल्डा अवदत् – 'भवता उक्तं सत्यं चेदपि तत् क्षीरम् आरोग्यस्य न हितम् । ऊधसः बहिः कति वा रोगाणवः स्युः ! क्षीरे एव कीदृक्कीदृशाः रोगाणवः जीविताः स्युः ! क्षीरं शृत्वा शमयित्वा, तस्य मण्डं पृथक्कृत्य एव पायनीयम् ।'

'अहं तथैव पीतवानस्मि । मम किं जातम् ? एषा शिशुः जीवति चेत् अलम्' इत्युक्त्वा कालिङ्गः ताम् उद्गृह्य गोष्ठाभिमुखं पादं न्यस्तवान् । जाकेन साकं गृहं प्रतिपालय इति मल्लेशम् उक्त्वा हिल्डा अपि तम् अनुसृतवती ।

उभौ अपि गोष्ठं गतौ । आरोग्यकरीं काञ्चन धेनुं हिल्डा चितवती । तस्याः ऊधसः सम्यक् क्षालनानन्तरं हिल्डा एव शिशोः मुखं स्तने ग्राहितवती । धेनुः आतङ्किता इव पादेन प्रहृत्य उत्प्लुता । शिशोः किमपि नाभूत् । तां परिगृह्य कुक्कुरपादेन उपविष्टायाः हिल्डायाः जानु खुरेण प्रहृतम् उच्छूनं जातम् । कालिङ्गः तां धेनुं बद्ध्वा अन्यां धेनुम् आनीतवान् । तस्याः ऊधः अपि क्षालितम् । किन्तु सा अपि पूर्वतनीवत् अकरोत् । अस्मिन् अवसरे जागरूकता आश्रिता इति शिशोः किमपि नाभूत् । हिल्डयापि प्रहारः न प्राप्तः । एवं चतसृषु धेनुषु प्रयत्नेनापि एकयापि न पायितम् । अन्यस्याः धेनोः आदौ

तत्वत्सं सन्धाप्य प्रयत्तम् । किन्तु वत्सेन एकवारम् ऊधसः प्रणोदनात् तत्क्षणं धेनुः तमेव पादेन प्रहृतवती । हिल्डा अवदत् – 'एषा शिशुः गोवत्सः इव करोति । एषापि तद्वत् एव यथा वेदना स्यात् तथा मम वक्षोजं प्रणोद्य चोषति स्म ।'

तावत्पर्यन्तं स्वस्मिन्नेव किमपि आलोचयता काळिङ्गेन उक्तम् – 'केवलं वेदना भवति किम् ? तथा प्रणोदनेन सन्तोषः न भवति किम् ?'

'डियर्, इदानीं मनःशास्त्रस्य प्रश्नान् मा पृच्छतु । सन्तोषस्तु भवति । इदानीं कापि धेनुः न पाययति खलु, कुतः वदतु । धेनवः मनुष्यवत्सान् पाययन्ति इति भवदुक्तमेव असत्यम् ।'

'तथा न । एतासां धेनूनां रब्बर्नालिकया दोहनमेव अभ्यस्तम् अभवत् । स्ववत्सस्यैव पायनानुभवरहिता धेनुः मनुष्यापत्यं कथं सङ्गमयति ?'

'तदपि सत्यं स्यात् । इदानीं किं करवाम ?'

एकं निमेषम् आलोच्य, काळिङ्गः अवदत् – 'वत्सं सङ्गमयित्र्यः धेनवः समन्ततः ग्रामे सन्ति । किन्तु अस्मभ्यं कोऽपि न ददाति । इतोऽपि कश्चन विषयः, सर्वाः धेनवः तावद्रीत्या साधवः न भवन्ति । सापि विशिष्टजातीया धेनुरेव भवेत् । अस्मासु पुण्यकोटिजातिः इति आसीत् खलु, तस्याः या कापि धेनुः भवतु, पाययति ।'

'का सा ?'

'सा एव, भवत्या जमालम् आदिश्य घातिता' एतत्कथनावसरे सा अवहेलनीया इति, अथवा उद्वेजनीया इति वा आलोचनं काळिङ्गस्य नासीत् । तथापि हिल्डा तत्क्षणं व्यग्रा अवदत् – 'एतस्मिन् अवसरे भवानपि माम् अवहेलयितुं स्थितः किम् ? तस्याः मांसं भवान् न अभक्षयत् किम् ?'

'अवहेलयितुं न, केवलं विषयः उक्तः । तज्जातीयाः धेनवः सर्वाः मम मात्रा न नीताः किमु ? मरणात् पूर्वं सर्वाः अपि वेङ्कटरमणाय दत्तवती खलु । तं विहाय मया ज्ञातमिव अन्यत्र कुत्रापि तज्जातिः धेनुः नास्ति ।'

हिल्डा निरुत्तरा जाता । शिशुः इतोऽपि उच्चस्वरेण भृशं क्रन्दन्ती आसीत् । अनुस्यूततया आक्रन्दनेन तस्याः कण्ठस्य नाड्यः उच्छूनाः जाताः । न केवलं तत्, नेत्रद्वयमपि उच्छूनतां प्राप्य रक्तवर्णम् अभवत् । तां रमयितुं प्रयतमाना हिल्डा अवदत् – 'एतादृशः समयः इत्युक्ते वेङ्कटरमणः अपि द्रुतः स्यात् । गत्वा निवेद्य आगच्छतु ।'

'सः द्रुतः न भवति । न तावदेव । हिल्डे, मम जीवने वा कदापि अननुभूतस्य अत्यन्त–तिरस्कारस्य परिस्थितौ माम् अहमेव नोदयन् न गच्छामि । अहं मृतश्चेदपि वरम् ।'

हिल्डा एकं निमेषं स्तब्धा अभवत् । किन्तु तावदेव शिशुः पुनरपि श्वासं बध्नतीव आक्रन्दितवती । सा तत्क्षणम् अवदत् – 'डियर्, एषः भवतः मरणप्रश्नः न भवति; एतस्याः शिशोः मरणस्य उत जीवितस्य प्रश्नः । पितृभूतः शिशोः जीवितस्य अपेक्षया स्वस्य अभिमानः एव महान् इति वदति चेत् सः केवलम् अहङ्कारः भवति ।'

'तर्हि भवती एव गच्छतु ।'

'गच्छामि । गच्छतु इति भवान् मां मुक्तकण्ठं वदतु । एतस्याः शिशोः भवतश्च कोऽपि सम्बन्धः नास्ति किम् ? एतस्याः मुखं भवतः मातुः इव अस्ति इति स्मृत्वा वदन् अस्ति किं नु ?'

कालिङ्गस्य किमपि उत्तरं न भासितम् । अपमानम् आत्मतिरस्कारः, विडम्बनाबुद्धिः – इत्यादिभिः नानाविधैः निर्वेदभावैः तस्य मनः निष्पीडितम् आसीत् । स्वस्य सर्वेषां प्रयत्नानां वैयर्थ्येऽपि हिल्डा इतोऽपि शिशुं रमयितुं यतमाना अस्ति । पञ्चनिमेषेषु निश्चेष्टिततया स्थितः कालिङ्गः अवदत् – 'इदानीं सार्धत्रिवादनम् अभवत् । वेङ्कटरमणः धेनुभिः सह गिरौ एव तिष्ठति । भवती शिशुना सह गृहं गच्छतु । अहं गिरिं गच्छामि ।'

## 4

वेङ्कटरमणः कल्याण्याः अधःस्तरगते उपवने धेनूः परित्यज्य उपविष्टः आसीत् । पूजावसरे विद्यमानं शुचिवस्त्रं धृतवतः तस्य हस्ते किमपि पुस्तकम् आसीत् । पृष्ठतः हठात् तस्य पुरतः तिष्ठन् कालिङ्गः अवदत् – 'पश्यतु, भवान् इदानीं किमपि स्यात् वक्तुं शक्नोति । मम पत्न्याः वक्षसि व्रणं भूत्वा क्षीरं स्थगितम् अस्ति । चतुर्मासीया कन्याशिशुः मातुः स्तन्यं विना अन्यत् किमपि न उपस्पृशति । रुदं रुदं मरणस्थितौ अस्ति । भवतः धेनेषु अन्यतमीं ददातु । तस्याः ऊधस्तु अपि पाययित्वा पश्यामि ।'

कालिङ्गस्य पत्न्याः रोगं, शिशोः समस्यां चापि वेङ्कटरमणः जानाति । तथापि

सः किमपि अजानन् इव तूष्णीम् उपविष्टः आसीत् ।

'इदानीं भवान् शिशुं जीवयेत्' काळिङ्गः पुनरपि निवेदितवान् ।

'कुतः, भवतः गोष्ठे धेनवः न सन्ति किम् ?'

'सन्ति । ताः शिशोः मुखं न सङ्गमयन्ति ।'

'कुतः ?'

काळिङ्गः उद्विग्नावस्थायाम् आसीत् । स्वस्य सकलशक्तीः रूढयित्वा आगत्य अत्र स्थितः सः किमपि अनालोचयन् अवदत् – 'यन्त्रद्वारा दोहनाभ्यस्तानां तासां शिशुमुखलगनेन कापि स्थितिः भवतीति भाव्यते ।'

'एवं चेत् मेशिन्नलिकामेव शिशोः मुखे ददातु नाम ।'

तस्य वचनस्य व्यङ्ग्यार्थम् इदानीं जानन् काळिङ्गः अवदत् – 'वेङ्कटरमण, भवान् इदानीं यथेष्टां व्यङ्ग्योक्तिं वदेत् । मरणासन्नां शिशुं द्रष्टुम् अशक्तः पिता भूत्वा अहं भवतः पुरतः स्थितवान् । भवति किञ्चिदपि मानवत्वम् अस्ति चेत् एतादृशसमये लघुवचनम् अप्रयुज्य तूष्णीम् एकां धेनुं ददातु ।'

'स्वोदरे जाता शिशुः मरणासन्ना चेत् कीदृशस्यापि मानवता उद्गच्छति, दैवता अपि उद्गच्छति । किन्तु स्वं प्रसूतवती दुःखे अस्ति चेत् यः कोऽपि उच्चः आदर्शः न उद्गच्छति खलु ? काळिङ्ग, भवान् ममापेक्षया कनीयान्; मम सन्निधौ अक्षरं बोधयित्वा प्रवृद्धः बालकः । मह्यं धर्मबोधं मा करोतु, गच्छतु । भवतः शिशुः मृता चेत् प्रपञ्चस्य न कापि हानिः ।'

वेङ्कटरमणं वक्तुं किमपि उत्तरमपि काळिङ्गस्य मनसि न भासितम् । द्वित्रनिमेषेषु ओष्ठं कम्पयन् अनन्तरं किमपि वक्तुं मुखेन प्रवृत्तः । तावदेव वेङ्कटरमणः अवदत् – 'भवतः सन्तानं, नाम भवत्तः जातम्, भवतः पत्न्याः उदरे प्रवृद्धं मृतं चेदेव धर्माय हितम् । अद्य तस्य जीवितरक्षणाय इति मम धेनुः दत्ता इति भावयतु, अग्रे सा, तस्याः उदरे जायमानानि अपत्यानि, पौत्राः, प्रपौत्राः संहत्य सहस्रसहस्रधेनूः हत्वा भक्षयन्ति । तावतीनां धेनूनां हत्यायाः पर्यायेण दायित्ववहनार्हः मूर्खः न भवामि । तूष्णीम् इतः प्रस्थाय गच्छतु ।'

काळिङ्गः ततः जिगमिषुः आसीत् । किन्तु पादम् उत्थाप्य पृष्ठतः स्थापयितुं तस्य शक्तिः नासीत् । तस्य मातुः मरणदिने गोदानावसरे यथा सः बन्धितः इव अपमानेन आवृतः त्रिघण्टाधिकसमयेन स्थितः आसीत् अधुनापि तयैव रीत्या स्थितः आसीत् ।

वेङ्कटरमणः पुनरपि अवदत् – 'कालिङ्गज्जस्य वंशः वर्धताम् इत्यहं प्रतिदिनमपि पूजावसरे पार्थितवान् आसम्। इदानीं किं प्रार्थये, जानाति किम् ? सः निर्वंशः भूयात्। सताम् उदरे दुःसन्तानवृद्धेः प्रारम्भानन्तरम् एषः वंशः न शिष्येत । गौडज्जतायव्वयोः मुक्तिः प्राप्ता एव अस्ति । इतः केवलं तेषां रक्तेन सृष्टः इति एकेनैव कारणेन भवतः, भवतः सन्तानस्य च जीवितस्य रक्षणस्य च आवश्यकता नास्ति । देवः मङ्गलाय एव भवतः एतादृशीं स्थितिं दत्तवान् । गच्छतु, मातुः शवस्य भूतले लगनं भवतः लभ्यं नासीत् । सा माता एव एतच्छिशुरूपेण जाता इति तस्याः मुखमेव एतच्छिशोः मुखमस्तीति, अहं सर्वं श्रुतवान्। गृहभृत्याः सर्वं वदन्ति। शिशोः मरणानन्तरं यथाविधि भूलगनं करोतु । मातृऋणं छिन्नं भवति ।'

वेङ्कटरमणः एतावत्क्रूरं भाषितुं शक्नोति इति तेन न भावितम् आसीत् । स्वस्य प्रत्येकं वाक्येनापि सः कालिङ्गस्य अन्त्रमेव छिनत्ति स्म । कालिङ्गस्य नेत्रयोः अश्रु पूरितम् अभवत्। सः अपृच्छत् – 'अहम् अन्तिमवारे निवेदयन् अस्मि, वदतु, ददाति, उत न वदतु। भवान् केवलं कोपनिर्वर्तनस्तरे एव व्यवहरति, अथवा उन्नतस्तरे व्यवहरति, अन्तिमवारे वदतु।'

अनेन वचनेन वेङ्कटरमणस्य लज्जा जाता इव अभवत्। सः स्वस्मिन्नेव निमेषद्वयम् आलोचनानन्तरम् अवदत् – 'पश्यतु, अहं एकां गां ददामि। किन्तु जानातु। दानरूपेण प्राप्ता इति सा मदीया गौः । केवलं शिशौ करुणाहेतोः चतुर्षु दिनेषु भवति परित्यज्यते तावदेव । भवति वा भवतः पत्न्यां वा विश्वस्य अहं तां भवतः वशे नार्पयामि। भवतः कर्मचारी मल्लेशः अस्ति खलु, तम् आहूय आगच्छतु। तस्मिन् विश्वासेन तस्य वशे एतां ददामि । मम तस्मिन् विश्वासः अस्ति ।'

कालिङ्गः ततः कल्याण्याः समीपम् आगतः। किन्तु तावद्भागस्य तस्य फार्म्स्थलस्य च मध्ये कत्तालवृतिः मूलैः व्यापिनी उद्गता आसीत्। ताम् उन्मूल्य रन्ध्रं कृत्वा प्रवेशनं सुकरं कर्म नासीत् । अन्यच्च तस्य फार्म्स्थलं देवस्थानतः पृथक्कर्तुम् उद्भावितायां वृतौ रन्ध्रकरणं ज्ञातं चेत् वेङ्कटरमणः तूष्णीं तिष्ठेत् किम् ? – इति भयमपि अभवत्। हिल्डा शिशुं सान्त्वयितुं यत्नवती दूरे स्थिता तेन दृष्टा। समीपे आगन्तुं तां संज्ञापितवान्। अनन्तरं मल्लेशं प्रेषयितुम् उच्चैः आक्रुश्य अवदत् ।

शेड्तः धावित्वा आगतं मल्लेशं सः अवदत् – 'एतस्यां वृतौ प्रवेशनाय कुत्रापि स्थलं नास्ति । वक्रेण मार्गेण आगच्छ।'

'न महोदय, अत्रैव एकस्मिन् पार्श्वे स्थलम् अस्ति' इति वदन् मल्लेशः द्वयोः कत्तालयोः मध्ये स्थापितं वेणुकण्टकम् उद्गृह्य प्रवेशनेन उल्लङ्घ्य आगतः ।

'एतत् स्थलं केन कृतम् ? भवता कथं ज्ञातम् ?'

सः सङ्कोचम् अनुभूय एव अवदत् – 'अस्मत्पुरुषाः एव कृतवन्तः महोदय । पूजासमये अत्रैव प्रविश्य आगच्छन्तः वयं सर्वे तीर्थं पीत्वा प्रसादं खादित्वा आगच्छामः ।'

स्वस्य पुरतः आगत्य स्थितं मल्लेशं वेङ्कटरमणः अवदत् – 'पश्य, अस्मद्गृहं गत्वा एषा शुक्ला धेनुः अस्ति खलु, तस्याः बालः वत्सः अस्ति, ललाटे गोपीचन्दनस्य चिह्नम् अस्ति, तम् आदाय आगच्छ । तिष्ठ, तथैव त्वं निवेदयसि चेत् ते न यच्छन्ति । स्वीकुरु एतत् पुस्तकम्, एतत् पात्रं च । द्वयमपि अभिज्ञानाय दत्त्वा मया उक्तम् इति वद ।'

मल्लेशः अग्रहारं धावितवान् । तस्य आगमनपर्यन्तं स्वेन किं कर्तव्यम् इति अजानता गृहं गन्तव्यम् इति काळिङ्गेन चिन्तितमपि पद्भ्यां गमनं तस्य अशक्यम् अभवत् । तावदेव किञ्चिदग्रे गतायाः धेनोः पृष्ठतः वेङ्कटरमणः एव गतः । सर्वासां धेनूनां कण्ठेषु वेङ्कटरमणेन क्षुद्रघण्टिकाः बद्धाः आसन् । तस्य गिरेः प्रशान्ते पर्यावरणे तासां किणकिणनादः मनसि अलौकिकभावम् उद्भावयति स्म । एतत् दृश्यं काळिङ्गस्य अतिनूतनं नासीत् । तस्य किशोरावस्थायां तस्य पितामहेनापि धेनवः एवंरीत्या एव पालिताः दृष्टाः । 'चरणाय आगच्छन्तीनां धेनूनां गलेषु पूजानादः भवेत् । तदर्थमेव घण्टाबन्धनम्' इति पितामहः वदति स्म । रात्रिवेलायां गोष्ठम् आगतासु तासु घण्टां विमोच्य स्थापयन्ति स्म ।

एकस्यां घण्टायां वेङ्कटरमणस्य धेनवः मन्दं चरन्त्यः ग्रामाभिमुखं प्रसृताः । तावदेव वत्सम् आदाय मल्लेशः आगतः । वत्सस्य मातुः समीपं मल्लेशम् आनीय गत्वा वेङ्कटरमणः अवदत् – 'अत्र पश्य, एतस्याः पुच्छं परिगृह्य भवान् प्रमाणं कुर्यात् । ते कदाचित् एतां हत्वा भक्षयन्ति चेत् तस्य पापं त्वां सङ्गम्य त्वं नरकं गच्छेः । श्वः पूजासमये धेनुं वत्सं च अत्र आनीय दद्याः । द्वयमपि तव शेड्स्थले एव बन्धनीयम् ।'

मल्लेशस्य धेनोः पुच्छं परिगृह्य प्रमाणवचनबोधनसमये काळिङ्गः एव तत्र आगतः । वेङ्कटरमणः तेन सह न सम्भाषितवान् । इतराः धेनूः सञ्चोद्य प्रस्थितः । मल्लेशस्य हस्ते स्थिता धेनुः स्वस्य अग्रजाभिः अनुजाभिः सह गन्तुं रज्जुम् आकृष्टवती, तथापि मल्लेशेन तस्याः मुखं संवाह्य कण्ठम् आलिङ्ग्य सान्त्वनानन्तरं तस्य पृष्ठतः आगतवती ।

काळिङ्गः अवदत् – 'किमिदं तत्र प्रस्थितः ? तस्यां वृतौ धेनुः प्रवेष्टुं शक्नोति किम् ?'

'प्रवेशयितुं शक्यते । आगच्छतु महोदय ।'

प्रथमतः मल्लेशः वंशिकाकण्टकानि अपनीय पुरतः गतः । तस्य पृष्ठतः धेनुः अपि प्राविशत् । वृतिः तावता एव मुखं विस्तृतवती । वत्सेन सह काळिङ्गस्य आगमनानन्तरं मल्लेशः उद्घाटितां वृतिं न पिहितवान् । हिल्डा वृतेः समीपे एव स्थिता आसीत् । शिशुः रुदित्वा रुदित्वा इतःपरं रोदितुं शक्त्यभावात् तूष्णींभावम् आश्रयन्ती आसीत् । हिल्डां पश्यन्ती धेनुः किञ्चित् भीता अभवत् । मल्लेशः एव शिशुं हस्तेन उद्गृहीतवान् । हिल्डा दूरं गता । काळिङ्गः वत्सं हस्तात् परित्यक्तवान् । सः आक्रम्य, आगत्य एकस्मिन् पार्श्वे ऊधसि मुखं लगितवान् । मल्लेशः अपरस्मिन् पार्श्वे उपविश्य शिशोः मुखे एकं स्तनम् आदत्तवान् । मल्लेशस्य स्तननिष्पीडनेन तस्याः मुखे क्षीरं स्यन्दितम् । क्षीरं शिशुना आस्वादितम् इव भासितम् । मल्लेशः पुनः मन्दं स्तनं निष्पीडितवान् । शिशुः क्षीरं चोषितवती ।

दूरेण पश्यन्त्याः हिल्डायाः न केवलम् आश्चर्यम्, कौतुकम् अपि अभवत् । एतस्याः पशोः स्तनात् क्षीरं चोषयित्वा तूष्णीं भवन्ती शिशुः कूप्याः चोषकेण कुतः न पिबेत् ? कियद्विचित्रा एषा शिशुः ! इति सा स्वस्मिन् एव स्वयं पृच्छन्ती आसीत् । किन्तु समुचितम् उत्तरं तु न भासितम् ।

## 5

रात्रौ पुनरपि पूर्णोदरं पीतवती शिशुः शब्दकलकलं विना शयित्वा निद्रिता । किन्तु काळिङ्गेन निद्रा न प्राप्ता ।

तस्य मनः स्वबाल्यं स्मरति स्म । स्वयमपि एतादृश्याः कस्याश्चन पुण्यकोटिधेनोः पक्षतः – सा इदानीं स्वशिशुना पीतक्षीरायाः मातामही वा प्रमातामही वा स्यात् – स्तन्यपानस्य स्मरणम् उद्भूय, उद्भूय अधिगतम् आसीत् । तेन साकं स्वमातुः स्मरणं प्राप्तम् । तस्य पितामह्याः तस्य पुरतः अन्यस्याः स्त्रियाः सविधे सम्भाषमाणायाः स्मरणं तस्य अभूत् । तस्य जन्मतः एकस्मिन् एव वर्षे तस्य मातुः स्तन्यं स्तब्धम् आसीत् इति । शैशवे स्तन्यमेव भवेदिति तेन हठः कृतः आसीदिति । ततः आरभ्य धेनोः ऊधःपानाभ्यासवता तेन अग्रे कियत्स्वपि दिनेषु पीतमिति । बाल्यदिनैः सह पितामहपितामह्योः स्मरणम् अभवत् । मातुः स्मरणम् अपि उच्छ्रितम् अभवत् । एकं

वर्षं स्वयं तस्याः स्तन्यं पीतवान् इति सर्वजनसत्य–विचारेण तस्य तद्दिने कोऽपि अर्थविशेषः भासितः ।

निद्रायाः अप्राप्त्या समीपस्थितेन करदीपेन दृष्टा हस्तघटी रात्रेः सार्धद्विवादनं प्रदर्शितवती । हिल्डयापि निद्रा न प्राप्ता इति तस्याः लोठनेनैव तेन ज्ञातम् आसीत् । सः अपृच्छत् – 'सद्यः विंशतिदिनेषु जरद्धेनवः विक्रीताः इत्युक्तं खलु. तस्य नाम किम् ?'

हिल्डा स्मृत्वा अवदत् – 'सः ताल्लूकुवासी इति । शुकूर्साहेबः इति । कुतः ?'

'कुतोऽपि न ।'

अन्तिमयामसमये तस्य किञ्चित् निद्रा प्राप्ता । प्रभाते सप्तवादने प्रबोधनात् तत्क्षणम् उत्थाय लघुत्वरया मुखं प्रक्षालितवान् । तावदेव मल्लेशः गृहस्य पुरतः धेनुं संस्थाप्य शिशुं क्षीरं पाययति स्म । काळिङ्गः युतकं कञ्चुकं च धृत्वा कोषे अधिकं धनं पूरितवान् ।

हिल्डा अपृच्छत् – 'कुत्र गमनम्, एवम् अनिरीक्षिततया ?'

'ताल्लूकुकेन्द्रं गत्वा आगन्तव्यम्' – इत्येतावदेव सः अवदत् ।

प्रातःकालिकमोटर्यानेन गत्वा शुकूर्साहेबम् अभिज्ञाय पृष्टे सः अवदत् – 'महोदय, मया क्रीतानां तासां विंशतिः दिनानि अतीतानि । तदानीमेव जनपदस्य महाकण्ट्राक्टर्जनाय विक्रीताः ।

'तर्हि भवानपि मया साकम् आगच्छतु । तस्य कियत्यपि धनापेक्षा भवतु अहं ददामि । मम धेनवः सर्वाः मया अपेक्षिताः ।'

'अहम् आगच्छामि । किन्तु गावः तस्यापि अधीने न स्युः । संहत्य पञ्चाशत् वा शतं वा यदा भवन्ति तदा सः रेलव्यागन्मध्ये प्रपूर्य मुम्बयीनगरं प्रेषयति ।'

'तर्हि एतासां हत्वा विक्रयणं मुम्बयीनगरे किम् ?'

'अन्यत्रापि कुर्वन्ति । किन्तु अस्माकं महाकण्ट्राक्टर् मुम्बयीनगराय एव यातं करोति । तत्र लभ्यं धनम् अन्यत्र न लभ्यते ।'

शुकूर्साहेबेन साकं काळिङ्गः यानम् आरुह्य जनपदकेन्द्रं गतवान् । कण्ट्राक्टर् अवदत् – 'ताः मुम्बयीनगराय प्रेषितवतः मम तदानीमेव दश दिनानि अतीतानि । ताः भवद्भिः प्राप्यन्ते उत न इति वक्तुं न शक्यते ।'

'कुतः ?'

'एतावति काले ताः मुम्बयीनगरं प्राप्ताश्चेत् छित्त्वा मांसप्रेषणाय सज्जीकृतवन्तः भवन्ति । क्रीतानां पशूनाम् एकस्मिन् दिने विना कारणं स्थापनेन तृणं जलम् इति अधिकव्ययेन नष्टं भवति ननु ।'

'कथञ्चिदपि भवतु । अहम् अन्विष्य आगच्छामि । किं कर्तव्यम् इति वदतु ।'

'अहं चिटिकां लिखिख्य ददामि । मुम्बयीनगरे एव कश्चन महान् कण्ट्राक्टर् अस्ति ।'

अस्मत्प्रदेशेषु गवां व्यवहारः सर्वः तस्यैव । तस्य पक्षतः जनाः एव अत्र आगत्य पशूनां यातं कृत्वा गच्छन्ति । भवद्भिः ते गावः लभ्यन्ते चेदपि तेषां यातव्ययः, भृत्यव्ययः, एतावद्दिनपर्यन्तः तृणजलव्ययः, तदुपरि तस्य शुल्कांशः – सर्वं संहत्य एव स्वीकरोति । तत् सर्वं दातव्यम् ।'

एतत्कार्याय स्वेन मुम्बयीनगरं गन्तव्यं स्यात् इति काळिङ्गेन न निरीक्षितम् । कोषे धनं तु आसीदेव । किन्तु वस्त्रं वसनं किमपि नासीत् । किञ्च गृहे निवेदितमपि नासीत् । कण्ट्राक्टर्तः पत्रं स्वीकृत्य तत्क्षणे प्राप्तेन यानेन शुकूर्साहेबेन साकं ताल्लूकुकेन्द्रम् आगतः । ततः मोटर्याने उपविश्य साक्षात् स्वगृहं गतः ।

सायं चतुर्वादनम् आसीत् । षड्वादने ताल्लूकुकेन्द्रगमनाय एकं यानं लभ्यम् आसीत् । तेनैव गत्वा, ततः लभ्यं रेलयानं प्राप्तव्यम् इति सः निश्चितवान् । किन्तु गृहम् आगत्य दृष्टं चेत् हिल्डा नासीत् । 'गोगोष्ठं गता' इति तावदेव तत्र आगतः मल्लेशः अवदत् । काळिङ्गः स्वस्य चर्ममय्यां लघुयानपेटिकायां चत्वारि वस्त्राणि संस्थाप्य इतोऽपि धनम् आदाय सज्जः अभवत् । पाकगृहं गत्वा, यावत् स्थितं परिवेष्य भुक्त्वा, यानपेटिकां हस्तेन परिगृह्य, तस्य यानमार्गपार्श्वे आगमनवेलायां हिल्डा एव अभिमुखं प्राप्ता । तस्याः बाहौ शिशुः आसीत् । जाकः पृष्ठतः पृष्ठतः क्रीडन् आगच्छति स्म । 'डियर् कुत्र इदम् ? मां किमपि न वदति खलु ?' इति पृष्टवतीं पत्नीम् – 'आगच्छतु, यानमार्गसमीपे एव वदामि' इत्युक्त्वा सः अग्रे पादं न्यस्तवान् । तस्य पृष्ठतः प्रस्थितां ताम् अवदत् – 'सद्यः विंशतिदिनेभ्यः पूर्वं भवत्या घातकाय विक्रीताः खलु, जरद्धेनवः ताः पुनः आनेतव्याः इति गतः आसम् । तेन सर्वाः मुम्बयीनगरं प्रेषिताः इति । इतोऽपि अमारिताः जीविताः एव तिष्ठन्ति चेत् ताः आनेतव्याः इति मुम्बयीनगरं प्रस्थितोऽस्मि ।'

'किमिदम् एषा बुद्धिः भवतः ?' आश्चर्येण सा अपृच्छत् ।

'हिल्डे, भवती इतःपरमपि अर्थं न ज्ञातवती किम् ?'

'किमिति भवानेव वदतु ।'

'अस्मच्छिशौ मरणस्थितिम् आपन्नायां तस्यै स्वस्य ऊधस्यं पाययित्वा जीवयन्तीनां मातृधेनूनां जरद्वयसि मातृवत् परिपालनं न कर्तव्यं किम् ? भवत्या विक्रीताः धेनवः, वृषभाः सर्वे तादृशाः मातापितरः एव ।'

तस्य मुखात् एतानि वचनानि श्रुतवती हिल्डा स्तब्धा इव अभवत् । निमेषद्वयं मूका इव स्थित्वा अनन्तरं – 'भवान् एतेन पूजकेन परिवर्तितः अभवत् ननु डियर् । भवतः मनः इदानीं भावनावेशे स्थिता स्यात् । किञ्चित् शान्तः आलोचयतु' इत्युक्त्वा तस्य हस्तगतां यानपेटिकाम् आक्रष्टुं गता ।

किन्तु तत् दृढं परिगृह्य काळिङ्गः – 'वस्तुतः अहं तेन न परिवर्तितः । एषः मयि बाल्यवयसः स्थितः विश्वासः एव । मध्ये कतिपयदिनेषु विस्मृतवान् । एषा शिशुः इदानीं तं दृढं कृतवती तावदेव' इति वदन् नतः, तस्याः बाहुगतायाः शिशोः कपोलं भावुकतया चुम्बितवान् ।

तावदेव यानमार्गः प्राप्तः । काळिङ्गः मार्गस्य तटे सद्यःकाले लघुगात्रेण वर्धमानस्य कस्यचित् वटक्षुपस्य समीपे उपविष्टः । समीपे एव उपविष्टा हिल्डा अवदत् – 'डियर्, भवान् इतोऽपि भावुकत्वभाषया वदन् अस्ति । भवता एवं कृतं चेत् पशुपालनस्य आर्थिक-तोलनं किं स्यात् इति चिन्तयतु । ह्यः आरभ्य दृश्यमानं किमपि इन्द्रजालं न । कश्चन शिशुः स्तन्यमेव पेयम् इति हठम् अकरोत् । काचन धेनुः, धेनवः सर्वाः सामान्यतः साधवः एव, स्वस्य ऊधसि शिशोः मुखलगनेनापि पादेन अप्रहृत्य तूष्णीं स्थिता । एवं कियन्तः अपि साधुप्राणिनः तूष्णीं तिष्ठन्ति । गिरिवनदेशेषु जनाः अजक्षीरं पिबन्ति । बालाः अजास्तनमेव चोषयित्वा पिबन्ति । किन्तु ते तं हत्वा न भक्षयन्ति किम् ? कस्यचन प्राणिनः क्षीरम् ऊधस्तः पात्रे दोग्ध्वा पानस्य साक्षात् पानस्य च कोऽपि मूलभूतः भेदः नास्त्येव ।

काळिङ्गः तूष्णीम् उपविष्टः आसीत् । उत्तरं निरीक्ष्य, तेन न भाषिते हिल्डा अवदत् – 'भवता एतावद्दिनेषु अधीतं विज्ञानम्, अमेरिकायां प्राप्तं शिक्षणं सर्वं भवतः भावावेश-झञ्झावाते प्रवाहयति किम् ?'

'न, एषा विद्युच्छक्तिः, वैज्ञानिकगोभरः, एतत् सर्वम् अपि मम आवश्यकम् । पशूनां रोगाः प्राप्ताश्चेत् उपशमनकारि विज्ञानमपि आवश्यकम् । किन्तु ते मनुष्याणाम् उपयोगार्थमात्रं विद्यमानाः प्राणिनः इत्येषा दृष्टिः वायौ प्रवाहनीया ।'

हिल्डा तूष्णीम् उपविष्टा आसीत् । एकनिमेषम् आलोचयन् अनन्तरं कालिङ्गः अवदत् – 'अस्माकं पितामहः जीवितकाले वदति स्म । तदेव वचनं वेङ्कटरमणः अपि वदति । श्रद्धायाः आविर्भावार्थम् अपि संस्कारः आवश्यकः । मम सः संस्कारः जन्मतः एव आसीत् इति भासते । अहं मैसूरुनगरे महाविद्यालयशिक्षणावसरे कस्मिंश्चित् दिने अजानन् एव कस्यचन युरोपियन् प्राचार्यस्य गृहे गोमांसभोजनं कृतवान् । तदवगमनानन्तरं पञ्चगव्यं पीत्वा प्रायश्चित्ताचरणपर्यन्तं मनसा न सोढम् आसीत् । एतस्मिन्नन्तरे अमेरिका–गमनानन्तरं मम श्रद्धा परिवर्तिता आसीत् । इदनीं पुरातनी पुनः स्वशक्तिं स्थापितवती ।'

हिल्डा इदानीमपि मौनेन उपविष्टा आसीत् । सा स्वस्मिन् एव किमपि गम्भीरतया आलोचयतीति तस्याः मुखे व्यक्तम् आसीत् । कालिङ्गः अवदत् – 'भवत्याः संस्कारः अन्यः इति जानामि । अतः एव मयि प्राप्ता श्रद्धा भवत्यां न प्राप्ता । ह्यः आरभ्य आवाम् उभावपि समानम् अनुभवन्तौ स्वः । किन्तु भवत्याः किमिति श्रद्धा न उदेति ?'

हिल्डायाः नेत्रयोः अश्रु पूर्णम् अभवत् । असहमाना रुदती सा आक्रोशत् 'क्रूर, कालिङ्ग, भवान् क्रूरः, घातकः, मां घातयन् अस्ति ।'

'डार्लिङ्ग् समाश्वसिहि ।'

'कीदृशं समाधानम् ? तावद्दूरदेशतः माम् अत्र आनीतवान् । भवती एव मम बुद्धेः निर्देशिका इति अभिमानस्थाने उपवेशितवान् । इदानीम् अहमेव भिन्ना, मम संस्कारः एव भिन्नः, भवत्याः, संस्कारः एव भिन्नः इति मम पुरतः एव उपविश्य वदन् अस्ति । वैवाहिक–निष्ठा न भवेन् किं भवतः ?'

'भवती प्रस्थाय गच्छतु इति मया कुत्र उक्तम् ? अहं कियत् भवतीं प्रीणयामि इति भवती न जानाति किम् ? डार्लिङ्ग्; मम वचनस्य अर्थं जानातु ।'

'नो, नो । भवतः श्रद्धा मां बौद्धिकतया हिनस्ति । तया सह अहं सङ्गता सुखेन स्थातुं न शक्नोमि । मया एव इतः प्रस्थाय गन्तव्यम् ।'

'अहं भवतीं न त्यजामि । किञ्च एतां शिशुं किं करोति ?'

हिल्डा पुनरेकवारं रुदती अवदत् – 'भवति विश्वस्य विवाहिता अभवम् । भवतः शिशोः माता अपि अभवम् । मां भवान् नानाबन्धनैः बद्धवान् । इदानीं भवतः श्रद्धामार्गं भवान् गृहीतवानस्ति ननु । अहमेव हि एतस्मिन् मार्गे आगन्तुं न शक्नोमि । भवता आकृष्टया

मया तस्मिन् अपरिचितमार्गे महता कष्टेन चलनीयम् । अथवा विरुद्धदिशि आकृष्य पृथक् स्थातव्यम् । कथमपि क्रियते चेदपि मम हिंसा, क्रूरहिंसा भवेत् । कालिङ्ग्, पत्न्याः प्रीणनं नाम एतन्न ।'

तावदेव यानागमनशब्दः जातः । तावत्पर्यन्तं दूरे क्रीडन् जाकः 'मोटार्' इति उच्चैः अवदत् । काळिङ्गः उत्थाय स्थितः । हिल्डा तस्य हस्तं परिगृह्य अवदत् – 'भवता इदानीं न गन्तव्यम् । गन्तव्यं चेत् माम् अभ्युपगमय्य एव गन्तव्यम् ।'

यानं समीपम् एव आगत्य तिष्ठदासीत् । 'भवत्याः अभ्युपगमनपर्यन्तं जरद्गावः न जीवन्ति । किञ्च यावता वादेनापि भवती न अभ्युपगच्छति अपि । अहम् एतेनैव यानेन गच्छामि' इत्युक्त्वा सः यानम् आरोहन् आसीत् । हिल्डा तस्य हस्ते स्थितां यानपेटिकां दृढं गृहीतवती । जनानां पुरतः कलहः न कर्तव्यः इति यानपेटिकां तस्याः हस्ते एव परित्यज्य काळिङ्गः यानम् आरुह्य 'रैट्' इति स्वयमेव उच्चैः अवदत् । इतोऽपि पूर्णतया न स्थगितं यानम् अग्रे गतम् । 'क्रूर, घातक, मूढ' इति वदन्ती हिल्डा पुनरपि रुदितवती । तया रुदितं यानस्य पृष्ठभागस्थेन काचेन तेन दृश्यते स्म ।

## 6

रात्रिरेलयानम् आरूढस्य काळिङ्गस्य शयितुं स्थानं प्राप्तम् । पूर्वरात्रौ निद्राभावेऽपि तस्मिन् निद्रा न प्राप्ता । तथास्थितः एव सः नूतनः मनुष्यः अभवत् । स्वस्य पितामहः, पितामही, माता च एतेषां श्रद्धायां स्वयमपि निविष्टः इति भावना तम् आवृता आसीत् । किन्तु स्वस्य श्रद्धायाः हिल्डया एतावत्तीव्रतया विरोधने कारणं किमिति तेन न ज्ञातम् । स्वगता श्रद्धा एव तया न प्राप्ता चेत् मास्तु । अहं जरद्गाः प्रत्यानीय संरक्षामि चेत् तस्याः जायमाना हानिः का ? तेन तस्याः मनसः हिंसा कुतः स्यात् इति चिन्तयति स्म । एतस्मात् एकस्मात् कारणात् हिल्डा मां परित्यज्य गच्छेत् किम् इति प्रश्नः मनसि मथ्नाति स्म । ताम् अभ्युपगमयितुमपि तु अग्रिमयानस्थानके अवतीर्य प्रतिनिवृत्तो भवेयम् इत्यालोचने कदाचित् भासमानेऽपि उत्थातुम् अशक्तः शयितः एव आसीत् । मध्यरात्रात्ययानन्तरं किञ्चिदिव निद्रा प्राप्ता ।

अनन्तरदिने प्रातः प्रबोधनसमये किञ्चन महास्थानकं प्राप्तम् । एतेषां रेल्स्थानक–

प्लाट्फार्म्समीपे एव किञ्चन गूड्स्यानं स्थितम् आसीत् । तस्य सर्वेषु व्यागन्स्थलेषु पूर्णतया जरद्धेनवः, जरद्वृषभाः पूरयित्वा बद्धाः आसन् । अन्ये यात्रिणः मुखं प्रक्षाल्य उपाहारार्थम् अवतीर्णाः, काळिङ्गः धावनेन गत्वा गूड्स्यानस्य सर्वाण्यपि व्यागन्स्थलानि आरुह्य अपश्यत् । तस्य धेनुषु कापि दृष्टौ पतिता नाभूत् । एतावद्दिने ताः मुम्बयीनगरं प्राप्ताः स्युः किं नु इत्यालोच्य धावनेन गत्वा स्वरेलयानम् आरूढः । किन्तु रेल्प्रस्थानानन्तरं तस्य कश्चन विषयः स्मृतौ उपस्थितः, हिल्डया विक्रीताः गावः सकलाः स्वेन सम्यक् न दृष्टाः एव । इदानीं तासां दर्शनेन स्वस्य सम्यक् अभिज्ञानाधिगमः भवेदिति विश्वासोऽपि नास्ति । सः धूमक्षुपाणां कर्मणि लग्नः गोष्ठं न गतः एव आसीत् । तस्मिन्नेव अवसरे ग्रामगृहस्य वृषभान् भृत्याः आनीय बद्धवन्तः । तान् वृषभान् पूर्वम् अपि सम्यक् न दृष्टवान् । स्वगोष्ठे स्थितानां चतसृणां जरद्धेनूनां परिचयमात्रं तस्य आसीत् । तासां परिचयम् अवलम्ब्य, तासां प्रापकेन जनपदकण्ट्राक्टर्मुख्येन ताभिः सह प्रेषिताः वृषभाः इत्याधारेण अभिज्ञातुं शक्यते इति आलोचनेन रेल्याने उपविश्य वातायनतः बहिः पश्यति स्म । तदुपवेशनकं रेल्यानं सर्वेषु स्थानकेषु न तिष्ठति स्म । मध्ये गते कस्मिंश्चित् स्थानके किञ्चन धेनूनां गूड्स्यानं स्थितम् आसीत् । तत्र स्वधेनवः स्युः किमु इति आलोचने प्राप्ते एव एतेषां रैल्यानं वेगेन अग्रे धावति स्म । तत् अग्रे सामान्यतःचत्वारिंशत्मैल्पर्यन्तं कुत्रापि न स्थगितम् आसीत् ।

पुणेनगरे अवतीर्णः उदराय अस्वीकृत्य मुम्बयीयानम् आरूढवन् । सायं मुम्बयीनगरे अवतीर्य, स्ववशे स्थितस्य पत्रस्य सङ्केतं विचारयन् गतः । रात्रेः अष्टवादने महाकण्ट्राक्टर् गृहं प्राप्तम् । बृहद्भवने द्वितीये अट्टे वसन् सः महाधनीव दृश्यते स्म । बहिः स्थितं फलकं, गृहस्य राजाङ्गणव्यवस्था, दूरवाणी इत्यादि दृष्टवता काळिङ्गेन सः कथमपि लक्षाधिपतिः जनः एव स्यात् इति परिगणितम् । बृहत् राजाङ्गणम् । भित्तिषु लक्ष्मीः, सरस्वती, बदरीनाथः, केदारनाथः इत्येतेषां चित्रपटाः । भूतले मृदुलः चित्रकम्बलः, सोफाः आसन् । गृहे एव स्थितः कण्ट्राक्टर्, दिनद्वयात् मुखक्षौररहितं रेल्वेप्रयाणे अपरिवर्तितवस्त्रवन्तं काळिङ्गं निर्लक्ष्यतया दृष्ट्वा तेन दत्तस्य पत्रस्य पठनानन्तरम् अवदत् – 'ताः कुत्र सन्तीति वयं न जानीमः ।'

तेन अनुक्तोऽपि सोफायाम् उपविश्य अमेरिकन्शैल्या उच्चारणेन इङ्ग्लिष्भाषया काळिङ्गः अवदत् – 'अहं तावतः दूरात् आगतोऽस्मि । ताः कुत्रापि सन्ति चेदपि भवता अन्विष्य देयाः । डिष्ट्रिक्ट् सप्लै कण्ट्राक्टर् भवति विश्वस्य प्रेषितवान् ।'

श्रेष्ठी एतच्छैल्या इङ्ग्लिष्भाषां न जानाति स्म । तथापि स्वस्य हिन्दुस्तानी-इङ्ग्लिष्भाषया अवदत् – 'ताः भवतः किमिति आवश्यक्यः ?'

'वयं गाः हन्तुं न विक्रीणीमहे । यथास्माभिः न ज्ञातं तथा गृहभृत्याः विक्रीतवन्तः ।'

'श्वः प्रातः अष्टवादने अत्र आगच्छतु । कञ्चन भृत्यं प्रेषयामि । तेन सह गत्वा अन्विष्यतु । भवतां धेनवः काः, ताः आगताः किम्, उत न इति विवरणं वयं न जानीमः । सर्वं कार्यम् अस्माकं निर्वाहकाः कुर्वन्ति । वयं सुपरिवीक्षणं कुर्मः, तावदेव ।'

काळिङ्गः गृहात् बहिः आगत्य कस्मिंश्चित् वसतिमन्दिरे वास्तव्यं कृत्वा स्नानं, भोजनं च कृत्वा स्वबाह्यवस्त्रद्वयमपि स्वयमेव क्षालयित्वा, प्रसार्य शयितः । प्रातः उत्थाय शुष्कवस्त्रं धृत्वा, कस्मिंश्चित् क्षौरापणे मुखक्षौरं सम्पाद्य, शिरसि तैलं विलिप्य, प्रासाध्य उपाहारमन्दिरस्य प्रकोष्ठं परित्यज्य श्रेष्ठिनः गृहं प्रति आगते श्रेष्ठी अवदत् – 'अस्माकं भृत्येन साकं गच्छतु । आगताः धेनूः वयं बहुदिनपर्यन्तं पृथक् न स्थापयामः । इदानीं गोष्ठे कोऽपि सङ्ग्रहः नास्ति । वधालस्य पुरतः अस्मदीयमेव किञ्चित् स्थलम् अस्ति । तत्रत्ये सङ्ग्रहे अन्विष्यतु । लब्धाश्चेत् भवतः अदृष्टम् । नो चेत् वयं न जानीमः ।'

काळिङ्गः पुरषेण साकं बान्द्रावधालयं गतः । वधाङ्गणात् पुरतः विशाले प्राङ्गणे परःसहस्रं धेनवः, मेषाः छागाश्च स्थापिताः । तेषु एव वेणुना एकैकः भागः कृतः आसीत् । कस्मिंश्चित् भागे काळिङ्गं नीत्वा पुरुषः 'एतदेव अस्मदीयम्' इति प्रदर्शितवान् । संहत्य त्रिशताधिकाः वृषभाः धेनवश्च आसन् । काळिङ्गः तेषु एकैकम् अपि परीक्षितवान् । किन्तु तस्य धेनवः न अभिज्ञाताः । तस्य जरद्धेनूनां तुलां भजन्त्यः बह्व्यः धेनवः आसन् । किन्तु तासु कस्याः अपि एषा मदीया इति अभिज्ञाय निर्णयनं तस्य शक्यं नासीत् । कापि धेनुः अपि तस्मिन् समीपं गते प्रीत्या श्वसन्ती शरीरं न लीढवती । मया तासां परिचयः न प्राप्तश्चेत् मास्तु, ताभिस्तु मम परिचयः प्राप्तव्यः खलु ? इत्यालोचितवान् । किन्तु तत्क्षणं स्मृतम्, सः कदाचिदपि स्वगोष्ठस्य धेनूनां गले कण्डूतिं विधाय, आलिङ्ग्य, तासां मुखं परिचुम्ब्य, मुखे स्वहस्तेन सरसतृणं न दत्तवान् आसीत् । अनेकेषु दिनेषु सः एव यन्त्रेण क्षीरं चोषितवान्, सत्यम् । किन्तु धेनवः स्वं स्मरणे उपस्थाप्य अभिज्ञातुं तावन्मात्रं पर्याप्तं किम् ? मम परिचायनशक्तिरहितं स्तरं स्वधेनवः प्राप्तवत्यः सन्ति – इति स्वतः एव भासितम् ।

तत्क्षणं स्मृतम्, यन्त्रेण दोहितक्षीराणां स्तनानां हस्तगृहीतस्तनानां च भिन्नता अस्ति । तदाधारेण स्वधेनूनां परिचायनं शक्यते किम् ? इत्यालोच्य सर्वासां जरद्धेनूनाम् अपि

स्तनान् नतदेहः अपश्यत् । हस्तेन आकृष्टाः स्तनाः लम्बमानाः भवन्ति । यन्त्रेण दोहिताः स्तनाः लघुगात्राः भवन्ति । किन्तु जराकीर्णनात् तासु सर्वे स्तनाः न्यूनान्यूनं समानरीत्या आसन् ।

काळिङ्गो धेनूः परीक्षमाणे एव तम् आनीतवता पुरुषेण उक्तम् – 'समयः अतिक्राम्यति, अहं गच्छानि किम् ?'

'सद्यः दशसु दिनेषु अस्माकं जनपदे व्यागन्मध्ये आरोपिताः धेनवः अत्र कदा आगमिष्यन्ति ?'

'श्रीष्ठिवर्यः मां भवतः विषयम् अवदत् । तत् वक्तुं न शक्यते । कदाचित् चतुर्षु दिनेषु एव आगच्छन्ति । आगमनात् तत्क्षणं वयं पशुवैद्यानां प्रमाणपत्रं कारयित्वा वधार्थं दद्मः एव । एकं दिनम् अधिकं स्थाप्यते चेदपि व्ययः अधिकः भवति ।'

इतःपरं तं प्रष्टुं कोऽपि प्रश्नः काळिङ्गो न अवशिष्टः । सः एकवारं शिरः उन्नमय्य अपश्यत् । एतस्मिन् प्राङ्गणे इतोऽपि शतसङ्ख्यया धेनूनां गणाः आगत्य मिलन्ति स्म । काळिङ्गः पुरुषम् अपृच्छत् – 'एतावत्यः धेनवः भवद्भिः कथं लभ्यन्ते ?'

'क्षेत्रे केदारेषु कर्षित्वा जरद्भिः वृषभैः, क्षीरं प्रदुह्य जरावृताभिः धेनुभिः वा किं प्रयोजनम् ? कृषकाः अस्मत्प्रतिनिधिभ्यः विक्रीणते ।'

स्वेन पृष्टः प्रश्नः, तस्य लभ्यम् उत्तरं काळिङ्गेन न ज्ञातमिति न । तथापि स्वेन किमर्थं पृष्टम् इति बुद्धौ न भासितम् । भृत्यः स्वपक्षतः स्वयं प्रस्थाय गतः । किङ्कर्तव्यतामूढः काळिङ्गः तथैव स्थितः आसीत् । वधार्थम् अगच्छन्त्यः धेनवः आगत्य तं परितः प्रपूरिताः आसन् । सः नत्वा नत्वा तासां जरत्स्तनान् पश्यति स्म । निःशक्तानां वृषभानां स्कन्धं परीक्षते स्म । तथैव स्थितेन तेन स्वशिशुः स्मृतः । सहैव स्वमातुः अपि स्मरणं प्राप्तम् । मात्रा न मर्तव्यम् आसीत् इति मनस्येव अवदत् । ताम् अहमेव मारितवान् इति ग्रामस्थानां वचनं सत्यम् इति स्वस्मिन्नेव स्वयम् अवदत् । माता गता । हिल्डा स्वदेशं प्रस्थाय गच्छेत् अथवा मम श्रद्धां सम्मान्य तिष्ठेत् किम् ? इत्यालोचनम् उद्गतम् । तस्याः आलोचनरीतिं, बौद्धिकविचारान् संस्कारं च परिशीलयामि चेत् सा गच्छेत् एव । किन्तु शिशुः उदरे जाता खलु । तस्मादपि वा तिष्ठेत् इत्याशा उन्मीलिता । किन्तु एषा आशातन्तुः क्षीणशक्तिः आसीत् ।

अहो इति वदन्ती भवति चेदपि नासीत् चिन्ता । मात्रा जीवन्त्या भवितव्यम् आसीत् । तदा अहं हिल्डायाः उक्त्यनुसारेणैव अनुगतः भवितुं शक्नोति स्म । किन्तु स्वयं मरणं

प्राप्य आत्मानं जितवती । इतःपरं कथञ्चित् हिल्डा एव माम् अनुगता भवेत् । तस्याः अनुगमनं कथं साधयितुं शक्यते ? इत्यालोचयन् सः एकवारं शिरः उन्नमय्य अपश्यत् । परितः सङ्गतासु धेनुषु प्राग्भागस्थिताः आकृष्य वधाङ्गणस्य अन्तः नयन्ति स्म । तासु याः काः अपि स्वधेनवः स्युः वा इति आलोच्य समीपं गत्वा अपश्यत् । प्रत्येकं धेनोः मुखमपि स्वधेनूनां मुखमिव भासते स्म । स्वमरणस्य पूर्वप्रज्ञया इव ताः वधाङ्गणस्य अन्तः अगत्वा छलं कुर्वन्ति स्म । काळिङ्गः तासु एकस्याः मुखम् अनिमेषदृष्ट्या अपश्यत् । स्वस्य मरणदिने गोदानावसरे कम्बलस्य उपरि शयितायाः स्वमातुः मुखस्य कला अपि एवमेव स्थिता इव तस्य स्मरणे प्राप्तम् । एतासु स्वकीया इति पृथक्कृत्य अन्वेषणम् अन्धदृष्टिः स्यात् । बधाङ्गणं गन्तुं सङ्गताः एताः परःसहस्रं धेनवः स्वकीयाः एव इति मनसा उक्तम् । तस्य हस्तः कोषे गतः । तान् सर्वान् अपि जरद्धेनूः, वृषभांश्च पालयितुं चैतन्यं स्वस्मिन् नास्तीति बुद्ध्या सः हस्तं बहिः निष्कासितवान् । मातुः मरणदिने संलग्ना निर्वीर्यता इदानीं तस्य पाणिपादम् आवृतवती ।

शिरः चङ्क्रमितमिव अनुभूय दशनिमेषेषु कुक्कुरपादाभ्याम् उपविष्टः । अनन्तरम् उत्थाय पृष्ठतः अनालोक्य बान्द्रास्थानकाभिमुखं पद्भ्याम् आगतः । ट्याक्सियाने उपविश्य दादरनगरम् आगत्य पुणेगमनाय यानं निरीक्षमाणः यदा उपविष्टवान् तदा मनः हिल्डां स्मरति स्म । सा अत्र तिष्ठेत् अथवा प्रस्थाय गच्छेत् – इति प्रश्नः पुनः उद्भूतः । दशनिमेषेषु सः भावविह्वलः जातः । अनन्तरम् अन्यः कश्चन प्रश्नः प्रवृद्धः इति तस्याः अवस्थानस्य अथवा प्रस्थानस्य प्रश्नः पार्श्वे अपसृतः । ट्र्याक्टर् यन्त्रेण कर्षणं, रासायनिकगोभरस्य उपयोगं च आरब्धवतः स्वस्य गवाम् उपयुक्तता का ? क्षीरार्थमेव रक्ष्यन्ते चेत्, जायमानान् वृषभवत्सान् किं कुर्मः ? विना कारणं तेभ्यः तृणानि वितीर्य पोषणं कतिदिनेषु शक्यम् ? बहुधा यथा स्त्रीसन्तानम् एव जायेत तथा गोजननविज्ञानं वर्धितं चेत् समस्या परिहृता स्यात् । क्षीरं वितीर्य जरावृताः धेनूः तासां स्वाभाविकमरणपर्यन्तं तृणं, जलं च वितीर्य संरक्षितुं शक्यन्ते । कृषिव्यवसायार्थं वृषभस्य अवलम्बनं परित्यक्तवता मनुष्येण गोक्षीर–पानाभ्यासोऽपि परित्यक्तश्चेत् समस्या न स्यादिति चिन्तितम् । इदानीं स्वेन किं कर्तव्यम् ? ट्र्याक्टर् विक्रीय पितामहकालिकं वृषभं हलं च प्रारभे किम् ? किन्तु तत्र अस्य अर्थवत्त्वं न भासितम् । अमेरिकास्थानाम् एषः प्रश्नः एव नोदेति । इतरेषां प्राणिनां सत्त्वं मनुष्यस्य उपयोगाय इति ते स्पष्टतया वदन्ति, विश्वसन्ति च । किन्तु अस्माकं ट्र्याक्टर् आवश्यकम्, गोपूजा अपि आवश्यकी ।

तस्य वेङ्कटरमणः स्मरणे उपस्थितः । तस्य विषये खेदः अभवत् । तस्य श्रद्धाशक्तिः महती । किन्तु एतस्य मुख्यप्रश्नस्य सः उत्तरं न वदेत् । 'ट्र्याक्टर्यन्त्रं विच्छिद्य खण्डशः करोतु । अम्बाऽऽ इति गोध्वनिः, ॐ इति मन्त्रध्वनिः, गणगणिति घण्टाध्वनिः – एतैरेव मुक्तिः' इति सरलतया वदति ।

काळिङ्गस्य बुद्धिः उत्तरम् अजानती निस्तेजस्त्वं प्राप्ता । स्वल्पेनैव कालेन रैल्यानम् आगतम् । धावित्वा गतः, आरुह्य स्थलं प्राप्य उपविष्टः । एकस्यामेव घण्टायां कल्याणनगरं प्राप्य, यानं स्थित्वा पुनः यदा अचलत् तदा दक्षिणभागे कश्चन गिरिः दृष्टः । स्वफार्म्-समीपस्थस्य अरुणाद्रेः स्मरणम् अभवत् । तथास्थितस्यैव स्वमातुः स्मरणम् अभवत् । मात्रा न मर्तव्यम् आसीत् इति परिभावितम् । तस्याः विषये स्वेन किञ्चिच्चातुर्येण वर्तितं चेत् तस्याः मनोरोगः नाभविष्यत् । ममैव अपराधः इति भासितम् । किन्तु अन्यस्य कस्यचन प्रश्नस्य वर्धनेन एषः विचारः पार्श्वे अपगतः । एषः केवलं बाह्यवर्तनेन तस्याः अनुमोदकः प्रश्नः नासीत् । प्रयत्ने कृतेऽपि कियत्पर्यन्तम् अनुमोदनं शक्येत । तस्यां श्रद्धावतां कृते तया साकं पर्याप्ताः कथालापाः शक्याः आसन् । बाह्यजगति बाह्यविचारेषु च सा जन्मतः मूका एव । ट्र्याक्टर्प्रापणानन्तरं किञ्चित्पूर्वम् अथवा किञ्चिदनन्तरं तस्याः मरणं, स्वस्य अनाथत्वम् अनिवार्यम् आसीत् वा किम् ! काळिङ्गेन एतस्मिन् आलोचने विशालतया प्रसरन् अर्थतरङ्गः एव अवलोकितः । तत्क्षणं तस्य पूर्णार्थं ग्रहणाय अप्राप्य सः अर्धोन्मीलितं मुखं तथैव निवेश्य उपविष्टः ।

* * *

# भैरप्पवर्यस्य कृतयः (कन्नडभाषायाम्)
## (प्रथममुद्रणक्रमानुसारेण)

### कथाग्रन्थाः

**भीमकाय**

प्रमथं मुद्रणम् - १९५८
द्वितीयं मुद्रणम् - २००५
तृतीयं मुद्रणम् - २००७
चतुर्थं मुद्रणम् - २०१०

**धर्मश्री**

प्रथमं मुद्रणम् - १९६१
द्वितीयं मुद्रणम् - १९६७
तृतीयं मुद्रणम् - १९६९
चतुर्थं मुद्रणम् - १९७१
पञ्चमं मुद्रणम् - १९७७
षष्ठं मुद्रणम् - १९८५
सप्तमं मुद्रणम् - १९९२
अष्टमं मुद्रणम् - १९९९
नवमं मुद्रणम् - २००३
दशमं मुद्रणम् - २००७
एकादशं मुद्रणम् - २००८
द्वादशं मुद्रणम् - २०१०

**दूरसरिदरु**

प्रथमं मुद्रणम् - १९६२
द्वितीयं मुद्रणम् - १९६८
तृतीयं मुद्रणम् - १९७०
चतुर्थं मुद्रणम् - १९७५
पञ्चमं मुद्रणम् - १९८३
षष्ठं मुद्रणम् - १९९१
सप्तमं मुद्रणम् - १९९९
अष्टमं मुद्रणम् - २००३
नवमं मुद्रणम् - २००६
दशमं मुद्रणम् - २००९
एकादशं मुद्रणम् - २०१०

**मतदान**

प्रथमं मुद्रणम् - १९६५
द्वितीयं मुद्रणम् - १९६९
तृतीयं मुद्रणम् - १९७५
चतुर्थं मुद्रणम् - १९८२
पञ्चमं मुद्रणम् - १९८७
षष्ठं मुद्रणम् - १९८७
सप्तमं मुद्रणम् - १९९८
अष्टमं मुद्रणम् - २००२
नवमं मुद्रणम् - २००७
दशमं मुद्रणम् - २०१०

**वंशवृक्ष**

प्रथमं मुद्रणम् - १९६५
द्वितीयं मुद्रणम् - १९६७
तृतीयं मुद्रणम् - १९७०
चतुर्थं मुद्रणम् - १९७१
पञ्चमं मुद्रणम् - १९८१
षष्ठं मुद्रणम् - १९८८
सप्तमं मुद्रणम् - १९९९
अष्टमं मुद्रणम् - २००३
नवमं मुद्रणम् - २००६
दशमं मुद्रणम् - २००७
एकादशं मुद्रणम् - २००८
द्वादशं मुद्रणम् - २००९
त्रयोदशं मुद्रणम् - २००९
चतुर्दशं मुद्रणम् - २०११

**जलपात**

प्रथमं मुद्रणम् - १९६७
द्वितीयं मुद्रणम् - १९६८
तृतीयं मुद्रणम् - १९७३
चतुर्थं मुद्रणम् - १९८३
पञ्चमं मुद्रणम् - १९८७
षष्ठं मुद्रणम् - १९९९
सप्तमं मुद्रणम् - २००३
अष्टमं मुद्रणम् - २००७
नवमं मुद्रणम् - २०१०

**नायि-नेरळु**

प्रथमं मुद्रणम् - १९६८
द्वितीयं मुद्रणम् - १९७१
तृतीयं मुद्रणम् - १९७५
चतुर्थं मुद्रणम् - १९८२
पञ्चमं मुद्रणम् - १९८७
षष्ठं मुद्रणम् - १९९९
सप्तमं मुद्रणम् - २००३
अष्टमं मुद्रणम् - २००६
नवमं मुद्रणम् - २००७
दशमं मुद्रणम् - २००९
एकादशं मुद्रणम् - २०१०

**तब्बलियु नीनादे मगने**

प्रथमं मुद्रणम् - १९६८
द्वितीयं मुद्रणम् - १९७२
तृतीयं मुद्रणम् - १९८१
चतुर्थं मुद्रणम् - १९८५
पञ्चमं मुद्रणम् - १९९८
षष्ठं मुद्रणम् - २००३
सप्तमं मुद्रणम् - २००६
अष्टमं मुद्रणम् - २००९

**गृहभङ्ग**

प्रथमं मुद्रणम् - १९७०
द्वितीयं मुद्रणम् - १९७४
तृतीयं मुद्रणम् - १९८४
चतुर्थं मुद्रणम् - १९९९
पञ्चमं मुद्रणम् - २००१
षष्ठं मुद्रणम् - २००७
सप्तमं मुद्रणम् - २००८
अष्टमं मुद्रणम् - २००९
नवमं मुद्रणम् - २०१०

**निराकरण**

प्रथमं मुद्रणम् - १९७१
द्वितीयं मुद्रणम् - १९७५
तृतीयं मुद्रणम् - १९८२
चतुर्थं मुद्रणम् - १९८७
पञ्चमं मुद्रणम् - १९९९
षष्ठं मुद्रणम् - २००२
सप्तमं मुद्रणम् - २००५
अष्टमं मुद्रणम् - २००७
नवमं मुद्रणम् - २००९

**ग्रहण**

प्रथमं मुद्रणम् - १९७२
द्वितीयं मुद्रणम् - १९८२
तृतीयं मुद्रणम् - १९८७
चतुर्थं मुद्रणम् - १९९९
पञ्चमं मुद्रणम् - २००२
षष्ठं मुद्रणम् - २००७
सप्तमं मुद्रणम् - २००८
अष्टमं मुद्रणम् - २०११

**दाटु**

प्रथमं मुद्रणम् - १९७३
द्वितीयं मुद्रणम् - १९७८
तृतीयं मुद्रणम् - १९९५
चतुर्थं मुद्रणम् - २०००
पञ्चमं मुद्रणम् - २००४
षष्ठं मुद्रणम् - २००६
सप्तमं मुद्रणम् - २००७
अष्टमं मुद्रणम् - २००९
नवमं मुद्रणम् - २०११

**अन्वेषण**

प्रथमं मुद्रणम् - १९७६
द्वितीयं मुद्रणम् - १९८१
तृतीयं मुद्रणम् - १९८५
चतुर्थं मुद्रणम् - १९९७
पञ्चमं मुद्रणम् - २००२
षष्ठं मुद्रणम् - २००६
सप्तमं मुद्रणम् - २००७
अष्टमं मुद्रणम् - २००९

**पर्व**

प्रथमं मुद्रणम् - १९७९
द्वितीयं मुद्रणम् - १९८१
तृतीयं मुद्रणम् - १९८९
चतुर्थं मुद्रणम् - १९९५
पञ्चमं मुद्रणम् - २००१
षष्ठं मुद्रणम् - २००४
सप्तमं मुद्रणम् - २००६
अष्टमं मुद्रणम् - २००७
नवमं मुद्रणम् - २००८
दशमं मुद्रणम् - २००९
एकादशं मुद्रणम् - २०१०

**नेले**

प्रथमं मुद्रणम् - १९८३
द्वितीयं मुद्रणम् - १९८६
तृतीयं मुद्रणम् - १९९९
चतुर्थं मुद्रणम् - २००१
पञ्चमं मुद्रणम् - २००७
षष्ठं मुद्रणम् - २००८
सप्तमं मुद्रणम् - २०१०

**साक्षी**

प्रथमं मुद्रणम् - १९८६
द्वितीयं मुद्रणम् - १९९५
तृतीयं मुद्रणम् - २००२
चतुर्थं मुद्रणम् - २००७
पञ्चमं मुद्रणम् - २००९

**अञ्चु**

प्रथमं मुद्रणम् - १९९०
द्वितीयं मुद्रणम् - १९९५
तृतीयं मुद्रणम् - २००२
चतुर्थं मुद्रणम् - २००६
पञ्चमं मुद्रणम् - २००७
षष्ठं मुद्रणम् - २०१०

**तन्तु**

प्रथमं मुद्रणम् - १९९३
द्वितीयं मुद्रणम् - १९९७
तृतीयं मुद्रणम् - २००३
चतुर्थं मुद्रणम् - २००५
पञ्चमं मुद्रणम् - २००६
षष्ठं मुद्रणम् - २००९

**सार्थ**

प्रथमं मुद्रणम् - १९९८
द्वितीयं मुद्रणम् - १९९८
तृतीयं मुद्रणम् - २०००
चतुर्थं मुद्रणम् - २००६
पञ्चमं मुद्रणम् - २००७
षष्ठं मुद्रणम् - २००९
सप्तमं मुद्रणम् - २०१०

**मन्द्र**

प्रथमं मुद्रणम् - २००२
द्वितीयं मुद्रणम् - २००२
तृतीयं मुद्रणम् - २००३
चतुर्थं मुद्रणम् - २००६
पञ्चमं मुद्रणम् - २००८
षष्ठं मुद्रणम् - २०११

**आवरण**

प्रथमं मुद्रणम् - २००७

द्वितीयं मुद्रणम् - २००७
तृतीयं मुद्रणम् - २००७
चतुर्थं मुद्रणम् - २००७
पञ्चमं मुद्रणम् - २००७
षष्ठं मुद्रणम् - २००७
सप्तमं मुद्रणम् - २००७
अष्टमं मुद्रणम् - २००७
नवमं मुद्रणम् - २००७
दशमं मुद्रणम् - २००७
एकादशं मुद्रणम् - २००७
द्वादशं मुद्रणम् - २००७
त्रयोदशं मुद्रणम् - २००७
चतुर्दशं मुद्रणम् - २००७
पञ्चदशं मुद्रणम् - २००८
षोडशं मुद्रणम् - २००८
सप्तदशं मुद्रणम् - २००८
अष्टादशं मुद्रणम् - २००८
नवदशं मुद्रणम् - २००९
विंशं मुद्रणम् - २००९
एकविंशं मुद्रणम् - २००९
द्वाविंशं मुद्रणम् - २००९
त्रयोविंशं मुद्रणम् - २०१०
चतुर्विंशं मुद्रणम् - २०१०
पञ्चविंशं मुद्रणम् - २०१०
षड्विंशं मुद्रणम् - २०१०
सप्तविंशं मुद्रणम् - २०११

**कवलु**

प्रथमं मुद्रणम् - २०१०
द्वितीयं मुद्रणम् - २०१०
तृतीयं मुद्रणम् - २०१०
चतुर्थं मुद्रणम् - २०१०
पञ्चमं मुद्रणम् - २०१०
षष्ठं मुद्रणम् - २०१०
सप्तमं मुद्रणम् - २०१०
अष्टमं मुद्रणम् - २०१०
नवमं मुद्रणम् - २०१०
दशमं मुद्रणम् - २०१०
एकादशं मुद्रणम् - २०१०
द्वादशं मुद्रणम् - २०१०
त्रयोदशं मुद्रणम् - २०१०
चतुर्दशं मुद्रणम् - २०१०
पञ्चदशं मुद्रणम् - २०१०
षोडशं मुद्रणम् - २०११ .

## साहित्यचिन्तनग्रन्थाः

**सत्य मत्तु सौन्दर्य**

प्रथमं मुद्रणम् - १९६६
द्वितीयं मुद्रणम् - १९७०
तृतीयं मुद्रणम् - १९८३
चतुर्थं मुद्रणम् - १९९९
पञ्चमं मुद्रणम् - २००३
षष्ठं मुद्रणम् - १००७

**साहित्य मत्तु प्रतीक**

प्रथमं मुद्रणम् - १९६७
द्वितीयं मुद्रणम् - १९७८
तृतीयं मुद्रणम् - १९९९
चतुर्थं मुद्रणम् - २००५

**कथे मत्तु कथावस्तु**

प्रथमं मुद्रणम् - १९६९
द्वितीयं मुद्रणम् - १९७८
तृतीयं मुद्रणम् - २००३

**नानेके बरेयुत्तेने**

प्रथमं मुद्रणम् - १९८०
द्वितीयं मुद्रणम् - १९८९
तृतीयं मुद्रणम् - २००३
चतुर्थं मुद्रणम् - २००६

## आत्मवृत्तान्तः

**भित्ति**

प्रथमं मुद्रणम् - २०९६
द्वितीयं मुद्रणम् - २०९७
तृतीयं मुद्रणम् - २०००
चतुर्थं मुद्रणम् - २००६
पञ्चमं मुद्रणम् - २००७
षष्ठं मुद्रणम् - २००९

## भैरप्पवर्यस्य कृतयः संस्कृतभाषायाम्

**धर्मश्रीः**

प्रथमं मुद्रणम् - २०००
द्वितीयं मुद्रणम् - २००६
तृतीयं मुद्रणम् - २०१०

**सार्थः**

प्रथमं मुद्रणम् - २०००
द्वितीयं मुद्रणम् - २००८

**आवरणम्**

प्रथमं मुद्रणम् - २००८
द्वितीयं मुद्रणम् - २००९
तृतीयं मुद्रणम् - २०११

**वंशवृक्षः**

प्रथमं मुद्रणम् - २०१२

**अनाथोऽसि !**

प्रथमं मुद्रणम् - २०१२



'एस्.एल्.भैरप्प' (सन्तेशिवर लिङ्गण्णय्य भैरप्प) इति नाम कन्नडे यथा, तथा अन्यासु अपि भाषासु विख्यातम् अखिलेऽपि भारतवर्षे । साहित्यक्षेत्रे तादृशी अनुपमा सिद्धिः तस्य । तदीयासु कृतिषु जीवनानुभवः यथा प्रतिफलितः भवति तथा न कस्यापि अन्यस्य साहित्यकारस्य कृतिषु इत्यत्र नातिशयोक्तिः । आकर्षिका निरूपणशैली, प्रतिग्रन्थं विभिन्नस्य सामाजिकमुखस्य चित्रणम्, अत्यन्तं समर्थतया पात्रचित्रणम् इत्यादयः तस्य कृतीनां प्रधानगुणाः । पठनसमाप्तेः अनन्तरम् अपि कानिचन दिनानि पठिता पुस्तकोक्तविषये प्रगाढं चिन्तनं यथा कुर्यात् तथा कर्तुं समर्था भैरप्पवर्यस्य लेखनी लोकोत्तरा हि ! अनेकैः पुरस्कारैः सभाजितः भैरप्पवर्यः २०११ तमे वर्षे 'सरस्वतीसम्मानेन' अपि पुरस्कृतः ।



विद्वान् गुण्डमि गणपय्यहोळ्ळः कर्णाटके सुप्रसिद्धे गोकर्णक्षेत्रे संस्कृतमहाविद्यालये प्राध्यापकपदे प्राचार्यपदे च दीर्घकालं यावत् सेवां विधाय ततो निवृत्तः । साहित्यशास्त्रे महतीं गतिं वहता होळ्ळवर्येण बहूनि वर्षाणि यावत् तस्यैव अध्यापनं कृतम् । लेखनकर्मणि अपि महतीं रुचिं वहता तेन सम्भाषणसन्देशपत्रिकायां लिख्यमानः 'निकषोपल'स्तम्भः अतीव जनप्रियः अस्ति । बहूनि गीतानि अपि तेन विरचितानि सन्ति ।




रू. 110.00

ISBN 978-93-81160-51-0